रूपायामन्योन्याभावगर्भायां योग्यतायामव्याप्तेश्च। न च सा न योग्यता। त्वये[1]व लाघवेन व्याप्ते-रिव योग्यताया अपि अन्योन्याभावगर्भाया एव ग्राह्यत्वात् ॥

न चै[2]वमन्योन्याभावगर्भैव योगताऽस्तु। न त्वत्यन्ताभावगर्भेति वाच्यम्। एकपदार्थसंसर्गो[3]ऽ-परपदार्थनिष्ठात्यन्ताभावप्रतियोगी[4]त्यत्यन्ताभाव-गर्भायोग्यत्वज्ञानेऽपि शाब्दधीप्रसङ्गात् ॥

वाह्नेति बुद्धेरभावात्सेकनिष्ठान्योन्याभावप्रतियोगी वह्निसंसर्गो[5]दा-दिरेव न तु [6]संसर्गीति वह्निसंसर्गस्यैव सेकनिष्ठान्योन्याभावगर्भप्रति-योगितावच्छेदकत्वं न तु जलसंसर्गस्येति तस्यैव तादृशप्रमाविशेष्यत्वं न तु जलसंसर्गस्येति वह्निना सिञ्चितीति वाक्यमयोग्यं जलेनेति योग्यमित्ये-तादृशयोग्यतायामत्यन्ताभावगर्भयोग्यतालक्षणस्याभावादव्याप्तिरि[7]त्यर्थः ॥

रुचिदत्तस्तु एकपदार्थसंसर्गत्वे अपरपदार्थसंसर्गनिष्ठान्योन्याभा-वप्रतियोगितावच्छेदकत्वप्रमाविशेष्यत्वाभाव इत्यवदत् ॥

व्याप्तेरिवेति[8] ॥ प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्य-न्ताभावप्रतियोगि यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरि-त्यत्यन्ताभावगर्भव्याप्त्यपेक्षया यत्समानाधिकरणान्योन्याभावप्रतियोगिता-वच्छेदकं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरिति त्वया व्याप्तिवादेऽन्योन्याभावस्य व्याप्यवृत्तित्वेन प्रतियोग्यसमानाधिकरणेति विशेषणैनरपेक्ष्यात् लाघवेनान्योन्याभावगर्भैव व्याप्तिरङ्गमिति[9] यथैवान्यो-

[1] एवकारो नास्ति–रा-ज. त्वयैवेति नास्ति–नं-ज. [2] 'एव'मिति नास्ति–नं. [3] र्गे–नं-ज. [4] गित्वात्यन्ता–नं. [5] र्गादा–उ. [6] जलेत्यधिकम्–उ. [7] प्तेरित्यर्थः–उ. [8] इवेति नास्ति–उ. [9] यथोच्यते तथैव।–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु तदुभयधीरपि प्रत्येकं शाब्द[1]बोधहेतुः। न चाननुगमः। ग्राह्यसंसर्गविरोधिविषयकप्रमाविरह-ज्ञानत्वेनानुगमात्। तथाच न कोपि दोषः। संसर्ग्य[2]न्योन्याभावस्यापि संसर्गविरोधित्वात्। द्रव्ये संयोगात्यन्ताभावस्य संयोगाविरोधित्वात्।

---

न्याभावगर्भयोग्यतायां प्रतियोगिव्याधिकरणेति विशेषणनैरपेक्ष्येण लाघवात्तस्या एव शाब्दबोधाङ्गत्वादिति भावः॥

पक्षधरेणात्र ब्रूम इत्यादिना सिद्धान्तितमाशङ्कते---नन्विति। द्विरूपयोग्यताज्ञानस्याप्यनुगतधर्मानाह---ग्राह्येति। ग्राह्यो यः संसर्गः जलसेकसंसर्गः, तद्विरोधि यदपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वं, अपरपदार्थनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वम्, विरोधित्वस्य तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वरूपत्वस्यात्राभिमतत्वात्, तद्विषयकप्रमा-विरहज्ञानत्वं द्विरूपस्यापि योग्यताज्ञानस्यास्तीत्यानुगमादित्यर्थः॥

न कोपि दोष इत्युक्तं व्यञ्जयन्नत्यन्ताभावस्य संसर्गविरोधित्वं व्यक्तमिति तत्राव्यप्त्यभावमप्रदर्श्य अन्योन्याभावगर्भयोग्यतायामव्याप्तिदोषस्तावन्नेत्याह—संसर्गेति[3]। वह्निसंसर्गान्योन्याभाववति वह्निसंसर्गस्यादर्शनादिति भावः। द्रव्यं संयोगीत्यात्राव्याप्तिदोषो नेत्याह---द्रव्य इति। संयोगाविरोधित्वादिति। संयोगसंसर्गाविरोधित्वादित्यर्थः। एवं च तत्र संयोगस्याव्याप्यावृत्तितया स्वाधिकरणद्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि तस्य ग्राह्यसंयोगसंसर्गाविरोधित्वेन विरोध्यभावप्रतियोगित्व-प्रमाविशेष्यत्वाभावादेः सत्त्वान्नाव्याप्तिरित्यर्थः॥

यदपि गन्धप्रागभावसमानकालीन इत्यादिनातिव्याप्तिकथनं तदपि

---

[1] धांहे-रा-नं-ज. [2] र्गान्यो—नं-ग. संयोग्य—क. [3] र्गांति—ज.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गन्धप्रागभावस्यापि भिन्नकालीनगन्धेन सहाविरोधेपि तात्पर्यविषयेण समानकाली[1]नगन्धेनविरोधादिति

चेन् नैवम्[2] ॥

अत्र ह्याद्यपक्षे तात्पर्यविषयीभूतान्वयविरोधिप्रमाविरहो योग्यता । द्वितीये तात्पर्यविषयभूतान्वयविरोधिधर्मशून्यत्वं योग्यतेति फलितोर्थः । तथाच समभिव्याहृतशब्दतात्पर्यविषयस्यान्वयस्य सत्त्वं वा तदविनाभूत[3]प्रमाणाविरोधो वा योग्यतेत्ये[4]वास्तु । किमनया कुसृष्ट्या । ताव-तैव[5] निश्चिताप्रामाण्यकेऽग्निना सि[6]ञ्चादित्यादावनिश्चिताऽप्रामाण्यके जलेन सिञ्चतीत्यादौ चा-

---

नेत्याह—गन्धेति । विरोधित्वादिति । तथाच तत्र गन्धस्य ग्राह्यसंसर्गविरोध्यभावप्रतियोगित्वमेवेति नातिव्याप्तिरित्यर्थः । अत्र हीति । एकपदार्थेत्यादि मण्युक्तलक्षणद्वय इत्यर्थः। फलितार्थ इति । त्वदुक्तविवक्षारीत्येति भावः । तदिति । उक्तरूपान्वयसत्त्वाविनाभूत इत्यर्थः । इत्येवास्त्विति । अन्यथान्योन्याभावगर्भयोग्यतासत्त्वेऽत्यन्ताभावगर्भायोग्यताज्ञानादन्वयबोधापत्तेः । कारणतावच्छेदकावच्छिन्नयत्किंचित्कारणसत्त्वे एव कार्योत्पत्तेः । न चेष्टापत्तिः । ग्राह्यसंसर्गविरोध्यवगाहित्वेनावश्यं तस्य तत्प्रतिबन्धकत्वादितिभावः । अनिश्चितेति । तत्र वि[7]वादस्यानिश्चयादनिश्चितेत्युक्तम् ।

---

[1] लेन–ग. अग्रेप्यवमस्ति. [2] चेन्न–रा. [3] तःप्र–रा-ग. [4] एवकारो नास्ति–रा. [5] एवकारो नास्ति–रा. [6] ञ्चये–नं. [7] विसंवा–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नाप्तवाक्ये[1]ऽनतिव्याप्तेः । त्वदीयद्वितीयलक्षणस्य जलेन सिञ्चतीत्यनाप्तवाक्येऽतिव्याप्तेश्च ॥

इयं हि विषयसत्त्वरूपा योग्यता स्वरूपसत्येवानाप्तवाक्ये लक्षणस्यानतिव्याप्त्यर्थमुक्ता । न तु सत्तया ज्ञाततया वा शाब्दप्रमाकारणत्वेनोक्ता । शाब्दप्रमायां तस्या वा[2] तद्विषयज्ञानस्य वा हेतुत्वायोगत् ॥

उक्तं चैतत्प्रामाण्यस्वतस्त्वे । भ्रमसाधारणे[3]

---

अनतिव्याप्तेरिति । अनाप्तोक्तत्वादेव तद्वाक्येऽन्वयस्यास[4]त्यत्वादिति भावः । त्वदीयेति । त्वदीयेत्यादिनोक्त इत्यर्थः । जलेनेत्यादौ सेकान्वयविरोधिवह्नित्वरूपधर्मशून्यत्वसत्त्वादिति भावः ॥

नन्वेवं शाब्दप्रमाहेतोर्योग्यताया विषय[5]सत्त्वरूपत्वे शाब्दप्रमाया गुणजन्यत्वेन [6]प्रमायाः परतस्त्वापत्तिरित्यत आह—इयं हीति । स्वरूपसत्येवेत्युक्तैवकारव्यावर्त्यं[7] व्यनक्ति—न त्विति । तस्या वेति । योग्यताया वेत्यर्थः । कथं न हेतुत्वमित्यत आह—उक्तं चैतदिति । शाब्दप्रमायां[8] योग्यता तज्ज्ञानं वा न हेतुरित्येतत्प्रत्यक्षप्रमादावनुगतगुणभङ्गे शाब्दप्रमानुगतगुणखण्डनप्रस्तावे उपपादितं चेत्यर्थः ॥

नन्वेवं शाब्दज्ञानमात्रेऽपि योग्यता न हेतुः स्यात् । तथाचानिश्चितायोग्यतावाक्यादपि धीप्रसङ्गः । न चायोग्यतानिश्चयविरहो हेतुः । गु[9]रुत्वेन योग्यतायां एव हेतुत्वौचित्यादित्यत आह—भ्रमेत्यादि ।

---

1 नातिव्या–रा. प्यनति–ज. 2 'वा' इति नास्ति–रा. 3 णशा–रानं–क. 4 सत्त्वा–उ. 5 यत्वरू–उ. 6 प्रमायां इति नास्ति–उ. 7 वृत्त्यर्थं व्य–उ. 8 या यो–उ. 9 णत्वे–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शाब्दज्ञाने त्वाकाङ्क्षासत्ती अयोग्यतानिश्चयविरहश्च हेतव[1]इत्यस्तु । न तु योग्यता । न वा तज्ज्ञानम् ॥

यद्यपि योग्यताज्ञानादयोग्यतानिश्चयविरहो गुरुः । तथाप्य[2]सावसंसर्गाग्रहरूपत्वात्प्रत्यक्षादिविशिष्टज्ञाने क्लृप्त आवश्यकश्च ॥

किंच योग्यतायाः संसर्गात्मकत्वेन तज्ज्ञानस्य शाब्द[3]संसर्गज्ञानहेतुत्व आत्माश्रयः स्यात् ॥

वस्तुतस्तु अयोग्यतानिश्चयविरहो[4]पि न शाब्दधीहेतुः । किं त्वाकाङ्क्षासत्ती एव । तथात्वे हि

---

असावति । अयोग्यतानिश्चयाविरह इत्यर्थः । क्लृप्त इति । हेतुत्वेनेति योज्यम् । आवश्यक इति ॥ तदभावे शाब्दज्ञानानुदयादिति भावः ॥

योग्यताज्ञानहेतुत्वे विपक्षे बाधकं चाह—किञ्चेति । ननु असंसर्गाग्रहरूपतया यद्ययोग्यतानिश्चयविरहः शाब्दधीहेतुः स्यात्तर्हि यत्सामान्यविशेषन्यायेनाविद्यमानासंसर्गाग्रहः, प्रमामात्रेऽविद्यमानायोग्यता[5]निश्चयविरहश्च शाब्दप्रमायामनुगतो गुणो हेतुः प्राप्नोतीति प्रामाण्यस्य परतस्त्वापत्तिः । शाब्दसाधारण्या[6]नापत्तिः । प्रतिवाद्यादिवाक्यादितोऽर्थज्ञानाभावापत्तिश्चेत्यत आह— वस्तुतस्त्वति ॥

कुत इत्यतो विपक्षे बाधकमाह—तथात्वे हीति । अयोग्यता-

---

1 'इत्यस्तु' इति नास्ति–रा-नं-ग. 2 'असौ' इति नास्ति–रा-नं. 3 ब्दधीहे–नं. संसर्गधी–ज. 4 'अपि' इति नास्ति–रा. 5 निश्चयपदं न–उ. 6 ण्याप–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अयोग्यत्वेन निश्चितस्य प्रतिवादिवाक्यस्यावोधकतया कथावधिरकलहः स्यात् । अग्निना सिञ्चतीत्यादि[1]वाक्यादपि सामग्रीसत्त्वादप्रमात्वेन निश्चितं प्रवृत्त्यजनकं ज्ञानं जायत एव । कथमन्यथा तन्निराकरणम् । उक्तं च सुधायाम् "मेरुः सर्षप इत्या[2]दिवाक्यान्मेरो[3]रपि सर्षपत्वेन प्रतिभासा-" दिति ॥

एतेन संशयसाधारणं योग्यताज्ञानं शाब्दधीहेतुरिति, योग्यताभ्रमः शाब्दभ्रमहेतुरीति च

निश्चयविरहस्य शाब्दधीहेतुत्व इत्यर्थः । कथेत्यनुवादः । वधिरकलह इति विधिः । प्रतिवादिवाक्यात्पदार्थोपस्थितौ [3] मानसः संसर्गबोध इति तु शब्दकरणकत्वानुभवविरुद्धम् । अन्यथा आप्तवाक्यस्थलेप्येवं सुवचत्वेन शब्दप्रामाण्यं दत्तजलाञ्जलि स्यादिति भावः । तर्हि अग्निनेत्यादिवाक्यादप्यर्थधीः स्यात्ततश्च प्रवर्तेतापि पुरुष इत्यत आह— अग्निनेति । सामग्रीति । आकाङ्क्षासत्तिरूपसामग्रीसत्त्वाज्ज्ञानं जायत इत्यन्वयः । अप्रामाण्या[4]निश्चायकवाधावताररूपसामग्रीसत्त्वान्निश्चिता । प्रामाण्यमिति नान्वयः । अत एव प्रवृत्त्यजनकमित्यर्थः । उक्तं चेति । [5] जिज्ञासाधिकरणे—

"विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतम् ।"

इत्येतद्व्याख्यायामख्यातिपक्षखण्डनावसरे उक्तमित्यर्थः । योग्यताज्ञानस्य

[1] दावपि-ज. [2] आदिपदं न—रा-ग. [3] तौ नसंस—उ. [4] ण्यनि—उ.
[5] जिज्ञासाधिकरण इति नास्ति—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निरस्तम्। अयोग्यत्वनिश्चयेऽपि शाब्दधीदर्शनात्। दृश्यते च परोक्तयोग्यतासंदेहाभावेपि गेहे घट इति वाक्याज्झडिति[1] संसर्गधीः। परोक्तयोग्यता वा तत्प्रमा वा शाब्दप्रमायां हेतुरिति तु प्रामाण्यस्वतस्त्वे निरस्तम् ॥

ननु—प्रकृतप्रमाणविरोधरूपप्रतियोगिनोऽप्रामाणिकत्वात्तदभावः कथं प्रामाणिकः स्यादिति चेत्काऽत्र[2] कथं ता। प्रतियोग्यप्रामाणिकत्वस्याभावप्रामाणिकत्वं प्रत्येव प्रयोजकतायाः शुक्तिरूप्य-

---

शाब्दज्ञानव्यतिरेकव्यभिचारमाह—अयोग्यत्वेति। योग्यतासंदेहस्यापि व्यतिरेकव्यभिचारमाह—दृश्यते चेति। परोक्तेति। एकपदार्थसंसर्ग इत्यादिना परोक्तेत्यर्थः ॥

यद्वा भवदुक्तान्वयसत्त्वादिरूपयोग्यताज्ञानस्या[3] हेतुत्वेऽपि परोक्तयोग्यताज्ञानस्य तत्प्रमायाश्च शाब्दभ्रमज्ञाने [4] तत्प्रमयोः स्यादित्यत आह—दृश्यते चेत्यादिना। प्रामाण्यस्वतस्त्व इति। प्रत्यक्षादिप्रमा[5] स्वनुगतहेतुत्वभङ्ग इत्यर्थः।

नन्वस्त्वेवमन्वयसत्त्वं योग्यतेति पक्षः। प्रमाणाविरोधो योग्यतेति पक्षो न युक्तः। यत्किञ्चित्प्रमाणाविरोधस्यातिप्रसङ्गितया प्रकृतग्राह्यसंसर्गाभावावगाहिप्रमाणाविरोध एव योग्यतेति वाच्यम्। स च न युक्त इत्याशङ्क्य समाधत्ते—नन्वित्यादिना। जलेन सिञ्चतीत्यादौ प्रकृतजलसंसर्गाभावावगाहि प्रमाणेत्यर्थः। तादात्म्यस्यासत एव सदुप-

---

1 'झडिति' इति नास्ति—नं-ज सहजेत्यधिकम्—क. 2 तत्र—नं. 3 स्यहे—उ. 4 नतत्प्रम—उ. 5 णस्या—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तादात्म्यादौ दर्शनात् । प्रपञ्चितं चैतन्न्यायामृते । एतदेवाभिप्रेत्योक्तं पद्धतौ "प्रतीतार्थस्य प्रमाणविरोधाभावो योग्यता । तत्प्रतिपादकत्वात्पदान्यपि योग्यतावन्ती"ति ॥

यत्तु—प्रमाणलक्षणटीकायामन्योन्यान्वययोग्यतावदर्थाभिधायकत्वं योग्यत्वमित्युक्तम् । तन्निश्चिताप्रामाण्यकादग्निना सिञ्चितीत्यादिवाक्याद्व्यावृत्तयोग्यतानिरूपणपरम् । न तु जलेन सिञ्चतीत्य[1]-

रागेण भ्रान्तौ भानस्य चिरन्तनमते स्वीकारात् शुक्तिरूप्यतादात्म्यादावित्युक्तम् ॥

ननु कथमसतो निःस्वरूपस्यात्यन्ताभावप्रतियोगित्वं नाम धर्म उपपद्यतामित्यत आह—प्रपञ्चितं चैतदिति । धर्मिसत्तानिरपेक्षधर्मत्वादिना प्रपञ्चितमाद्यपरिच्छेदेऽसतोत्यन्ताभावप्रतियोगित्वसमर्थनवाद इत्यर्थः । ग्रन्थान्तरोक्तयोग्यतालक्षणस्यासदर्थके जलेन सिञ्चितीत्याद्यनाप्तवाक्येऽतिव्याप्तिमाशङ्क्य तत्साधारण्यमेवाभिप्रेतमतो न दोष इत्याह---यत्त्वित्यादिना । एवं तर्हि तद्वाक्यस्यापि प्रमाणशब्दत्वापत्तिरित्यतो "निर्दोषवाक्य[2]मागम" इति निर्दोषत्वविशेषणेनैव तन्निवारणादन्यथा निर्दोषेति व्यर्थमापद्यत इति भावः । एवं वेदस्यापौरुषेयत्वे आप्तवाक्यत्वरूपलक्षणाभावे[3]ऽप्रामाण्यमिति शङ्किते निर्दोषवाक्यरूपलक्षणेनैव प्रामाण्यम् । वाक्यत्वं चाकाङ्क्षायोग्यताऽऽसत्तिमत्पदकदम्बत्वमित्यभिप्रेत्याकाङ्क्षादिस्वरूपं चोपपाद्योत्तरप्रसङ्गमुपक्षिपन्नुपसंह-

[1] त्याद्यनु—ग. [2] 'क्यमाह आगमइति' इत्यस्ति—उ. [3] वादप्रा—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नाप्तवाक्यव्यांवृत्तयोग्यतानिरूपणपरम् । तद्यावृत्ते-
र्निर्दोषत्वविशेषणेनैव सिद्धेरिति ज्ञेयम् ॥

तस्माद्वेदस्यापौरुषेयत्वेपि प्रामाण्यसंभवात्तस्य
विष्णावेव शक्तितात्पर्ये युक्ते इति ॥

इति योग्यता [1] ॥ ३ ॥

## अथ शक्तिवादः ॥ ४ ॥

ननु—स्वरूपसहकार्यतिरिक्तशक्तौ मानं नेति

---

रति—तस्मादिति । उक्तरीत्या निर्दोषवाक्यत्वादिरूपलक्षणासंभवा-
दित्यर्थः । शक्तीति । पदानां शक्तिरेव तत्समुदायवेदस्यापि शक्ति-
रिति भावः । तात्पर्यं तत्प्रमितिशेषत्वं प्राग्वेदापौरुषेयत्ववादे व्यक्तम् ॥

एवं चादिवर्जितैराम्नायैरा[2]ख्यातेत्युक्तं युक्तमिति भावः ॥

इति योग्यतावादः [3] ॥ ३ ॥

## [4] अथ शक्तिवादः ॥ ४ ॥

विष्णावेव शक्तितात्पर्ये इत्यु[5]क्तम् । अतीन्द्रियशक्तावेव माना-
भावादिति भावेन लिङ्गपादे "अत्ताचराचरग्रहणा" दित्यधिकरणसुधायां
"स्वरूपसहकारिसमवधानातिरिक्तशक्तिरेव नास्तीति केचिदि" त्यादिना
"आस्तां प्रपञ्च" इत्यन्तेन संक्षेपेण शक्तिसमर्थनं कृतं, तत्स्पष्टं विवृ-
ण्वानः शक्तिमाक्षिप्य समाधत्ते—स्वरूपेत्यादिना ॥ शब्दादिस्वरूप-
तत्सहकारिभ्यामन्यशक्तावित्यर्थः ॥

---

[1] निरूपणमित्यधिकम्—रा. 'वाद' इत्यधिकम्—नं. [2] रादरेणाख्या—उ.
[3] ३५. इत्यस्ति—उ. [4] इदं नास्ति—उ [5] इत्ययुक्तम् उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चेन्न । यादृशात्करतलानलसंयोगाद्दाहो जायते तादृशादेव मण्यादिसमवधाने न जायत इति मण्यादिविघटनीयशक्तिसिद्धेः । तत्र दृष्टसामग्र्याः सत्त्वेन तद्विलम्बेन वा तत्संपादकादृष्टविलम्बेन वा दाहविलम्बायोगात् ॥

---

क्वचिदे[1]वं शक्तिसिद्धौ शब्दे [2]सा सेत्स्यतीति भावेनोपपादनसौकर्याय प्रसिद्धवह्नौ तावत्साधयति—यादृशेति । दाहाभावस्य कारणवैकल्यनिमित्तकत्वशङ्काव्युदासायोक्तं यादृशात्तादृशादेवेति । न जायत इति । दाह इत्यनुषङ्गः । एतेन मण्यादेर्दाहादिप्रतिबन्धकत्वं प्राप्तं, ततः किमित्यत आह—इति मण्यादीति । इतिशब्दो हेत्वर्थः । मण्यादेः प्रतिबन्धकत्वान्यथानुपपत्तिरेव वह्न्यादिगतातीन्द्रिय शक्तौ मानम् । कार्यानुकूलकिञ्चिद्धर्मविघटकत्वरूपत्वात्प्रतिबन्धकत्वस्य कार्यानुकूलकिञ्चिद्धर्मश्च शक्तेरन्यो न युक्त इति भावः । एतच्चोपलक्षणम् । वक्ष्यमाणार्थ[3]पञ्चकेनापीत्यपि ध्येयम् ॥

ननु—मण्यादेः प्रतिबन्धकत्वमेवासिद्धम् । मण्यादिसन्निधिस्थले दाहाभावस्य दाहसामग्र्यभावेन वा दाह[4]सामग्रीसम्पादकादृष्टाभावेन वोपपत्तेरित्यतस्तादृशादेवेत्युक्तिकृत्यं व्यञ्जयन्प्रतिबन्धकत्वं तावद्दृढयति—तत्रेति । मण्यादिसन्निधिस्थल इत्यर्थः ॥

नन्वस्त्वेवं मण्यादेः प्रतिबन्धकत्वं तथापि साक्षाद्दाहजनकादृष्टनाशकत्वेन वा दाहप्रतिकूलदुरदृष्टजनकत्वेन वा स्वाभावरूपदाहका-

---

[1] दतीन्द्रियशक्ति–उ. [2] तत्से–उ. [3] र्थापत्तिपं–उ. [4] सामग्रीपदं न–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च दृष्टसामग्र्याः सत्त्वेपि मणिरेव साक्षाद्दाहजनकमदृष्टं नाशयतीति वाच्यम् । तादृशादृष्टे मानाभावात् । अन्यथा[1]न्त्यतन्तुसंयोगादौ सत्यपि कदाचित्पटानुत्पत्तिः स्यात् । वन्ध्यापुंसं[2]प्रयोगादावपि साक्षाज्जनकादृष्टविलम्बान्न विलम्बः । किंतु नापुत्रस्य लोकोस्तीति श्रुत्याऽपुत्रस्य नरकोक्त्या तज्जनकस्य दुरितस्यावश्यकत्वेन दाहं प्रति मणेरिव दुरितस्यैव पुत्रोत्पत्ति[3]प्रतिबन्धकत्वात् ॥

न चैवमदृष्टस्य कुत्राचिदपि साक्षाज्जनकत्वाभावे

---

रणविघटकत्वेन वा मण्यादेः प्रतिबन्धकत्वोपपत्तौ न तदन्यथानुपपत्त्याऽतीन्द्रियशक्तिसिद्धिरित्यतः आद्यं तावदाशङ्क्य निराह—न च दृष्टेति । तादृशेति । साक्षाज्जनक[4]प्रतिबन्धकनाश्यादृष्ट इत्यर्थः । पटादीति । तत्रापि [5]कदाचित्त्वदुक्तादृष्टाभावसंभवादिति भावः । एतच्चोपलक्षणम् । मणिकृदुक्तदिशा मण्यपसरणानन्तरं दाहा[6]भावप्रसङ्गादन्वयव्यतिरेकाभ्यां क्लृप्तत्वेन मण्याद्यभावरूपदाहकारणाभावेनैव दाहाभावोपपत्तेश्चेत्यपि ध्येयम् ॥

ननु वन्ध्यासंप्रयोगादौ दृष्टाव्यभिचाराददृष्ट[7] विलम्बो वाच्य इत्यत आह—वन्ध्येति । नन्वदृष्टं क्वचित्साक्षाज्जनकम् । अन्यथा दृष्टसामग्रीरहितस्थले साक्षादहेतुत्वे दृष्टसामग्र्यामप्यहेतुत्वापत्त्या परंपरया हेतुरपि न स्यादतः कथं तादृशादृष्टं नेत्युच्यत इत्यत आह—न चैवमिति ।

---

[1] अन्त्यपदं न–नं-ज्ञ. [2] सं यो–रा-क. [3] त्तिं प्रति प्रतिबन्धकत्वात्–रा-नं-ग. [4] के–उ. [5] कदाचिदिति नास्ति–उ. [6] हप्रभा–उ. [7] विलम्बादेवेत्यधिकम्-उ.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

परंपरया जनकत्वमपि न स्यादिति वाच्यम् । दृष्टसामग्रीरहिते सर्गाद्यकालीने कार्येऽदृष्टस्य साक्षाज्जनकत्वस्वीकारात् ॥

अस्तु वा दाहादावपि साक्षाज्जनकमदृष्टं, तथापि न तन्मण्यादि[1]विनाश्यम् । अदृष्टस्यादृष्टनाशकत्वेन विहितेतरफलमात्रनाश्यत्वात् । अन्यथा मण्यादिनाऽदृष्टनाशशङ्कया वैदिके कर्मणि निष्कम्पप्रवृत्तिर्न स्यात् ॥

नापि—मणिना दाहप्रतिपक्षादृष्टजननाद्दाहविलम्बः, प्रतिपक्षादृष्टजनने शौचाद्यनपेक्षादिति

---

न तन्मण्या[2]विनाश्यमिति । येन मण्यादेः प्रतिबन्धकत्वं शक्तिं विनाप्युपपन्नं स्यादिति दोषः कुतो नेत्यत आह—अदृष्टस्येति । प्रबलदुरितादृष्टस्य पुण्यादृष्टनाशकत्वेन प्रबलपुण्यादृष्टस्य दुरितादृष्टनाशकत्वेन मण्यादेरनाशकत्वादित्यर्थः । अदृष्टस्य विहितादिजन्यत्वाद्विहिते[3]तरनाश्यत्वेपि फलमात्रनाश्यत्वेन मण्यादिरूपेण विहितेतरेणानाश्यत्वादित्यर्थः । कीर्तनादेरप्युपलक्षणम् । 'धर्मः क्षरति कीर्तनात्' इत्यादेः । यद्वाऽदृष्टस्य नाश्यत्वादित्यन्वयः । अदृष्टनाशकत्वेन यद्विहितं प्रायश्चित्तादि तदितरेण फलमात्रेण नाश्यत्वादित्यर्थः । मण्यादि त्वदृष्टनाशकतया विहितेतरदपि न फलरूपमिति न तन्नाशकमिति भावः ॥

द्वितीयं निराह—नापीति । प्रतिपक्षेति । प्रतिकूलेत्यर्थः ।

---

[1] दिना दृष्टिं विनाश्यं इत्यस्ति–रा. [2] ण्यादिवि–उ. [3] तैर–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वाच्यम् । [1]प्रतिपक्षादृष्टस्यापि मणितुल्यतया तद्विघटनीयत्वेनैव शक्तिसिद्धेः ॥

नापि—मण्याद्यभावरूपदृष्टकारणाभावादेव दाहविलम्बः; अभावस्यापि[2] भाववद्ग्राहकतौल्येन कारणत्वात्; त्वयापि विशेषादर्शनेन भ्रमस्य, विहिताकरणेन प्रत्यवायस्य, निर्दोषत्वादिना वेदप्रामाण्यादेश्च स्वीकृतत्वादिति वाच्यम्। उत्तेजकसमये मणिसत्त्वेपि दाहदर्शनेन मण्याद्यभावस्याहेतुत्वात् ॥

तस्मान्मण्यादिना प्रतिबन्धदशायां दाहजनका-

---

शौचाचमनादेरभावे कथमदृष्टजन्मेत्यत आह—प्रतिपक्षेति ॥

ननु—प्रतिकूलादृष्टस्य मण्यादिजन्यस्य न शक्तिविघटकत्वेन दाहप्रतिबन्धकता, किं तु प्रतिकूलादृष्टान्तरजनकत्वेनेति चेत्तर्ह्यनवस्थापत्तिः। एवं तर्हि स्वाभावरूपदाहकारणविघटनरूपत्वेन प्रतिपक्षादृष्टस्य दाहप्रतिबन्धकताऽस्त्विति चेन्न । एवं हि मण्यादेरेव तथात्वोपपत्तौ किं प्रतिपक्षादृष्टजन्मकल्पनया ॥

नन्वस्तु तर्हि तथैवेत्यतस्तृतीयं पक्षं सयुक्तिकमाशङ्क्य निराह—नापीति । वाच्यमित्यन्वयः । भाववत् भावस्य कारणत्ववत्। अभावस्य हेतुता न केवलं युक्तिसिद्धा प्रतिवादिसिद्धा चेत्याह—त्वयापीति । अदर्शनाकरणनिर्दोषपदैरभावस्यैव प्रतीतेरिति भावः । आदिपदेन कुड्य-

---

[1] प्रतिपक्षेत्यारभ्य नास्ति–रा. [2] स्याभा–रा.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दृष्टस्य मण्यादिना नाशाद्वा मण्यादिना दाहप्रतिकूलादृष्टजननाद्वा मण्याद्यभावरूपदृष्टकारणविरहाद्वा दाहानुत्पत्तिरिति लीलावत्याद्युक्तं पक्षत्रयमप्ययुक्तम् ॥

लीलावत्या[1]द्युक्तशक्त्यपलापप्रकारभङ्गः ॥ ४ ॥

## अथ शक्तौ श्रुत्यादिनिरूपणम् ॥ ५ ॥

अत्र नैयायिकाः[2]—

उत्तेजकाभावविशिष्टमण्याद्य[3]भावरूपदृष्टकारण [4]विरहादेव दाहानुत्पत्त्युपपत्तेर्न शक्तिसिद्धिः ॥

---

संयोगाभावस्य गतावनुपलब्धेश्चाभावज्ञाने हेतुत्वदृष्टेरिति गृह्यते । तस्मादित्युक्तमेव हेतुत्रयं व्यनक्ति—मण्यादिनेति ॥

लीलावत्यु[5]क्तशक्त्यपलापभङ्गः ॥ *४ ॥

## अथ शक्तौ श्रुत्यादिनिरूपणम् ॥ ५ ॥

यत्त्वनुमानखण्डे मणावीश्वरवादानन्तरं लीलावत्याद्यभिमतशक्त्यपलापप्रकारं निरस्य स्वयं प्रकारान्तरेणापलापप्रदर्शनं कृतं तदप्युच्यत इत्यादिना न युक्तमिति वक्तुमनुवदति—"अत्र नैय्यायिका" इत्यादिना—"तस्मान्न शक्ति" रित्यन्तेन । उत्तेजकं प्रतिबन्धक-

---

[1] आदिपदं न–नं. [2] कः–ज. [3] एतादृशस्थळे आदिपदं न–रा. [4] णाभावादे–नं-ज-ग. [5] लाद्यु–उ. *३६–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु—मण्याद्यभावानां न तावन्मण्याद्यभावत्वेन कारणत्वम् : अननुगमात् । नापि प्रतिवन्धकत्वा[1]भावत्वेन अन्योन्याश्रयात् । कारणीभूताभावप्रतियोगिन एव प्रतिवन्धकत्वात् । मन्त्रसत्त्वेपि मण्य[2]भावमात्रेण दाहापत्तेश्च । तस्यापि प्रतिवन्धकाभावत्वात् । न हि यावत्कारण[3]समवधान एव कार्यम् । एकदण्डसमवधानेपि घटोत्पत्तेरिति चेन्मैवम् । दण्डचक्रादिकूटवत्सकलानां मण्यादी[4]नां संसर्गाभावकूटस्य दाहजनकत्वेनाननुगमान्योन्याश्रययोरभावात् ॥

एतेन—दाहकाले सकलानां मण्यादिसंसर्गाभावानां कूटोऽसम्भ[5]वी, [6]मणिध्वंसकाले तत्प्रा-

---

प्रतिवन्धकं, तदभावविशिष्टो यो मण्यादिस्तदभावेत्यर्थः । मण्याद्युक्तं मणिमन्त्रौषधाद्यभावानां कूटस्थ[7]कारणत्वं शङ्कोत्तराभ्यां व्यनक्ति—नन्वित्यादिना ॥

अन्योन्याभावव्यावृत्त्यर्थं प्रागभावादिसाधारणाभावलाभं[8] चाह—संसर्गाभावकूटस्येति । सकलपदस्य मण्यादेर्विशेषणत्वेनोक्तौ कृत्यं व्यनक्ति-- एतेनेति । एतच्छब्दार्थं स्फुटीकरोति—साकल्यस्येति । अभावविशेषणत्वे हि स्यात् त्वदुक्तदोषः । न चैवमित्यर्थः । प्रतिवन्धकाभावेनोक्तौ कृत्यं व्यनक्ति—एतेनेति । [9]प्रतिवन्धकाभावत्वेन

---

[1] काभा–नं-ज-ग-क.  [2] ' ण्याद्य '–रा-नं.  [3] ' जातीय ' इत्यधिकम्–रा-नं-ज-ग.  [4] दिना सं–रा.  [5] भावी–नं.  [6] मणिपदं न–रा.  [7] टस्य–ड.  [8] भायाह–ड.  [9] प्रतिवन्धकेत्यादि नास्ति–ड.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गभावस्यासम्भवादिति निरस्तम् । साकल्यस्य प्रतियोगिविशेषणत्वेनोक्ततया सर्वेषां मण्यादीनामेकैकस्य संसर्गाभावस्य दाहकाले सत्त्वेन तादृशाभावकूटस्यापि तत्काले सत्त्वात् ॥

किंच कार्यानुत्पत्तिव्याप्यत्वं प्रतिबन्धकत्वमिति पक्षे प्रतिबन्धकत्वावच्छिन्नाभावः कारणम् । स च यत्किंचित्प्रतिबन्धकसत्त्वदशायां नास्तीति न तदा दाहप्रसङ्गः । नाप्यन्योन्याश्रयाननुगमौ । प्रहरं मा दहेति सावधिमन्त्रपाठे मन्त्रस्य झडिति नाशेपि मन्त्रप्रयोक्तृपुरुषाभिप्रायविषयः कालविशेष

कारणत्वेपि न प्रागुक्तदोष इति भावेन "यद्वा प्रतिबन्धकत्वावच्छिन्नप्रतियोगिकोऽभावः कारण" मित्यादिना मण्युक्तमेवाह—किंचेति । कार्यानुत्पत्तिः कार्या[1]प्रागभावो व्याप्तिश्च कालिकीति भावः । प्रतिबन्धकत्वेति । मणिमन्त्राद्यनुगतप्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकाभावत्वेन [2]न मण्याद्यभावस्य कारणत्वमित्यर्थः ॥

मन्त्रसत्त्वेपि मण्याद्यभावमात्रेण दाहापत्तिरूपप्रागुक्तदोषो नेत्याह—स चेति । मन्त्रसत्त्वस्थले मणित्वाद्यवच्छिन्नाभावसत्त्वेपि एकप्रतिबन्धकसत्त्वे प्रतिबन्धकत्वावच्छिन्नाभावो नेति न दाहप्रसङ्गदोष इति भावः । नाप्यन्योन्याश्रयेति । कारणीभूताभावप्रतियोगित्वपक्ष एवास्य दोषस्योक्तेरिति भावः ॥

ननु—व्यभिचारात्कथं मन्त्राद्यभावः कारणमित्यतो व्यभिचारं निराह—प्रहरमिति । निषेधार्थकमाशब्दोयम् । न माङ् । तेन "माङि

[1] र्यप्राग–ङ.  [2] 'न' इति नास्ति–ङ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एव प्रतिबन्धक इति न कोपि दोषः ॥

तस्मान्न शक्ति[1]सिद्धिरिति। उच्यते—

"परास्य शक्तिर्विविधैव श्रूयते। स्वाभाविकी"[2]

"विचित्रशक्तिः पुरुषः पुराणो,"

"न चान्येषां शक्तयस्तादृशाः स्युः"

"सर्वैर्युक्ता शक्तिभिर्देवता सा"

---

लुङिति" लुङा भाव्यमिति न शङ्क्यम्। मण्यादेः प्रतिबन्धकत्वान्यथानुपपत्तिरूपार्थापत्तेर्नैयायिकोक्तान्यथोपपत्तिमग्रे निरासिष्यन्, एकत्र शक्तिसिद्धौ[3] अन्यत्र शब्दादावपि तदनुमानमिति भावेन, परमेश्वरे शक्तिसत्त्वे तावत्—

"ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः।
नित्यानन्दोव्ययः पूर्णो भगवान्विष्णुरुच्यते ॥
इति पैङ्गश्रुतिश्चाह शक्तिसद्भाव एव तु"

इत्य[4]त्राधिकरणानुव्याख्यानाद्युक्तदिशा श्रुत्यादिरूपमानोक्त्या शक्तौ मानं नेत्ये[5]तावत्तावन्निराकरोति—परास्येति। अस्य भगवत इत्यर्थः। ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रिया चेति विग्रहः। विचित्रेति वाक्यान्तरम्। तादृशास्तादृश्यः। सर्वैर्युक्तेति वाक्यान्तरम्। सर्वैः सर्वाभिः। लिङ्गव्यत्ययात् ॥

"परेति यां प्राहुरजस्रशक्तिम्"।

इति वाक्यशेषः। "एता आत्मनि चैवं विचित्राश्च हि" इत्यादि सूत्रभाष्योक्ताः। तावता न सर्ववस्तुषु शक्तिलाभ इत्यतो रामानुजभाष्योक्त-

---

[1] सिद्धिपदं न-रा-नं. [2] 'ज्ञानबलक्रिया च' इत्यधिकम्-रा-नं-ज-ग-क
[3] द्धावपि तदनु-उ. [4] त्त्वाधिक-उ. [5] तत्तावन्निराह-उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"परेति यां प्राहु" रित्यादि श्रुत्या

"शक्तयः सर्वभावानामचिन्त्य[1]ज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः" ॥

इत्यादिस्मृत्या च शक्तिसिद्धेः[2] ॥

न चेयं स्वरूपमात्रपरा । अस्येतिषष्ठ्या विचित्रशक्तिरिति बहुव्रीहिणा शक्तिभिर्युक्तेति युक्तशब्देन सम्बन्धित्वेन विविधैवेति विचित्रेति च बहुविधत्वेन शक्तिभिः शक्तय इति बहुत्वेन चोक्तेः ॥

नाप्यागन्तुकसहकारिपरा ॥

"न तस्य कार्यं कारणं च विद्यत" ॥

इति वाक्यशेषे सहकारिनिषेधात् स्वाभाविकत्वाजस्रत्व[3]योरुक्तेश्च ॥

नापि प्रतिबन्धकाभावपरा । भावत्वोक्तेः ।
"अचिन्त्य[4]ज्ञानगोचरा" इति बीजादिनिष्ठशक्तेरप्यतीन्द्रियत्वोक्तेश्च ॥

---

विष्णुपुराणस्मृतिमाह—शक्तय इति । सर्गाद्याः सृष्ट्यादिविषया भावशक्तयः भावरूप[5]शक्तय इति वा स्वभावशक्तय इति वाऽर्थः । श्रुत्यादेरन्यथोपपत्तिं निराह—न चेय[6]मित्यादिना । वाक्यशेष इति । परास्य शक्तिरित्यस्य पूर्ववाक्ये न तस्य कार्यं [7]काराणजन्यकारणं न

---

[1] न्त्या-रा. [2] द्धः-नं-ज-रा-क. [3] उभयत्र 'त्व' इति नास्ति-रा. नं. आदौ नास्ति-जं. अन्ते नास्ति-रा. [4] न्त्या-रा. [5] पाः श-उ. [6] चैव-उ. [7] करणं च-उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"अन्योन्यानन्तरवलाः क्रमादेव[1]प्रकीर्तिताः"॥
इत्यादिस्मृत्या इदमिह शक्तं, इदं शक्ततरं, इदं तु शक्ततममिति लोकव्यवहारेण गुरुत्वादाविव शक्तौ तारतम्यप्रतीतेश्च ॥

इति शक्तौ श्रुत्यादिनिरूपणम्[2] ॥ ५ ॥

## अथ शक्तावर्थापत्तिपञ्चकम् ॥ ६ ॥

किंच दण्डादेरन्वयव्यतिरेकाभ्यां [3]घटादिकारणत्वं तावदनुमीयते । तत्र न तावत्पूर्व[4]वृत्ति-

---

वियत इत्युक्तेरित्यर्थः । इत्यादि[5]स्मृत्येति ॥

"भीमश्च वलभद्रश्च मद्रराजश्च वीर्यवान् ॥
चतुर्थः कीचक[6]स्तस्मात्पञ्चमं नानुशुश्रुम" इति ॥

अन्योन्यानन्तरेति । विराटपर्वगतस्मृत्येत्यर्थः । तारतम्यप्रतीतेश्चेयं नामावपरेत्यन्वयः । अभावे तारतम्याभावादिति भावः ॥

इति शक्तौ श्रुत्यादिनिरूपणम् ॥* ५ ॥

## अथ शक्तावर्थापत्तिपञ्चकम् ॥ ६ ॥

श्रुत्याद्यनुग्राहकार्थापत्तीरपि शक्तौ मानत्वेन विवक्षुरादौ कारणत्वस्यान्वयव्यतिरेकगम्यत्वा[7]न्यथानुपपत्तिरूपार्थापत्तिं सुधोक्तां तावद्व्यनक्ति—किंच दंडादेरिति । अनुमीयत इति । तस्य प्रत्यक्षत्वे घटादिप्रत्यक्षस्येवा-

---

[1] वं-रा. [2] नात्र प्रकरणविभागः—नं-ज-क. [3] घटपदं न-रा. [4] वर्तित्व—नं-ज-ग. [5] श्रुत्ये—ङ. [6] स्तेषां पं—ङ. *३७—ङ. [7] नुपपत्ति—ङ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वमात्रं लिङ्गम्। रासभादावपि सत्त्वात् ॥

नापि नियमविशेषितम् । अन्यथासिद्धेऽपि सत्त्वात् । तस्मात्प्रत्यक्षसिद्धं कारणता[1]त्वेन त्वदभिमतमनन्यथासिद्धनियतपूर्ववृत्तित्वमेव लिङ्गं वाच्यम् । न च तदेव [2]तेनानुमेयमिति तदनुमेयातीन्द्रियशक्तिसिद्धिः । न च तत्र स्वरूपयोग्यतारूपं दण्डत्वमनुमेयम् । तस्य प्रत्यक्षत्वात्॥

---

न्वयाद्यपेक्षा न स्यात्। कारणत्वमेव शक्तिपदार्थ इति कारणता[3]वादे माणिकृदुक्त्यातीन्द्रियत्वावगतेश्चेति भावः । अन्वयव्यतिरेकौ[4] नाम अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपो यस्मिन् सति यन्नियतं यदभावे च यदभावो नियत इत्येवंरूपत्वादन्वयव्यतिरेकयोः । एवं च तत्र कारणत्वानुमापकं ।किं विशेष्यमात्रं नियमविशेषितं ।विशेष्यं वा कृत्स्नं विशिष्टं वा । आद्ययोः साध्याविशिष्टत्वदोषाभावेपि व्यभिचारान्न लिङ्गत्वमित्याह—तत्र न तावदिति । अन्यथासिद्धेपीति । घटाकारणे तद्गतरूपकारणे मृत्पिण्डरूप इत्यर्थः । कारण[5]त्वेनेति । कारणत्वरूपत्वेनेत्यर्थः ॥

कारणत्वस्योक्तरूपलिङ्गानुमेयान्यथानुपपत्तिरूपार्थापत्तेरन्यथोपपत्तिं त्रेधाऽऽशङ्क्य निराह— न चेत्यादिना। कारणतावच्छेदकस्यैव स्वरूपयोग्यतारूपत्वाद्दण्डत्वमित्युक्तम् । तस्येति । उक्तरूपावच्छेदकत्वस्ये-

---

[1] णत्वेन–रा. नं. ज. क. [2] तत्रा–नं-क-ज. [3] णत्रा–ड. [4] कौना–ड. [5] तात्वे–ड.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नापि—सहकारिसमवधानरूपं फलोपधानमनु-
मेयम्। दण्डे सहकार्यसमवधानेऽपि [1] तद्व्यवहारात्।
शिलादौ तत्समवधानेऽपि [2] कारणत्वाव्यवहाराच्च॥

नापि—दण्डत्वस्यानन्यथासिद्धिविशिष्टनियमा-
वच्छेदकत्वमनुमेयम्। तस्य हेतुशरीर एव प्रवे-
शात्। एतदेवाभिप्रेत्योक्तं सुधायाम्—"ततो-
न्वयव्यतिरेकसमधिगम्यमतीन्द्रियमेव किञ्चिन्मृ-
दादीनां घटादिकारणत्वमभ्युपगमनीयम्। तदेव
च शक्ति" रिति॥

व्याप्तिग्राहकप्रत्यक्षेण तु नियमरूपा रसरूपा-
दिसाधारणी व्याप्तिरेव गृह्यते। न तु शक्तिरूपा-
कारणता। तस्या नित्यातीन्द्रियत्वात्॥

---

त्यर्थः। अनन्यथासिद्धनियतपूर्ववृत्तित्वान्यूनानधिकवृत्तित्वस्य हेतुत्वेन वाच्यत्वात्तस्यैवोक्तरूपावच्छेदकत्वादिति भावः। सुधायामिति। "अत्ताचराचरग्रहणा" दित्यधिकरणे—

"इति पैङ्गिश्रुतिश्चाह शक्तिसद्भाव एव तु"।

इत्यादिश्लोकव्याख्यानावसर इति ध्येयम्॥

ननु—वह्न्यादौ सति दाहादिस्तदभावे तदभाव इति दाहादेर्वह्न्यादिना व्याप्तिग्राहकप्रत्यक्षेणैव दाहकारणत्वं वह्न्यादेर्गृह्यते। यद्वा यत्र धूमस्तत्राग्निरित्यादिव्याप्तिग्राहकप्रत्यक्षेण [3] कारणता गृह्यत इति कथमनुमेयतोक्तिः। [4] एतदन्यथाऽनुपपत्त्या शक्तिसिद्धिरित्यत आह—व्याप्तीति॥

---

[1] कारणत्वव्य—रा. नं. ज. ग.　[2] तदव्य—रा.—तदव्यवधानेपि तदव्य—ग
[3] 'कारणत्वं'—इत्यारभ्य नास्ति—ज.　[4] येन त—ज

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च [1]व्यभिचरितं सहचारदर्शनं नियमरूपव्याप्तेरपि कथं ग्राहकम्, ग्राहककोटौ नियमप्रवेशे चात्माश्रय इति वाच्यम्। तस्याञ्जनादिवद्व्याप्तिग्राहकप्रत्यक्षसहकारित्वेनाव्यभिचारानपेक्ष[2]णात्॥

किञ्च जलस्य जलत्वेन पिपासोपशामकत्वं तावदनुमीयते। तत्र च न तावत्फलोपधानमनुमेयम्। बाधाद्व्यभिचाराच्च। किं तु पिपासोपशमनकारणत्वमात्रम्। तच्च न तावदनन्यथासिद्धनियतपूर्ववृत्तित्वरूपम्। तस्य पूर्वमेवज्ञातत्वात्। कथमन्यथा जलत्वस्य व्याप्तिग्रहः॥

---

ननु व्याप्तिरेव गृह्यत इत्ययुक्तम्। सहचारदर्शनस्य वा[3] नियतसहचारदर्शनस्य वा तदनिर्णायकत्वादित्याशङ्क्य समाधत्ते—न चेति॥ तस्य सहचारदर्शनस्येत्यर्थः॥

जलस्य पिपासोपशामकत्वानुमित्यन्यथानुपपत्तिश्च शक्तौ मानमिति भावेनाह—किञ्चेति। अर्थापत्तेरन्यथोपपत्तिं निराह—तत्र चेति। किं त्वित्यादिना वक्ष्यमाणपक्षापेक्षया तावच्छब्दः। बाधादिति। तत्रानुमित्यनन्तरं प्रवृत्तस्य जलपानानन्तरमेवोदन्यानिवृत्तिरूपफलोपलम्भात्क्वचिदप्रवृत्तिपानाभावयोरपि संभवाच्चेति भावः। व्यभिचारादिति। जलत्वोपेतस्य सर्वस्याप्युक्तफलोपधाने मानाभावात्प्रत्यग्रोत्पन्नविनष्टजले फलोपधानाभावाच्च व्यभिचार इति भावः॥

---

[1] चाव्य—रा. [2] क्षत्वा—नं. [3] नियतेत्यादि वा इत्यन्तं नास्ति—ङ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नापि सहकारिविरहप्रयुक्तकार्याभाववत्त्वरूपम्। सहकारिशब्देन स्वेतरकारणस्यैव विवक्षणीयत्वेनात्माऽश्रयात्[1]। भाविसहकारिविरहशङ्कया फलार्थिनो निष्कम्पप्रवृत्त्ययोगात्। तावता[2] त्वदुक्तनिर्वचनस्य सहकारिविरहः[3] कार्यप्रागभावस्योत्तरकालसंबन्ध[4]कारणमित्येतदर्थकतया कारणत्वमज्ञात्वा कार्याभावस्य सहकारिविरहप्रयुक्तत्वस्य ज्ञातुमशक्यतयाऽ[5]त्माश्रयाच्च। प्रागभावेऽव्याप्तेश्च। सहकारिसाक[6]ल्यसमवधानदशायां दण्डादेरहेतुत्वापाताच्च[7]। तस्मादतीन्द्रियं शक्तिरूपं कारणत्व-

---

[8] प्रकारान्तरेण पिपासोपशमकारणत्वस्वरूपमाशङ्क्य निराह—नापीति। सहकारिविरहप्रयुक्तः सहकारिविरहेणोत्तरसमयसंबन्धविशिष्टतया जन्यो यस्तृप्तिरूपकार्यस्य प्रागभावस्तद्वत्त्वं पिपासोपशमनकारणत्वमित्यर्थः। तावता त्वदुक्तनिर्वचन[9]। भूतप्रागभावस्य प्रागभावान्तराभावात्तत्र सहकारिविरहप्रयुक्तघटप्रागभावरूपकार्याभाववत्त्वरूपत्वदुक्तकारणत्वाभावाद्घटादिप्रागभावेऽव्याप्तेरित्यर्थः। दण्डादेरहेतुत्वेति। तदा प्रागभावसत्त्वेपि तस्य सहकारिविरहप्रयुक्तत्वाभावात्। न चेष्टापत्तिः। सर्वदा तत्र हेतुत्व[10]व्यवहारादिति भावः। तस्मादिति। पिपासोपशमनकारणत्वस्य शक्तितोऽन्यस्यायोगादित्यर्थः॥

---

[1] सहकारिशब्देनेत्यादि नास्ति—नं. ग. [2] 'तावता' इति नास्ति—नं. ज. क. [3] हप्रयुक्तका—नं. [4] न्धःकारणमित्यज्ञात्वा—नं. न्धकारणमित्यज्ञात्वा—ज. क. [5] कारणत्वमज्ञात्वेत्यादि नास्ति—ग. [6] ल्येतरस—रा. इतरसमव—ज. समवधानेति नास्ति—ग. [7] प्रागभावेत्यादि नास्ति—नं. [8] आका—उ. [9] "स्येति। इत्येतदर्थकतयेत्यन्वयः। आत्माश्रयेति। कारणत्वरूपनिर्वचने कारणपदप्रवेशादित्यर्थः। प्रागभाव इति। घटादिकारणी" इत्यधिकम्—उ. [10] तुव्य—उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मे[1]वानुमेयमिति शक्तिसिद्धिः ॥

एतदप्युक्तं सुधायाम् । "ततोऽतीन्द्रियमेवे" त्यादिना ॥

किंचानन्यथासिद्धनियतपूर्ववृत्तित्वमेव कारणत्वं चेद्रासभादौ तदभावो न तावदन्यथासिद्ध्या । नियतपदवैयर्थ्यात् ॥

नापि—पूर्ववृत्तित्वस्यानियतत्वेन । व्यक्त्यपेक्षया नियमस्य दण्डादावप्यभावात् । जात्यपेक्षया नियमस्य च रासभेऽपि प्रसङ्गात् । संभवति [2]ह्यनादौ संसारे घटजातीयाद्रासभजातीयस्य [3]कदाचिदपि व्यवहितपूर्ववृत्तित्वनियमः ॥

नाप्यव्यवहितपूर्ववृत्तित्वस्यानियतत्वेन । व्यव-

---

रासभादेरकारणत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिरिति भावेनाह—किंचान[4]न्यथेति । चेदित्यनन्तरं रासभादेर्घटादिकं प्रति कारणत्वाभावो न स्यादि[5]ति शेषः । कुतो न स्यादित्यत आह—रासभादावित्यादि । पूर्ववृत्तित्वस्यानियतत्वेनेति । रासभादौ तदभाव इत्यनुषङ्गः । किं व्यवहितपूर्ववृत्तित्वस्यानैयत्येन रासभादौ कारणत्वाभावोऽन[6]भिमत उताव्यवहितपूर्ववृत्तित्वस्यानैयत्येनाति । आद्ये रासभादावातेप्रसङ्गं व्यनक्ति—संभवति हीति । अन्त्यं निराह—नापीति । अनि-

---

1 'एव' इति नास्ति–रा. णत्वेनानु–ज. 2 'नह्यनादौ' इत्यस्ति–नं. ज.
3 'कदाचिदपि' इति नास्ति–रा. 4 चान्यथा–उ. 5 त्यर्थः–उ. 6 वोऽभि–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हित[1] नियतपूर्ववर्तिनो यागादेः स्वर्गाद्यहेतुत्वा-पातात् । सापूर्वस्य यागस्याव्यवहितत्वमस्तीति चेन्न । पूर्वं प्रतीतेन यागस्य स्वर्गहेतुत्वेन पश्चाद-पूर्वस्य कल्पनीयतया तदव्यवहितत्वस्य कारणत्व-शरीरे प्रवेशायोगात् । अन्यथाऽपूर्वं वाच्यं स्यात् ॥

तस्मादतीन्द्रियशक्तिरेव कारणत्वम् । तां च प्रति स्वाश्रयजातीयस्य फलाव्यवधानं व्यापकम् । यागस्य च भोजनादेस्तृप्तिं प्रतीव स्वर्गं प्रति स्वरूपेणाव्यवधानं न सम्भवती[2]त्यनुभवस्य स्मृतिं प्रतीव व्यापार[3]द्वाराऽव्यवधानं वक्तव्य-मित्यपूर्वकल्पना युक्ता ॥

---

यतत्वेनेत्यनन्तरं पूर्ववदनुषङ्गः । सापूर्वस्येति । अपूर्वसहितस्येत्यर्थः । तदिति । अपूर्वाव्यवहित[4]स्येत्यर्थः । वाच्यं [5]स्यादिति । त्वन्मत इष्ट-साधनत्वस्यैव लिङादिवाच्यतया गुरुमत इवापूर्वस्य लिङादिवाच्यत्वा-भावात् । सापूर्वस्य स्वर्गाव्यवहितपूर्ववृत्तित्वरूपकारण[6]त्वस्य याग-निष्ठस्य विध्यर्थत्वेऽपूर्वमपि लिङादिवाच्यम् स्यात् न त्वर्थापत्तिकल्प्य-मित्यपसिद्धान्त इति भावः । शक्तिरेवेति । तथा च रासभादौ तद-भावादेव कारणत्वाभाव इति नातिप्रसङ्ग इति भावः । नापि यागाद्या-वब्याप्तिप्रसङ्गादित्यत आह—तां चेति । शक्तिं चेत्यर्थः । स्वाश्रय-

---

[1] नियतपदं न—नं. ज. [2] ति । अतो—रा. [3] द्वारपदं न—नं. [4] तत्व-स्ये—उं. [5] च्यत्वं स्या—उ. [6] णस्य —उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एतदप्युक्तं सुधायाम्—अतीन्द्रियमेवेत्यादिना ॥
नन्वेवं शक्तिः कारणत्वं चेत्सा कारणं न स्यात्।
तथाच शक्तिर्दाहानुकूला न स्यादिति चेन्न[1]।
कारणत्वस्यापि कारणस्येव कार्यप्रागभावव्या-
प्यप्रागभावप्रतियोगित्वरूपानुकूलत्वाश्रयत्वात् ॥
केचित्तु प्रतिबन्धकाभावत्वेन कारणत्वेऽन्यो-
न्याश्रयान्मण्याद्यभावकूटस्य कारणता त्वयोक्ता।
तथाचाननुगतानां तावदभावानां कारणता तत्त-

---

स्येत्येवोक्ता[2] वरण्यस्थदण्डे व्यभिचारः स्यादतः स्वाश्रयजातीयस्ये-त्युक्तिः। एतदपीति। रासभादेश्चा[3]कारणत्वान्यथानुपपत्त्याऽप्यतीन्द्रियशक्ति[4] सिद्धिरित्येतदपीत्यर्थः ॥

शक्तेः कारणत्वरूपत्वे बाधकमाशङ्कय निराह—नन्वेवमिति। व्याप्ये[5]ति। व्याप्तिः कालिकी ध्येया। दण्डादेः कारणस्येव तच्छक्तेरपि तादृशप्रागभावप्रतियोगित्वादिति भावः। प्रकारान्तरेण शक्तिसिद्धि-मन्यापदेशेनाह—[6]केचित्त्विति। अन्योन्येति। मण्याद्यभावानां प्रति-बन्धकाभावत्वे[7]ज्ञाते तदभावानां कारणत्वज्ञानं कारणत्वज्ञाने च सति कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वज्ञानं सति च तस्मिन् प्रति-बन्धकाभावत्वेन तदभावानां कारणत्वज्ञानमित्यन्योन्याश्रयाद्धेतोरभाव-कूटस्य कारणता त्वयोक्तेत्यर्थः ॥

ततश्च किमित्यतः स्वाभिमतसाध्यमाह—तथाचेति। अभाव-

---

[1] 'न' इति नास्ति—रा. [2] क्तौ वनस्थ--उ. [3] श्चका--उ. [4] क्तिरि—उ. [5] प्त्येति—उ. [6] 'केचित्त्विति' इति नास्ति—उ. [7] त्वज्ञाने कार—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दनन्तनिष्ठानं[1] न्तधर्माणां कारणतावच्छेदकत्व-मिति कल्पनाद्वरं शक्तिकल्पनम्। अन्यथा तत्रापि समवायो न सिध्येत्। क्लृप्तैरनन्तैः स्वरूपसम्ब-न्धैरेव विशिष्टप्रतीत्युपपत्तेरित्याहुः ॥

किञ्चैवमुत्तेजकाभावविशिष्ट[2]मण्यभावस्य हेतुत्वं स्वीकृत्य शक्त्यपलापे प्रायश्चित्ताभावसहकृत-सन्ध्यावन्दनाद्यकरणस्य नरकहेतुत्वसंभवात्त[3]न्नि-वर्त्यमपि दुरितापूर्वं न सिध्येत् ॥

एवं ज्योतिष्टोमादि[4]जन्यमपूर्वमपि न सिध्येत्। अन्वयव्यतिरेकाभ्यां साङ्गयागप्रागभाव[5]विशिष्टा-

कूटस्य कारणत्वे सतीत्यर्थः। अन्यथा कल्पनागौरवानादर इत्यर्थः। तत्रापीति। जातिगुणक्रियाविशिष्टप्रतीतयो विशेषेण[6] संबन्धनिमित्तका इत्यादिरूपेण समवायमनुमिमानस्य तत्रेत्यर्थः। अत्र पक्षेऽरुचिबीजं तु-प्रतिबन्धकाभावानां वक्ष्यमाणदिशा विशिष्टविधित्वादिनाऽनुगतिपक्षेऽस्य दोषस्याभावात् अन्यथानुपपत्त्या शक्तिकल्पनानवकाश इति बोध्यम्। तथाऽपि तत्परीत्या परस्यापादनसंभवादेतत्पक्षावतार इत्यदोषः ॥

अपूर्वप्रतिबन्धाऽपि शक्तिं साधयति—किञ्चैवमिति। पूर्वत्र श्रुत्यादिनिरूपणवादे अत्र नैयायिका इत्यादिनोक्तरीत्यै[7]वशब्दार्थः। अपूर्वमपीति। यागजन्यापूर्वमपीत्यर्थः। कथं तर्हि चिर[8]ध्वस्तयागादेः स्वर्गादिहेतुतेत्यत आह — अन्वयेति। उपपत्तेरित्येतद्व्यनक्ति—

[1] नां तद्धर्म—रा. [2] प्रतिवन्धकाभावहे—रा. नं. वस्य हे—ज. ग. [3] त् प्रायाश्चित्तेन निव—रा. प्रायश्चित्तनिवर्त्य—ज. ग. [4] साध्यम—ग. [5] इतः। संभवात्' पर्यन्तं नास्ति—ग. [6] षण—उ. [7] त्यंत्यैवं—उ. [8] न्तनया—उ.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्माभावस्यैव स्वर्गादिफलहेतुत्वोपपत्तेः। आत्मनः स्थायित्वेन विशेष्याभावाभावेपि प्रागभावरूपविशेषणाभावेन विशिष्टाभावसंभवात् ॥

नचास्य[1] विशिष्टाभावस्यानन्तत्वेन फलानन्त्यं [2]स्यादिति शङ्क्यम्। सावधिकफलबोधकश्रुतिबलादपूर्वस्येवोक्तस्य विशिष्टाभावस्यापि सावधिकफलजनकत्वस्वभावकल्पनात् ॥

अपिच यत्र देवदत्तादिशरीरं प्रत्यक्षेण गृहीतं प्रत्यक्षान्तरेणानुमानादिना वा पुनर्नानुभूतं तत्रापि

---

आत्मन इति। इष्टापूर्तादिकारिणो यजमानात्मनः स्थायित्वेऽपि तस्य कृतयागादित्वेन तत्र तत्प्रागभावाभावाद्विशेषणाभावप्रयुक्तो विशिष्टाभावः सुलभ एव, मण्यादिसत्त्वदशायामुत्तेजके सत्युत्तेजकाभावविशिष्टमण्याद्यभावसत्त्ववदिति भावः ॥

ननु यागस्यैव प्रागभा[3]वविरोधितयाऽऽशुतरविनाशियागनाशे प्रागभावोन्मज्जनान्न विशेषणाभावसंभव इति चेन्न। यागस्येव तद्ध्वंसस्यापि तत्प्रागभावविरोधित्वात् ॥

प्रतिबन्धकाभाववैषम्यमाशङ्क्य निराह—न चेति। सावधिकेति॥ "अमृतो वा व सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्य" इत्यादिश्रुतीत्यर्थः। यथा फलानन्त्यशङ्का नास्ति तथा प्रतिबन्धन्तरमाह—अपि चेति। अनुभव[4]प्रसङ्गभावरूपविशेषणस्याभावो-

---

[1] स्यापि–नं. [2] 'स्यादिति' इति नास्ति रा. [3] वाभावतया–उ.
[4] प्रागभा–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तच्छरीरस्मृतिस्तावदुत्पद्यते। तां च स्मृतिं प्रत्यन्वयव्यतिरेकाभ्यां तदनुभवप्रागभावविशिष्टात्म[1] विरहः स्मृतिपर्यन्तस्थायी कारणमस्तु। कृतमनुभवस्य स्मृतिहेतुत्वमङ्गीकृत्य तन्निर्वाहाय संस्कारकल्पनया ॥

न चात्र स्मृतिरूपफलसा[2] तत्यशङ्काऽवकाशोप्यस्ति। संस्कारकल्पनापक्ष इव सदृशादृष्टचिन्तादिसहकारिवैकल्यादेव फलाभावोपपत्तेः ॥

यदि च [3]तत्र स्वर्गस्मरणादौ क्लृप्तकारणभावस्य यागानुभवादेरेव लाघवेन भावरूपापूर्वसंस्कार[4]द्वारा कारणत्वं व्यवस्थाप्य तदभावात्कार्याभावोपपादनं; तर्हीहापि [5]दाहे क्लृप्तकारणा[6]भावस्य वह्नेरेव लाघवाद्भावरूपशक्त्या कारणत्वं निर्वाह्य तदभावात्कार्याभाव उपपाद्यताम्। कृतमुत्त[7]म्भकाभावविशिष्टप्रतिबन्धकाभावस्य हेतुत्वकल्पनया ॥

तस्मात्प्रतिबन्धकाभावो न हेतुरिति प्रतिबन्ध-

---

पपादनायोक्तं प्रत्यक्षान्तरेणानुमानादिना वा पुनर्नानुभूतमिति। कृतमिति। अलमित्यर्थः। प्रागुक्तदोषोऽत्र नेत्याह—न चात्रेति। प्रतिबन्दीद्वये परमुखेनैव समाधिं वाचयित्वाऽत्रापि तथेत्याह—यदि चेति ॥

---

[1] त्माभावः—रा. [2] सांत—रा. नं. ग. [3] तत्रेति नास्ति—रा. [4] रादि—रा नं. ग. [5] दाह इति नास्ति—रा. [6] णभा—रा, णस्य भा—नं. [7] त्तेजका—रा.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कसमये शक्त्यभावादेव दाहाभावो वक्तव्य इति शक्ति सिद्धिः ॥

ननु-शक्तिपक्षे [1]प्रतिबन्धकेन पूर्वस्याः शक्तेर्नाशात्प्रतिबन्धकापनये वोत्तेजकसमवधाने वा कथं पुनर्दाहः। यदि च ताभ्यां शक्त्यन्तरोत्पादस्तदाऽननुगतस्यापि प्रतिबन्धकाभावस्य हेतुत्वं तवापि-समानमिति चेन्न। सत्ये[2]व कुठारे [3]कदाचित्कुण्ठ-त्ववत्सत्येव संस्कारे कदाचिदनुद्बोधवत्सत्यामेवा-नुमितिसामग्र्यां संशयोत्तरप्रत्यक्षस्थलेऽनुमित्य-भाववत्सत्येवापूर्वे कदाचिदविपाकवच्च सत्यामेव शक्तौ तस्याः[4] कदाचित्कुण्ठीभावलक्षणावस्थाविशे-षस्य कल्पनात् ॥

उक्तं हि सुधायां "व्यक्तिशब्देन शक्तेरेवा-वस्थाविशेषस्य विवक्षितत्वा" दिति ॥

किंचास्तु त्वया वक्ष्यमाणे [5]पक्षचतुष्टये त्वद-

---

शक्तिपक्षे बाधकमाशङ्क्यानेकदृष्टान्तपूर्वं निराह—नन्वित्यादिना। उक्तं हीति। अत्रा चराचरेत्यधिकरणसुधायाम् शक्तेरवस्था विशेष एव न तु शक्त्यन्तरमित्येतदुक्तमित्यर्थः। शक्तिर्व्यक्त्यात्मनाऽस्तीत्युक्तौ कानामव्यक्तिरिति पृष्टस्योत्तरं वक्ति—शब्देनेत्यादिना ॥

मण्यादेः प्रतिबन्धकत्वान्यथाऽनुपपत्त्या च शक्तिसिद्धिरित्याह—किंचेति। वक्ष्यमाण इति। विशेषणविशेष्यतत्संबन्धानामभावत्रयं वा

---

[1] क्षेपि-रा. नं. ज. क. [2] त एव-रा. ज. स्वत एव-नं. क. अत ए-ग. [3] रस्य-रा. नं. ज. ग. क. [4] स्यां-ग. [5] णप-ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नभिमते विशिष्टं पदार्थान्तरमिति पक्षे च कथंचि-
द्विशिष्टाभावस्यानुगमः कारणता च। तथाऽपि
मण्यादे[1]र्लोकसिद्धं कार्यानुकूलकिंचिद्धर्मविघटक-
त्वरूपं प्रतिबन्धकत्वं न स्यादिति मण्यादेः प्रति-
बन्धकत्वान्यथाऽनुपपत्त्या शक्तिसिद्धिः ॥

न च मणिः कार्यानुकूलविघटनरूपः प्रतिबन्ध-
एव, न तु प्रतिबन्धकः, तत्प्रयोक्ता पुरुष एव
तु प्रतिबन्धकः, मणौ प्रतिबन्धकव्यवहारस्तु
उपचाराद्वा स्वार्थे कप्रत्ययाश्रयणाद्वेति वाच्यम्।
मुख्ये बाधकाभावात् । मणिना प्रतिबद्ध इति
व्यवहारानुसारेण प्रतिबन्धक इत्यत्रापि कर्तर्था[2]क-
प्रत्ययस्यैवौचित्याच्च ॥

---

विद्यमानस्यापि प्रतिबन्धकरूपविशेष्यस्यैव प्रतियोगितावच्छेदकभेदेना-
भावो वा देशान्तरस्थानामुत्तम्भकाभावविशिष्टानां मण्यादीनामत्रत्या-
भावो वा विशेषणविशेष्ययोर्यः संबन्धस्तदभावो वा कारणमित्युत्तरभङ्गे
वक्ष्यमाण इत्यर्थः । कर्त्रर्थकप्रत्ययस्येति । "ण्वुल्तृचाविति" कर्तरि
विहितण्वुल्प्रत्ययस्येत्यर्थः ॥

ननु—कारणीभूतस्वाभावप्रतियोगित्वरूपप्रतिबन्धकत्वमेव मण्या-
देरिति मते शक्तिसिद्धिर्नेत्यतः शक्तिं विना तदेवायुक्तमित्याह-

---

[1] पुनः 'मण्यादे' रित्यन्तं नास्ति—रा.　[2] र्थक—नं-र्थेऽक—ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किंच मण्याद्यभावस्य कारणत्वे मणेः प्रतिबन्धकत्वमपि न स्यात्। लोके कारणाभावरूपे दण्डाभावादौ प्रत्यवायकारणीभूतविहिताकरणस्याभावरूपे विहितकरणे च प्रतिबन्धकव्यवहाराभावात् ॥

तस्माद्दृ[1]ष्टान्वयव्यतिरेकाभ्यां कारणत्वानुमित्यन्यथाऽनुपपत्त्या रासभादेरकारणत्वान्यथाऽनुपपत्त्याऽपूर्वादिप्रतिबन्ध्या मण्यादेर्लोकसिद्धप्रतिबन्धकत्वान्यथाऽनुपपत्त्या त्वदभिमतप्रतिबन्धकत्वान्यथाऽनुपपत्त्या [2]च शक्तिसिद्धिः ॥

इति शक्तावर्थापत्तिपञ्चकम् ॥ ६ ॥

---

किंचेति। तथा च कारणीभूतशक्तिविघटनरूपत्वादिनैव प्रतिबन्धकत्वं त्वयाऽपि वाच्य[3]म्। प्रागुक्तं सर्वं निष्कृष्यानुवदन्नुपसंहरति — तस्मादिति। अपूर्वादीत्यादिपदेन सं[4]ग्रहः। केचिदित्यादिनोक्तकल्पनालाघवस्यारुचिग्रस्तत्वान्न तस्य संग्रहः कृतः ॥

शक्तावर्थापत्तिपञ्चकम् ॥ *६ ॥

---

[1] स्मादन्वय–रा. नं. ग. [2] त्वदभिमतेत्यादि नास्ति–ज. [3] 'इति भाव' इत्यधिकम्–उ. [4] स्कारग्र–उ. *'३८'–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ प्रतिवन्धकाभावस्य हेतुत्वे प्रकारचतुष्टयभङ्गः ॥ ७ ॥

किंच—त्वन्मते विशिष्टं विशेषणविशेष्यतत्सम्बन्धातिरिक्तं नास्तीत्युत्तम्भकाभावविशिष्टप्रतिवन्धकाभावोऽपि क्वचिद्विशेषणाभावरूपः क्वचिद्विशेष्याभावरूपः[1] क्वचित्सम्बन्धाभावरूप इत्यननुगमान्न हेतुः। अभावत्रयस्यैकशक्तिमत्त्वेनानुगमे च शक्तिसिद्धिः ॥

---

### अथ प्रतिवन्धकाभावस्य हेतुत्वभङ्गः ॥ ७ ॥

एवमुत्तेजकाभावविशिष्टमण्याद्यभावरूपदृष्टकारणाभावादेव दाहानुत्पत्त्युपपत्तेर्न शक्तिसिद्धिरित्यादिना कृतचोद्यस्य श्रुत्यादिविरोधार्थापत्तिपञ्चकविरोधाभ्यां दूषणमुक्त्वाऽधुना तादृशाभावस्य कारणत्वमेव न युक्तं येन शक्त्यपलापो घटेतेति भावेनाह—किं चेति। मणौ हि उत्तेजकाभावसहकृतस्याभावो हेतुरिति प्राञ्च इत्युक्त्वा विशिष्टं [2]नार्थान्तरं [3]एतदभावोऽनुगतः स्यादित्यादिना तद्दूषयित्वा स्वयं तत्सर्वं निष्कृष्य वदन् दूषणमाह—त्वन्मत इत्यादिना। एकशक्तिमत्त्वेनेति। एककार्यानुकूलशक्तिमत्त्वेनेत्यर्थः ॥

---

[1] उभयत्र रूपपदं न-रा. [2] वार्था-उ. [3] येन तद-उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च विशेषणविशेष्यतत्सम्बन्धाभावाः विशिष्टविरोधित्वेनानुगताः, यत्र विशेषणं वा विशेष्यं वा तत्सम्बन्धो वा नास्ति तत्र विशिष्टं नास्तीति प्रतीतेरिति वाच्यम्। विशिष्टविरोधित्वं हि विशिष्टविरहात्मकत्वं वा तद्व्याप्यत्वं वा वाच्यम्। तदुभयमपि प्रतियोगिनो विशिष्टस्याननुगमे तदभावस्याप्यननुगमादननुगतमेव। विशिष्टस्यैवानुगमे तु तदभावोऽपि स्वत एवानुगत इति किमनया कुसृष्टया ॥

ननु—तर्हि स्वरूपेण विद्यमानस्यैव मणेरुत्तेजकसमये उत्तेजकाभावावच्छिन्नत्वेनाभावोऽस्ति। प्रतियोगिभेदेनेव प्रतियोगितावच्छेदकभेदेनाप्य-

---

शशधरोक्तमेवानुगमकमाशङ्क्य निराह—न चेति। त्रयाणां विशिष्टविरोधित्वं व्यनक्ति—यत्रेति। अनुगम इति। विशेषणविशेष्यतत्सम्बन्धरूपत्रितयात्मकत्वे तदभावस्यापि त्रित्वापत्त्याऽननुगमात्। तद्विरहात्मत्वं वा तद्विरहव्या[1]प्यत्वं वाऽननुगतमेवेत्यर्थः। अनुगमे त्विति। विशेषणादित्रितयानुगतं विशिष्टं पदार्थान्तरमित्युपगमे त्वित्यर्थः। कुसृष्टयेति। विशिष्टविरोधित्वेनानुगमः विरोधित्वं विरहात्मत्वा[2]दिति कल्पनयेत्यर्थः ॥

एवं शशधराभिमतमभावत्रयपक्षं मण्याद्युक्तदिशा निरस्येदानीमुदयनाद्यभिमतमतिरिक्ताभावपक्षमाशङ्कते — नन्वु तर्हीति। प्रतियोगिभेदे[3]नैवेति। यद्यपि प्रतियोगिभेदस्थळे प्रतियोगितावच्छेदकभेद-

---

[1] प्तत्वं—उ. [2] त्वादिरि—उ. [3] न वे—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भावभेदात् । कथमन्यथा दण्डिनि पुरुषे सत्येव केवल[1]पुरुषो नास्तीति कैवल्यावच्छिन्नत्वेन पुरुषा-भावप्रमा । तथाचोत्त[2]म्भके सत्यसति च मण्य-भावकाले उत्तम्भकयुक्तमणिकाले चानुगतो मण्य-भाव एव हेतुरिति चेन्न । मन्मते पदार्थन्तरस्य विशिष्टस्यैवावच्छिन्नाभावप्रतियोगित्वेन मणेस्तद-प्रतियोगित्वात् । त्वन्मते च विशेष्ये सति विशिष्टाभावबुद्धेः सविशेषणे हीति न्यायेन विशेषणाभावविषय[3]त्वेनाननुगमतादवस्थ्यात् ।

---

स्यावश्यकत्वात्तद्भेदादेव भेदस्तथाऽपि यथा प्रतियोगिभेदोऽभावभेद-व्याप्तस्तथा प्रतियोगितावच्छेदकभेदोऽपीत्यर्थः । स च प्रतियोगिनि सत्यपि वर्तमानोऽभावः प्रागभावादित्रितयान्य एव ध्वंस एव वा क्लृप्ता-त्यन्ताभाव एव वा मण्युक्तदिशा [4]ध्येय इति भाव. ॥

अस्त्वेवं ततश्च किमत्यत आह—तथा चेति । उत्तम्भक-दशायां मणिर्न चे[5]त्तदोत्तम्भकाभावरूपावच्छेदकस्य तदवच्छेद्यविशेष्य-स्य चोभयस्याभावात्तत्प्रयुक्तो मण्यभावः, उत्तम्भके सति मणिर्न चेत्तदा तु विशेष्याभाव उत्तम्भकयुक्तमणिदशायां चोत्तम्भकाभावरूपावच्छेदका-भावप्रयुक्तो विशेष्याभावोऽनुगत इत्यर्थः । मणेस्तदप्रतियोगित्वा-दिति । तथा च त्वदभिमताभाव एवाळीक इति कस्य कारणतया शक्त्यपलापः स्यादिति भावः । मण्युक्तमेव दोषमाह—त्वन्मते[6]चेति ।

---

[1] लः—रा. ग. [2] त्तेजके—रा. [3] त्वेनतु—रा. [4] ज्ञे—उ. [5] 'नचेत्यन्तं नास्ति—उ. [6] वेति—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कथमन्यथा [1] शिखैव नष्टा न [2] तु पुरुष इत्यबाधितधीः । कथं च विशेष्यसत्त्वाविरोधिनस्तदभावत्वम् । विशेषणसत्त्वमात्रविरोधिनस्तदभावत्वाभावश्च ॥

किञ्चास्यैव मणेरुत्तेजकात्पूर्वमुत्तेजकाभावविशिष्टतया तदवच्छेदेनाप्यभावोऽसम्भवी । न च मण्यादेः पूर्वमुत्तेजकाभावविशिष्टत्वेपीदानीमुत्तेजका[3]भावाभावेनेदानीमुत्तेजकाभावेविशिष्टत्वेनाभावोस्तीति वाच्यम् । एवं ही[4]दानींतनोत्तम्भकाभाववैशिष्टयं प्रतियोगितावच्छेदकं वाच्यम् । तच्चायुक्तम् । तस्योत्तेजकसमवहितमणौ कदाचि-

उदयनमत इत्यर्थः । कथमन्यथेति । विशिष्टाभावबुद्धेर्विशेष्याभावपरत्व इत्यर्थः । विशेषणाभावविषयत्वं विशिष्टाभावबुद्धेर्व्यनक्ति—कथं चेति । विशेषणसत्त्वेति । कथं चेत्यनुषङ्गः ॥

एतादृशाभावकल्पनं न्यायसिद्धान्तविरुद्धं चेत्याह—किञ्चास्यैवेति । यस्याभाव उच्यते तस्यैव मणेरित्यर्थः । किमुत्तेजकात्पूर्वं तदभावः प्रतियोगितावच्छेदकोऽथोत्तेजकदशायाम् । आद्य आह—उत्तेजकादिति । द्वितीयमाशङ्कय निराह—न चेति । इदानीमिति । उत्तेजकदशायामित्यर्थः । इदानींतनेति । उत्तेजककालीनेत्यर्थः ।

[1] था विशिष्टस्यैव नष्टा–क. [2] तु शब्दो नास्ति–नं. [3] कभावेने-नं. काभावेनो–ग. [4] ह्युत्तेजकाभा–नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दप्यभावेन व्यधिकरणधर्मावच्छिन्नाभावापत्त्याऽ-
पसिद्धान्तात् । तस्य केवलान्वयितयोत्तेजकात्पूर्व-
मपि सत्त्वेन तदाऽपि दाहापत्तेश्च ॥

किञ्च विद्यमानस्याप्यविद्यमानधर्मावच्छेदेनाभावे
व्यासज्यप्रतियोगि[1]कोप्यभावः स्यात् । स च नेष्टः॥

---

व्यधिकरणेति । प्रतियोगिता[2]व्यधिकरणेत्यर्थः । अपसिद्धान्तादिति । यथा शृङ्गे शशीयत्वस्य कदाऽप्यभावेन शशीयत्वावच्छिन्नशृङ्गाभावो नोपेयते तथात्वे पटत्वावच्छिन्ने भूतले घटो नेति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाधिकरणताकाभावस्यातिरिक्तस्याङ्गीकर्तव्यताप्रसङ्गभयात् व्यक्तमेतदनुमितिलक्षणे तट्टीकासु ; तथेहाऽप्युत्तेजकसहकृतमणावभावप्रतियोगितावतीदानींतनोत्तेज[3]काभावरूपावच्छेदकस्यान्यत्रैव सत्त्वेनेह तदा कदाऽप्यभावेन प्रतियोगिताव्यधिकरणत्वावच्छिन्नाभावाङ्गीकारेऽपसिद्धान्तादित्यर्थः ॥

यदि कश्चिद्ब्रूयादस्तु तादृशोप्यभाव इति तदाऽपि दोषमाह—तस्येति । उत्तेजककालीनोत्तेजकाभावरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावरूपे[4]त्यर्थः ॥

अतिप्रसङ्गं चाह—किञ्चेति । व्यासज्येति । घटसत्त्वस्थले घटपटौ न स्त इतिधीबलाद्द्वित्वावच्छिन्नप्रतियोगिताको विद्यमानघटपटोभयप्रतियोगिको[5]क्तातिरिक्ताभावोऽपि स्यात् । अन्यतराभावनैव प्रतीत्युपपत्तावप्रामाणिकोऽभावो न तत्र नैयायिकैः स्वीकृत इत्यर्थः ॥

अस्तु तादृशोऽप्यभाव इति वदन्तं प्रति दोषान्तरमाह—

---

[1] ताको–क. ग. ज.　[2] ना व्य–उ.　[3] त्तम्भका–उ.　[4] रूपपदं न–उ.
[5] अतिरिक्तोऽभावोपि–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अपि चैवं रक्ततादशायां घटस्य श्याम-रूपावच्छिन्नत्वेनाभावा[1]पत्त्या प्रत्यभिज्ञाविरोधः स्यात् ॥

न च घटस्य श्यामत्वेनास[2]त्त्वेऽपि घटत्वेन सत्त्वान्न तद्विरोध इति वाच्यम्। तथात्वे [3]प्रत्यभि-ज्ञाया घटत्वावच्छिन्नाभेदविषयत्वेनोपपत्त्या श्या-म[4]त्वावच्छिन्नत्वेन भेदापत्त्या त्व[5]दनभिमतभेदा-भेदप्रसङ्गात् ॥

एवं तत्तक्षणावच्छेदेनापि भेदापत्त्या क्षणभङ्गः[6] स्यात्। एवमेकस्मिन्नपि क्षणे संयोगतदभावाव-च्छेदेन भेदाभेदौ स्याताम् ॥

अपि चैवमिति। विद्यमानस्यैव वस्तुनोऽवच्छेदकाभा[7]वनिमित्ताभाव-स्वीकार इत्यर्थः। प्रत्यभिज्ञेति। यः श्यामः स एवायं रक्त इति प्रत्यभिज्ञेत्यर्थः। भेदाभेदेति। घटत्वेनाभेदः श्यामत्वेन भेद इति भेदाभेदेत्यर्थः। तत्क्षणेति। एतत्क्षणवाच्छिन्नघटो न पूर्वक्षणा-वच्छिन्नः पूर्वक्षणावच्छिन्नश्चैतत्क्षणावच्छिन्नो नेति प्रतीत्या प्रतिक्षण-मविद्यमानपूर्वोत्तरक्षणावच्छेदे[8]न भेदसंभवात् क्षणिकता स्यादित्यर्थः। भेदाभेदाविति। वृक्षे शखायां [9]कपिसंयोगस्य मूले तु तदभावस्य सत्त्वेन वृक्षो मूले कपिसंयोगवान्न भवति अग्रे कपिसंयोगाभाववान्नेति वा प्रतीत्या संयोगवदभेदः संयोगाभाववद्भेदश्च वृक्षे संयोग[10]तदभावा-

1 वत्वाप–नं. ग. 2 त्त्वान्न तद्वि–नं. 3 प्रत्यभिज्ञाया इति नास्ति–रा. 4 माव–नं. क. ज. 5 त्वन–रा. 6 ङ्ग प्रसङ्गात्–रा. 7 भावस्वी–उ. 8 दभेदसंभवेन–उ. 9 सर्वत्र 'पिक' इत्यस्ति–उ. 10 गावच्छेदेन–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

किंच प्रतियोगिसत्त्वकालेऽ[1]पि सन्नयमभावो न तावद्ध्वंसः प्रागभावो वा। तयोः प्रतियोग्य-समानकालीनत्वात्। ध्वंसस्यानन्तत्वेनोत्तेजकाप-न[2]यनकालेऽपि सत्त्वेन मणिसत्त्वेपि दाहापत्तेश्च। अत एव नात्यन्ताभावः। तस्यानाद्यनन्तत्वेन प्रतिबन्धककालेऽपि सत्त्वेन तदाऽपि दाहापत्तेः॥

ननु—विशिष्टात्यन्ताभावं प्रति विशेषणस्य विशेष्यस्य वा प्रागभावो [3]ध्वंसो वा प्रत्यासत्तिः। तथाच विशेषणादिदशायामत्यन्ताभावस्याप्रत्या-सन्नत्वान्न दाहोत्पादकत्वं न वा प्रतीतिरिति चेन्न। तेषु प्रत्यासत्तित्वावच्छेदकैकरूप[4]स्याभावात्। अन-नुगताना[5]मपि प्रत्यासत्तित्वे[6]वाऽवश्यकानां तेषामेव दाहहेतुताऽस्तु। किं विशिष्टा[7]भावकल्पनया॥

---

वच्छेदेन स्याताम्। तथा संयोगाभावस्थळे सयोगाभाववदभेदः संयो-गवद्भेदश्च स्यादित्यर्थः॥

ननु विशेष्यसत्त्वस्थलेऽवच्छेदकभेदेनाङ्गीक्रियमाणोऽभावः संस-र्गाभाव एव न त्वन्योन्याभावः। येनोक्तदोषः स्यादित्यत आह—किंचेति। दाहापत्तेरित्युपलक्षणम्। तदाऽप्यभावधीप्रसङ्गाच्चेत्यपि ध्येयम्॥

अत्यन्ताभावपक्षमुपेत्य तत्रोक्तदोषोद्धारमाशङ्कते—नन्विति। तेष्विति। यद्यपि ध्वंसप्रागभावौ द्वावेव शङ्कितौ। तथाऽपि

---

1 'अपि' इति नास्ति—नं. रा.　2 यानयन—नं.　3 प्रध्वं—रा. ग
4 पाभा—नं. ग.　5 नां तेषां प्र—रा. नामपि तेषां—ग.　6 चाव—रा. त्वेनाव—क. ग.
7 ष्टात्यन्ताभा—नं. रा. ग. ज.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एतेन कालविशेष एव प्रत्यासत्तिरिति निरस्तम् । अननुगमात् । सर्वत्रापि तत्तत्कालविशेषस्यैव हेतुत्वापत्त्या कारणान्तरापलापापत्तेश्च ॥

नाप्ययमुत्पादविनाशशीलस्तुरीयोऽभावः । [1]उत्तम्भकोपनये उत्तम्भकाभावविशिष्टमण्यभावस्योत्पत्तेरपनये च विनाशादिति वाच्यम् । उक्तरीत्याऽऽवश्यकेन विशेषणाभावेनैव तद्व्यवहारोपपत्तौ तुरीयाभावकल्पकाभावात् ॥

न चायं कालविशेषावच्छेदेनात्यन्ताभाव[2] एवेति वाच्यम् । तथात्वे प्रागभावादेरपि तथात्वापातात् । [3]इह [4]घटो नेत्यत्रापि घटभूतल-

---

विशेषणविशेष्यरूपप्रतियोगिभेदाच्चतुष्ट्वमुपेत्य तेष्वित्युक्तम् । यद्वा ध्वंसादिव्यक्तिबाहुल्यापेक्षया तेष्वित्युक्तिः । एवं चाननुगम एव क्वचित्कस्यचिदेव प्रत्यासत्तित्वस्वीकारादिति भावः । अननुगमादिति । क्वचित्प्रागभावकालः क्वचित्प्रध्वंसकाल इत्यननुगमादित्यर्थः । तुरीय इति । प्रागभावप्रध्वंसात्यन्ताभावरूपे[5] संसर्गाभावमध्ये सामयिकोपि [6]क्वचिदत्यन्ताभावोस्त्वित्यर्थः । कालविशेषेति । उत्तम्भक[7]कालविशेषेत्यर्थः ॥

नन्वेवं–विशेषणाभावादिना विशिष्टाभावापलापे घटा[8]द्यभावोऽपि न सिध्येत् । इह भूतले घटो नेत्यत्रापि घटभूतलसंबन्धाभावेनैव तद्व्यवहारोपपत्तेरित्यत इष्टापत्तिमाह—इह घटेति । व्यक्तमे[9]तन्नयाया-

---

[1] उभयत्र 'उत्तेजक' इत्यस्ति–रा. आदावस्ति–ग. [2] वोस्त्विति–नं. [3] न चेत्यादि नास्ति–ज. [4] 'भूतल' इत्यधिकम्–नं. [5] पसं–उ. [6] कश्चिद–उ. [7] 'सत्त्व' इत्यधिकम्–उ. [8] टाभा–उ. [9] वन्या–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संबन्ध एव प्रतियोगी न तु घटः। वक्ष्यते चैतद-
भावप्रस्तावे ॥

नन्तु–तर्हि मण्युत्तम्भकोभयसत्त्वकाले तदानी-
मुत्तम्भकाभावविशिष्टानां देशान्तरस्थानामन्येषां
मण्यादीनामत्रत्या[1]भावः कारणं ; न त्वत्र विद्यमा-
नस्यैव मण्यादेरभावः। अत एवोदयनो "न [2]हि
दण्डिनि सत्यदण्डानामन्येषां नाभाव" इत्याह।
अन्यथाऽन्येषामिति व्यर्थं स्यादिति चेन्न। एवं
हि उत्तम्भककालीनं दाहं प्रति विद्यमान[3]मणेर-
भावः कारणं न स्यात्। तथा चोत्तेजकागमनात्
प्राक् मणिकालेऽपि दाहः स्यात्। एतन्मण्यभावस्य
तदानीमसत्त्वेऽपि तस्याहेतुत्वेन तद्विलम्बेन दाह-
विलम्बानुपपत्तेः। हेतुभूतस्य च तत्राविद्यमाना-
नामन्येषां मणीनामभावस्योत्तेजकागमनात्प्रागपि
सत्त्वात् ॥

---

मृते असतोऽभावप्रतियोगित्ववादे प्रथमपरिच्छेदे। वक्ष्यत इति।
अभावस्य स्वरूपादन्यन्न प्रत्यासत्तिरित्येतदाश्रयासिद्धेर्दोषत्वभङ्गे वक्ष्यत
इत्यर्थः ॥

उदयनोक्तं पक्षान्तरमाशङ्क्य निराह—नन्तु तर्हीत्यादिना।
अभावस्य विद्यमानमण्यादिप्रतियोगिकत्वासंभव इत्यर्थः। अद[4]ण्डिना-
मपि न बहुव्रीहिः किंतु दण्डिनामेवेति योज्यम् ॥

---

[1] त्योभा–रा. ग.　[2] तर्हि–ग.　[3] नं म–क.　[4] ण्डानामिति न व–उ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ मतं—विशेषणविशेष्ययोः सम्बन्ध एव विशिष्टं, तथाच मण्युत्तम्भकाभावरूपोभयसंबन्धाभावो विशेषणाद्यभावव्यापकोऽनुगतो[1] हेतुरिति चेत्। मैवम्। अयमप्यभावो हि मण्युत्तम्भकाभावरूपसंबन्ध्या[2]त्मकविशेषणद्वयविशिष्ट[3]संबन्धरूपविशेष्यस्याभावः। न तु संबन्धमात्रस्याभावोऽतिप्रसङ्गात्। तथा चायं विशिष्टाभावोऽपि यदि संबन्धिरूपविशेषणद्वयेन सह संबन्धरूपविशेष्यस्य यत्संबन्धान्तरं तदभावात्मकः। तदाऽनवस्था। यदि तु तत्परिहाराय विशेषणाभावाद्यात्मकस्तदा पूर्व-

'अत्रोच्यते' इत्यादिना म[4]ण्युक्तं पक्षमाशङ्कते—अथ मतमिति। अतिप्रसङ्गादिति। घटपटसम्बन्धाभावस्यापि दाहहेतुत्वप्रसङ्गादित्यर्थः। अयमिति। विशेषणविशेष्ययोः सम्बन्धरूपविशिष्टस्याभावोऽपीत्यर्थः। विशेषणद्वयेनेति। विशेषणविशेष्यरूपविशेषणद्वयेनेत्यर्थः। दण्डीत्यत्र दण्डचैत्रसंबन्धस्य विशिष्टशब्दार्थत्वे सति तुल्यन्यायतया संबन्धस्य तत्सं[5]बन्धीभूतविशेषणाभ्यां दण्डचैत्राभ्यां सह कश्चन सम्बन्ध एव विशिष्टशब्दार्थो वाच्यः। तत्रापि सम्बन्धस्य तत्संबन्धिभूतसंबन्धतत्संबन्धिभ्यामन्य एव संबन्धो विशिष्टपदार्थ इति विशिष्टाभावपक्षे[6] प्राचीनसंबन्धस्य संबन्धान्तराभाव एव विशिष्टाभावो वाच्यः। [7]तत्राप्येवं तत्राप्येवमित्यनवस्थेत्यर्थः। तत्परिहारायेति।

[1] 'अपि' इत्यधिकम्—रा.　[2] न्धात्म—नं.　[3] ष्टस्य सं—नं. ग. ज.
[4] णिकृदु—उ.　[5] बन्दिभ्यामन्य एव सम्बन्धो विशि—उ.　[6] क्षेपि—उ.　[7] एकं "तत्राप्येव" मिति नास्ति—उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वदननुगमतादवस्थ्यम् ॥

ननु—भवेदिदं यद्युत्तम्भकसहितमण्यादिकाले मण्यादिरूपविशेष्यस्य सत्त्वेऽप्युत्तम्भकाभाव[1]विशेषणाभाववत्सम्बन्धरूपविशेष्यस्य सत्त्वेऽपि कदाचित्सम्बन्धिरूपविशेषणाभावः स्यात्। न चैवं प्रकृते। सम्बन्धिनोरभावे सम्बन्धाभावस्यावश्यकत्वात्। तथा च सम्बन्धरूपविशेष्याभाव एवानुगत इति चेत्। नैवम्। अनुगमाय तदनपेक्षायामपि सम्बन्धाभावमात्रस्य हेतुत्वेऽतिप्रसङ्गेनानतिप्रसक्तस्य कारणत्वाय तदपेक्षणात्। मण्युत्तम्भकाभावसम्बन्धस्य तदुभयमात्रवर्तित्वेन दाह्ये करतले दाहके वह्नौ च तत्सम्बन्धाभावस्य सदा

---

अनवस्थापरिहाराय विशेषणविशेष्यतत्सम्बन्धाभावात्मक इत्यर्थः ॥

उक्तानवस्थादिदोष[2]निरासाय वै[3]षम्यमाशङ्कते—नन्विति। इदमिति। सम्बन्धान्तरमादायानवस्थोद्भावनमित्यर्थः। प्रकृत इति। सम्बन्धसम्बन्धिनोः सम्बन्धी विषय इत्यर्थः। सम्बन्धाभावस्येति। विशेष्यभूतसम्बन्धाभावस्येत्यर्थः। तदनपेक्षायामिति। सम्बन्धिभूतविशेषणानपेक्षायामित्यर्थः। तदपेक्षणादिति। तथा च विशेष्यसम्बन्धाभावात्मकत्वेऽननुगमता[4] स्यादेवेति भावः ॥

ननु तदपेक्षाऽयामपि परिचायकत्वेनैव तदपेक्षाऽस्तु तावताऽतिप्रसङ्गाभावादित्यतो दोषान्तरमाह—मणीति। मणेरुत्तम्भकाभावेन यः

---

[1] रूपेत्यधिकम्—क. रा. ग. ज. [2] परिहाराय—उ. [3] शेष्य—उ. [4] दवस्थ्य—उ.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सत्त्वेन केवलमणिकालेऽपि दाहप्रसङ्गाच्च ॥

केचित्तु—संशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनमिव प्रतिबन्धककालीनदाहं प्रत्युत्तेजकं हेतुरिति कल्पनेनैव सर्वसामञ्जस्ये किं विशिष्टाभावस्य हेतुत्वकल्पने[1]नेत्याहुः ॥

तस्माच्छशधररीत्या विशेषणविशेष्यतत्सम्बन्धानामभावत्रयं वोदयनादिरीत्या विद्यमानस्यापि प्रतिबन्धकरूपविशेष्यस्यैव प्रतियोगितावच्छेदकभेदेनाभावो वा देशान्तरस्थानामुत्तम्भकाभावविशिष्टानां मण्यादीनाम[2]त्यन्ताभावो वा मणिकृद्रीत्या विशेषणविशेष्ययोर्यः सम्बन्धस्तदभावो वा कारणमिति पक्षचतुष्टयमप्ययुक्तम् । तदेवं त्वदभिमतं विद्यमानमणेः कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धत्वमयुक्तमिति कार्यानुकूलविघटकत्वरूपं प्रतिबन्धकत्वमेव वाच्यमिति मण्यादिविघटनीयशक्तिसिद्धिः ॥

इति प्रतिबन्धकाभावस्य हेतुत्वे[3] प्रकारचतुष्टयभङ्गः ॥ ७ ॥

---

सम्बन्धस्तस्येत्यर्थः । केचि[4]त्त्विति । अस्मिन् पक्षे शक्तिसिद्धेरभावोऽरुचिबीजं ध्येयम् । देशान्तरस्थानामिति । उदयनादिरीत्येत्यनुकर्षः ॥

प्रतिब[5]न्धकाभावस्य हेतुत्वभङ्गः ॥ * ७ ॥

---

[1] नयेत्या–रा. ग. ज. [2] न्त्याभा–रा. ग. [3] त्वप्र–क. ग. [4] दिति–उ. [5] न्धाभा–उ. *३९–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ तृणारणिमणीनामेकशक्तिमत्त्वसाधनम् ॥८॥

किञ्च—शक्त्यभावे तृणारणिमणीनां वह्निजातीय रूपकार्येऽननुगमेन [1]हेतुत्वं न युक्तमिति तेषामेक-शक्तिमत्त्वेनानुगमा[2]र्थं शक्तिः स्वीकार्या ॥

## अथ तृणारणिमणीनामेकशक्तिमत्त्वसाधनम् ॥ ८ ॥

यद्यप्यनुमानखण्डे मणौ तृणारणिमणीनां वह्नौ कारणत्वेनैकं-शक्तिमत्त्वमुपेयमित्यादिना शक्तिसिद्धिं पूर्वपक्षयित्वा तन्निराकरणं सिद्धा-न्तितम् । तदपि निराकृत्य शक्तिं साधयति—किं चेति । एवं [3] क्वचिच्छक्तिसिद्धौ पदेऽपि तदनुमानं भविष्यतीति पूर्ववदभिप्राय ऊह्यः । एकशक्तिमत्त्वेनेति । एकजातीयकार्यानुकूलशक्तिमत्त्वेनेत्यर्थः । अन्यस्याभावादनुकूलत्वं च कार्याभावप्रयोजकाभावप्रतियोगित्वं कारण-तदवच्छेदकोभयसाधारणम् । तेन शक्तेरवच्छेदकत्वेऽपि नानुकूलत्व-हानिः । एवं च शक्तीनां प्रतिव्यक्ति नानात्वेन तन्निष्ठानुगतजात्यैवैक-जातीयशक्तिमत्त्वेनानुगतेरावश्यकत्वाच्छक्तौ जातेश्च तद्व्यञ्जकसंस्थान-विशेषादेरभावेनायोग इत्यादिदूषणानवकाशः । सिद्धान्ते जातेरभावाच्च ॥

यद्वा संसर्गानुगतैकैवाऽस्तु[4] । न चैवमेकतृणव्यक्तिनाशे[5] आश्रय-नाशप्रयुक्तशक्तिनाशात्तृणान्तरादितः कार्याभावदोष इति वाच्यम् । आधेयशक्तिवादे वक्ष्यमाणदिशा समाधानसम्भवादित्याशयादित्याहुः ॥

1 'तृणारणिमणीना' मित्यधिकम्—ग　2 माय—नं. रा. ग.　3 'च' इत्यधिकम्—उ.　4 शक्तिरित्यधिकम्—उ.　5 प्याश्र—उ.



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च तृणादिर्वह्निविशेष एव हेतुः वह्निसामान्ये तु स्पर्शविशेषवदवयवादिरिति वाच्यम् । तृणादिजन्यवह्नौ हि जातिविशेषः न तावत्प्रदीपे[1] दारुदहनादाविव गोमयवृश्चिकजन्यवृश्चिकेष्विव च प्रत्यक्षः । अननुभवात् । नापि कारणवैजात्या[2]त् कल्प्यः । शक्त्यैवान्यथासिद्धेः ॥

न च तृणादिषु तत्तद्भावजनितानन्तशक्तिक-

वस्तुतस्तु एकशक्तिमत्त्वमित्यस्यैकजातीयशक्तिमत्त्वमित्येवार्थः । अनुगतजातेरभावेऽपि शक्तिव्याप्त्यादिग्रहसमर्थनवादे वक्ष्यमाणदिशा सदृशशक्तिमत्त्वस्यैवैकजातीयशक्तिमत्त्वशब्दार्थत्वात् । [3]तद्व्यभिचाराय तृणादेर्वह्निविशेष एव हेतुत्वे[4] तर्हि त[5]त्कार्ये वह्नित्वमाकस्मिकं स्यादित्यत आह—वह्निसामान्य इति । स्पर्शविशेषवन्त उष्णस्पर्शवन्तोऽवयवा इत्यर्थः । आदिपदेन तादृशद्रव्यादिग्रहः ॥

स किं विशेषः प्रत्यक्ष उत कल्प्य इति [6]विकल्पौ क्रमेण निराह—तृणेति । दारुदहनेति । काष्ठजन्यवह्नीत्यर्थः । आदिपदेन [7]करीषाग्न्यादिग्रहः । गोमयेति । गोमयजन्येषु वृश्चिकजन्याष्वित्यर्थः । शक्त्यैवेति । तृणादेर्वह्निजातीयं प्रत्येकशक्तिमत्त्वेनैव कारणत्वोपपत्तौ कार्ये तत्तज्जन्यतावच्छेदक जातित्रयकल्पनानुपपत्तेर्गौरवदोषाच्चेति भावः ॥

ननु[8] शक्त्या जात्यपलापोयुक्तः । किंतु वैपरीत्यमेव युक्तमिति भावेन मणिकृता सिद्धान्तेऽभिहितं गौरवमाशङ्क्य निराह—न चेति । तत्तद्भावेति । तृणादिव्यक्तीनामानन्त्येन [9]तेषां तृणादीनां यानि भाव-

[1] पद्दा—नं. रा. क. ज. [2] त्यः क—रा. [3] यद्व्य—उ. [4] त्वं—उ. [5] तदका—उ. [6] कल्पौ—उ. [7] कारी—उ. [8] 'न' इत्यधिकम्—उ. [9] तेषांतेषां—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ल्पनाद्वह्नौ जातित्रयकल्पनं लघीय इति वाच्यम् ।
जातित्रयकल्पनस्य योग्यानुपलब्धिबाधितत्वात् ।
मन्मते शक्तिवज्जातेरपि प्रतिव्यक्ति भिन्नत्वाच्च ॥

किंच–संभवत्येकसामग्रीत्वे [1]सामग्रीत्रयकल्पने गौरवम् । शक्ति[2]गौरवं तु फलमुखत्वान्न दोषः । एककारणत्व[3]कल्पनसमये शक्तिबहुत्वस्यानुपस्थितेः ॥

---

कारणानि तज्जनितेत्यर्थः । प्रतिव्यक्ति शक्तेर्भिन्नत्वादानन्त्यं वह्नित्वावान्तरजातित्रयकल्पने[4]ऽतिलाघवमिति भावः ॥

योग्यवृत्तिजातेर्योग्यत्वनियमादाह–योग्यानुपलब्धीति । शक्तेस्त्वतीन्द्रियत्वान्नायं दोष इति भावः । यत्तु मणौ तृणजन्यवह्निष्वनुगतमतिरेव तादृशजातौ मानमित्युक्तम् । तन्न । तृणजन्यत्वोपाधिनोपपत्तेरिति भावः । मन्मत इति । तथा च जातित्रयकल्पनेऽपि न लाघवमिति भावः ॥

सिद्धान्ते गौरवेऽप्यनुगतजातिपक्षे न गौरवमित्यत आह— किंचेति । वह्नित्वावच्छिन्नवह्निं प्रत्येकशक्तिमत्त्वेन तृणादेः सर्वस्यैकसामग्रीत्वे संभवति तृणारणिमणीनां प्रत्येकं सामग्रीत्वमुपेत्य वह्नौ तज्जन्यतावच्छेदकावान्तरजातित्रयकल्पने गौरवमित्यर्थः । पक्षद्वयेऽपि साम्यमेवेत्यत आह—शक्तीति । तृणादौ शक्तौ सिद्धायामेव शक्त्यानन्त्योपस्थितिः । न तु ततः पूर्वमिति प्रामाणिकत्वान्न दोषावहं गौरवमित्यर्थः । तदेव व्यनक्ति—एकेति । वह्निजातीयं प्रत्येव शक्तिमती सामग्रीति कल्पनसमय इत्यर्थः ॥

[1] भिन्नसामग्रीत्वक–नं [2] 'कल्पने' इत्यधिकम्–रा. [3] स्य क–नं. [4] ने तुला–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु–यदि विजातीयेषु कारणेष्वेका शक्तिस्तर्हि कार्यविशेषात् कारणविशेषानुमानं न स्यात्। अरण्यभावेऽपि तृणाद्वह्नेरिव वह्न्यभावेऽपि धूमजननशक्ति[1]युक्तादन्यस्मादपि धूमसंभवादिति चे[2]त्तर्हि कार्यवैजात्येऽपि तृणस्य वह्निविशेष इव वह्नेरपि धूमविशेष एव हेतुत्वं, न तु धूममात्र इति शङ्कया धूममात्राद्वह्न्यनुमानं न स्यात्॥

अथ–तत्रोपस्थितेन धूमत्वे[3]नैव वह्निकार्यता बाधकाभावात्। वह्नेस्तु न वह्नित्वेन तृणा[4]दिकार्यता। व्यभिचारादिति चेत्तर्हि वह्ने[5]र्धूमं प्रत्युपस्थितवह्नित्वेनैव कारणता। बाधकाभावात्। तृणस्य [6]तु वह्निं प्रति नोपस्थिततृणत्वेनैव हेतुता। व्यभिचारात्। किंत्वेकशक्तिमत्त्वेनेति समम्॥

---

शक्ति पक्षे गौरवस्यादोषत्वेऽपि बाधकान्तरमस्त्विति शङ्कते—नन्विति। कार्येति। धूमादिरूपकार्यविशेषादित्यर्थः। कुतो न स्यादित्यत आह—अरणीति। प्रतिबन्धोत्तरमाह- तर्हि कार्येति। तृणादिजन्यकार्ये जातित्रयकल्पनेपीत्यर्थः॥

तेनैव समाधिं वाचयति—अथ तत्रेति। उपस्थितेन प्रत्यक्षावगतेनेत्यर्थः। बाधकेति। व्यभिचाररूपबाधकाभावादित्यर्थः। उपस्थितेति। धीस्थेन वह्नित्वेनेत्यर्थः। तथा च धूमादिरूपकार्यविशेषाद्वह्न्यादिरूपकारणानुमित्यभावप्रसङ्गदोषो नेति भावः॥

---

[1] युक्ता अन्य–न. क. ग. [2] चेन्न तर्हि–नं. [3] मेन–नं. [4] णका–नं. रा. क. ग. [5] ह्नेरपि–नं. [6] 'तु वह्निं प्रति' इति नास्ति–ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतेन—तृणादीनां प्रत्येकं कारणता[1]ग्रहाधीनं[2] तेषु शक्तिकल्पनं[3] तद्ग्रहश्च न युक्तः। एकैकं विनाऽपि वह्न्युत्पत्तेरिति निरस्तम्। कार्ये[4] वैजात्यकल्पनस्यापि तदधीनत्वेन दोषसाम्यात्॥

अथ—मण्यरण्यभाववतो वह्निस्तोमविशेषस्य तृणान्वयव्यतिरेकानुविधायित्वेन तत्र तस्य कारणत्वे [5]गृहीतेऽनन्तरं कार्ये जातिकल्पनं तर्हि कारणे शक्तिकल्पनमपि तदनन्तरमेवास्तु॥

किंच-यद्यादावेव तृणत्वस्य कारणतावच्छेदकता वह्नित्वस्य कार्यतावच्छेदकता च [6]गृह्यते तदा

---

नन्वेवं तृणादेः प्रत्येकं हेतुत्वग्रहे सति तत्रैकशक्तिकल्पनं तत्कल्पने च सति तृणादेर्हेतुत्वग्रह इत्यन्योन्याश्रय इति चोद्यं प्रतिबन्द्या निराह—एतेनेति। नयुक्त इति। [7]शक्तिमत्त्वज्ञानं विना न युक्त इत्यर्थः। कुत इत्यत आह—एकैकमिति। दोषसाम्यादिति। तृणत्वादिना हेतुत्वग्रहे तज्जन्यतावच्छेदकतया जातिकल्पनं तत्कल्पने च सत्यव्यभिचारात्तृणादेर्हेतुत्वग्रह इति दोषसाम्यादित्यर्थः। परमुखेनैव समाधिं वाचयति—अथेति॥

नन्वेवमुक्तदिशा वह्निजातीयं प्रति तृणत्वादिनैव कारणताग्रहे तद्रक्षार्थं कार्यवैजात्यकल्पनं स्यात्। तस्मादेकशक्तिमत्त्वेनैव कारणताग्रहो वाच्य इत्यत आह—किं चेति।

---

[1] त्वग्रहादनन्तेषु—नं. रा. त्वग्रहाधीनं—ग. [2] ने—ज. [3] ने—ज. [4] र्यवै—नं. रा. [5] त्वेन—नं. [6] 'गृह्येत' इति शोधितम्—नं. ग. ज. [7] एक इत्यधिकम्—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वदुक्तः तृणजातीयं विना वह्निजातीयस्योत्पत्तिरूपो व्यभिचारः प्रतिबन्धकः स्यात् । न च तथा गृह्यते। किं तु, स्वर्गजातीयं प्रति साधनान्तरे सत्यपि ज्योतिष्टोमव्यक्तेः स्वर्गव्यक्तिं प्रतीव, यागजातीयं प्रति यवरूपे साधनान्तरे सत्यपि व्रीहिव्यक्तेर्यागव्यक्तिं प्रतीव, चादौ तृणव्यक्तेर्वह्निव्यक्तिं प्रति कारणता गृह्यते । तत्र च त्वदुक्तो व्यभिचारो न प्रतिबन्धकः । संभवमात्रं प्रत्यनियमस्याविरोधित्वात् । अनन्तरं गृहीतकारणत्वरक्षार्थं त्वया स्वर्गे यागे वह्नौ च वैजात्यमिव मया स्वर्गकारणे[1] ज्योतिष्टोमादौ यागकारणे व्रीह्यादौ वह्निकारणे तृणादौ चैकशक्तिमत्त्वं कल्पयित्वा तस्य कारणतावच्छेदकता स्वर्गत्वादेः कार्यतावच्छेदकता च कल्प्यत इति न कोपि दोषः ॥

ननु—वह्निजनेन तृणस्यैव फूत्कारः सहकारी

---

साधनान्तर इति । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते" त्यादिनोक्तदर्शादिरूपसाधनान्तर इत्यर्थः । "ज्योतिष्टोमेन स्वर्गकामो यजेते" त्यपि श्रवणादिति भावः । यवरूप इति । व्रीहिभिर्यजेत यवैरिति द्वयोरपि यागसाधनताश्रवणादिति भावः । संभवेति । वह्नौ तृणादिः कारणं संभवत्येवं योग्यतामात्रं प्रति व्यभिचारस्याप्रतिबन्धकत्वादित्यर्थः॥

सहकारिवैचित्र्यात्कार्यवैजात्यकल्पनमित्याशङ्क्य निराह—नन्वित्यादिना । आदिपदेन मणेरेव तरणिकिरण इति गृह्यते । प्रागुक्तं

---

1 णज्यो—नं. ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अरणेरेव मथनमित्यादिनियमो दृश्यते। स च कार्यगतजातिभेदं विनाऽनुपपन्नः। एकजातीये कार्ये सहकारिवैचित्र्यायोगादिति चेत्[1]। तृणादीनां वह्नित्वावच्छिन्नं प्रत्येकशक्तिमत्त्वेन[2] कारणता फूत्कारादीनां तु फूत्कारत्वादिना [3]तृणादिजन्यवह्निविशेषं प्रतीति स्वीकारे शक्त्यैक्यसहकारिनियमयोरविरोधात् ॥

न च–फूत्का[4]रादिनिरूपितां वह्निनिष्ठकार्यतां प्रति जातिरेवावच्छेदिका, लाघवात्, न तु तृणजन्यत्वो[5]पाधिः गुरुत्वादिति वाच्यम्। जातेर्योग्यानुपलब्धिबाधादित्युक्तत्वात्। तृणादिजन्यत्वम[6]ज्ञात्वा जातेर्ज्ञातुमशक्यतया प्रथमोपस्थितोपाधेरेव कार्यतावच्छेदकत्वसंभवाच्च। तस्माद्योग्यानुपलब्धिरूपस्या[7]फलमुखगौरव[8]रूपस्य[9]कार्यविशेषात्कारणविशेषानुमितिप्रसङ्गरूपस्यान्योन्याश्रयप्रसङ्ग-

---

निष्कृष्यानुवदन्नुपसंहरति–तस्मादिति। तस्मादिति परामृष्टं,न तावत्प्रदीपेत्यादिना, किंचित्संभवतीत्यादिना, ननु यदीत्यादिना, एतेन तृणादीत्यादिना, ननु वह्निजनन इत्यादिना, तृणादिजन्यत्वमज्ञात्वेत्यादि[0]नोक्तं च बाधकपञ्चकस्याभावं साधकं च व्यनक्ति–योग्यतेत्यादिना। अफलमुखेति।

---

[1] 'न' इत्यधिकम्–रा.ग. [2] 'एव' इत्यधिकम्–रा. [3] ना अतृ–क. [4] रत्वादि–नं. क. [5] त्वरूपोपा–नं. त्वादिरू–रा. न तु जन्यत्वादिरूपोपाधिः–ग. त्वोपाधिरिति वाच्यम्–ज. [0] मादावज्ञा–नं. [7] स्य फ–रा. ज. [8] रूपपदं न–रा. [9] दिकं च–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[1]रूपस्य सहकारिनियमानुपपत्तिरूपस्य च बाध-
कस्याभावात् कारणमुखलाघवरूपस्य साधकस्य
च सत्त्वात्तृणारणिमणीनां वह्निजातीयं प्रति कारण-
त्वान्यथाऽनुपपत्त्या शक्तिसिद्धिः ॥

इति तृणारणिमणीनामेकशक्तिमत्त्वसाधनम् ॥ ८ ॥

## अथ सहजशक्तिवादः ॥ ९ ॥

किं च–(१) संसार्यात्मा अदृष्टात्मत्वेतरसकल-

अस्य च फलमुखत्वोक्तेरिति भावः । **कारणमुखेति** । तृणादीनामन-नुगतानामेकजातीयकार्यं प्रति हेतुत्वमेकशक्तिमत्त्वमेव लाघवादाक्षिपति। तृणादिजन्यत्वज्ञानानन्तरमेव कार्यवैजात्यकल्पनादिति भावः ॥

तृणारणिमणीनामेकशक्तित्वसाधनम् ॥ ८ * ॥

## अथ सहजशक्तिवादः ॥ ९ ॥

यदपि मणौ—"मा भूदर्थापत्तिः शक्तौ मानम् । अनुमानं तु स्या" दित्यादिना कानि चिदनुमानान्याशङ्क्याप्रयोजकत्वादिना निर-स्यानुमानमपि शक्तौ न मानमित्युक्तम् । तन्न । प्रकारान्तरेण शक्तावन-वद्यानुमानसंभवादनुकूलतर्कसंभवाच्चेति भावेनाह—**किंचेति** । इत्या-द्यनुमानैरपि शक्तिसिद्धिरित्यन्वयः । ईश्वरांशे सिद्धत्ववारणाय संसारी-त्युक्तिः । तस्यादृष्टात्मत्वेतरसकलस्वजन्यानुकूलज्ञानेच्छाकृतिरूपधर्म-वत्त्वात् । **अदृष्टेति** । अदृष्टं चात्मत्वं च ताभ्यामितरः सकलानि

[1] रूपपदं न—रा. *४०—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वजन्यानुकूलधर्मवान् आत्मत्वात् सत्त्वात् ज्ञेय-
त्वाद्वा ईश्वरवत् ॥

(२) विमतो वह्निर्दाहानुकूलवह्नीतरानिरूप्यातीन्द्रियधर्मवान् ...

---

यानि स्वजन्यात्मकार्याणि तदनुकूलश्च यो धर्मस्तद्वानित्यर्थः। अदृष्ट-स्यात्मत्वस्य च सकलस्वजन्यानुकूलधर्मत्वात्तदादायार्थान्तरवारणायादृष्टा-त्मत्वेतरेत्युक्तम् ॥

न चानुकूलत्वं जनकत्वं तच्चादृष्टस्यैव [1]नात्मत्वस्य [2]तज्जनक-तावच्छेदकत्वादिति वाच्यम्। कार्याभावप्रयोजकाभावप्रतियोगित्वस्यैव तदानुकूल्यस्याभिप्रेतत्वात्तस्य च कारणत[3]दवच्छेदकोभयसाधारण्यात्। अत एव शक्तेरवच्छेदकत्वेऽपि न बाधशङ्का ॥

न चैवमप्यदृष्टस्य स्वमते मनोधर्मतयाऽऽत्मधर्मत्वाभावान्नार्था-न्तरमिति वाच्यम्। स्वस्वामिसंबन्धेन धन[4]वत्त्ववददृष्टधर्मकत्वस्याप्या-त्मनि संभवात्। पररीत्या परस्य साधनमित्यप्याहुः ॥

आत्मजन्येच्छादियत्किंचिदनुकूलज्ञानादिधर्मवत्त्वेनार्थान्तरवार-णाय सकलेति स्वजन्याविशेषणम्। ज्ञानादेर्यावदात्मजन्याननुकूलत्वात्। सिद्धान्ते शक्तिशक्तिमतोरभेदेऽपि विशेषबलेन धर्मधर्मिभावस्यापि सत्त्वान्न बाधः। हेतुपक्षतावच्छेदकैक्यानिमित्तकासिद्धसाधनतानिरासाय हेत्वन्त-रोक्तिः। सत्त्वादिति ज्ञेयत्वादिति। ईश्वरवदिति। तत्र सकल-स्वजन्यानुकूलधर्मो ज्ञानमिच्छा प्रयत्नश्च तस्य कार्यमात्रं प्रति हेतुत्वात्त-द्वत्त्वेन दृष्टान्ते साध्यानुगम इति भावः ॥

चेतने तत्सिद्धावप्यचेतने तु नेत्यतोऽचेतनेऽपि शक्तिं साधयति—विमत इति। दाह इति। दाहानुकूलो वह्नीतराऽनिरूप्यातीन्द्रियो भाव-

---

[1] नत्वा–उ [2] तस्य ज–उ. [3] तावच्छे–उ. [4] वदद–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न्द्रियधर्मवान् दाहकारणत्वात् आत्मवत् ॥

[1]करवह्निसंयोगो वा कार्यानुकूलभावभूतधर्मवान् कारणत्वात् ज्ञेयत्वाच्च[2] आत्म[3]वदित्याद्यनुमानैरतीन्द्रियशक्तिसिद्धिः ॥

द्वितीयानुमाने दाहानुकूलपदं अननुकूलतादृशधर्मेणार्थान्तर[4]तां, वह्नीतरानिरूप्यपदमदृष्टवदात्मसंयोग[5]प्रतिबन्धकाभावाभ्यामर्थान्तरतां, अतीन्द्रि-

भूतो यो धर्मस्तद्वानित्यर्थः । तादृशो धर्मः शक्तिरेवेति भावः । दाहानुकूलत्वं च दाहाभावप्रयोजकाभावप्रतियोगित्वं पूर्ववद्धयेयम् । अतीन्द्रियत्वं च अस्मदादिप्रत्यक्षाविषयत्वं ध्येयम् । विशेषणानां कृत्यमग्रे व्यक्तम् । आत्मवदिति । तत्र तादृशादृष्टरूपधर्मवत्त्वेन साध्यानुगतिर्ध्येया ॥

गुणेऽपि तां साधयति—करेति । यद्वा वह्नीतरानिरूप्येति विशेषणोपादनाद्गौरवं मन्वान आह—करेति । कार्येति । स्वकार्येत्यर्थः । अतीन्द्रियेत्यपि ग्राह्यम् । तेनोक्तरूपसंयोगत्वे नार्थान्तरम् । आदिपदेन प्रतिबन्धदशाऽऽपन्नो वह्निर्दाहजनकदशावृत्तिकार्यानुकूलभावधर्मशून्यः दाहाजनकत्वात् तीक्ष्णकुठारा[6]कुण्ठकुठारवदित्यादिमण्युक्तग्रहः ॥

प्रथमसाध्ये[7]वक्तव्याभावादाह—द्वितीय इति । साध्य इति योज्यम् । तादृशेति । वह्नीतरानिरूप्येत्यादिरूपेत्यर्थः । दाहानुकूले-

[1] कारणवह्नि–क. ज [2] त्वाद्वा–नं. क ग ज. [3] अत्र पूर्वत्र च 'आत्मत्व' इत्यस्ति–ज. [4] इतः 'हतौच' इत्यन्तस्य स्थाने 'वारणाय अदृष्टवदात्मसंयोगप्रत्यक्षोष्णस्पर्शप्रतिबन्धकाभावैरर्थान्तरवारणाय वह्नीतरानिरूप्यातीन्द्रियभावभूतेति विशेषणानि' इत्यस्ति–दा. [5] गेनार्थान्त इत्यस्ति–क. [6] रात्कु–उ. [7] आद्ये व–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यपदं प्रत्यक्षो[1]ष्णस्पर्शेनार्थान्तरतां वारयितुम्[2] ॥

हेतौ च दाहपदं घटादावव्यभिचाराय । न चात्रात्मत्वमुपाधिः । अदृष्टत्वस्य दाहानुकूलत्वेनादृष्टे साध्याव्यापकत्वात् ॥

न चादृष्टात्मान्यान्यत्वमुपाधिः । तादृशधर्मवत्त्वे साध्ये उक्तान्यान्यत्वस्याप्रयोजकत्वेन साध्याव्यापकत्वात्[3] ॥

---

त्यनुक्तौ यत्किंचिदनभिमतधर्मसिद्ध्याऽप्युपपत्तेरुद्देश्यासिद्ध्यर्थं तदिति भावः । यद्वा कर्मानुकूलस्थितस्थापकसंस्काररूपवह्निगतधर्ममादायार्थान्तरवारणाय दाहानुकूलपदमित्यर्थः । स्थितस्थापकगुणस्तु वह्निगतक्रियानुकूल एवेति भावः । न चेति । द्वितीयानुमान इत्यनुषङ्गः । जीवात्मन्यदृष्टवत्त्वमादायेश्वरात्मनि च तादृशज्ञानादिधर्म[4]त्वमादाय साध्यव्यापकत्वात्साधनवति पक्षेऽभावेन साधनाव्यापकत्वादिति भावः । अदृष्टत्वस्येति । तस्य कारणतावच्छेदकत्वेन प्रागुक्तस्य कारणतावच्छेदकसाधारणानुकूलत्वस्य सत्त्वात्तादृशादृष्टत्वरूपधर्मवत्यदृष्टे आत्मत्वं नेति साध्याव्यापकत्वादित्यर्थः । स्वमते शक्तेरेव कारणताऽवच्छेदकत्वेऽप्यदृष्टत्वस्य नियामकत्वात् । न्यायमते तस्यैव कारणतावच्छेदकत्वाच्च ॥

उक्तरूपसाध्यवत्यदृष्टेऽप्युपाधिसत्त्वालाभाय प्रकारान्तरेणोपाधिमाशङ्क्य निराह—न चेति । एवं चात्मन्यदृष्टे[5]चोपाधेरपि सत्त्वान्न सध्याव्यापकत्वमिति भावः । अप्रयोजकत्वेनेति । अस्तूक्तरूपं साध्यं

---

[1] क्षेणो—नं. क. ग. [2] प्रतिबन्धकाभावेनार्थान्तरतां वारयितुं भावभूतेति पदम्—क. [3] तादृशेत्यादेः स्थाने अप्रयोजकत्वात् इत्यस्ति—नं. क. न चेत्यादेः स्थाने 'अप्रयोजकत्वात्' इत्यस्ति—ज. [4] वत्त्व—उ. [5] ष्टेप्यु—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न चाचाक्षुषद्रव्यत्वमुपाधिः । तैजसे[1] त्र्यणुके चाक्षुपे [2]दाहानुकू[3]लातीन्द्रियोष्णस्पर्शवति साध्याव्यापकत्वात् । पक्षमात्रव्यावर्तकविशेषणवत्त्वेन साध्यव्यापकताग्राहकतर्काभावेन प्रतिबन्धकसत्त्वे ऐन्द्रियकस्यापि तादृशधर्मं विना कार्यजनकत्व-

माऽस्तूक्तरूपोपाधिरित्युक्ते विपक्षे बाधकाभावादिति भावः ॥

न चाचाक्षुषेति । आत्मनि तादृशादृष्टादिमत्त्वमादाय साध्यव्यापकत्वात्पक्षे साधनाव्यपकत्वादिति भावः । त्र्यणुकगतोष्णस्पर्शेऽतीन्द्रियत्वविवादिनं प्रत्याह—पक्षेति । तृतीयान्तानामुपाधेरेवेत्यादिसाध्ये [4]नान्वयः । अनुकूलतर्कसध्रीचीनस्य तादृशस्याप्युपाधित्वे दोषाभावादाह—साध्यव्यापकताग्राहकेति । निरुपाधिसहचार एव तादृशतर्क इत्यतो निरुपाधित्वमसिद्धमिति भावेनाह—प्रतिबन्धकेत्यादि । प्रकृतहेतोरेवोक्ततर्कानुगृहीतत्वेन चेति [5]दाहस्यैतादृशधर्मान्यैन्द्रियिकत्वप्रयोज्यत्वं[6] प्रतिबन्धकालेऽपि दाहः स्यात् । न चैवमतः प्रतिबन्धदशायां तादृशातीन्द्रियधर्मवत्त्वशून्यत्वाद्वह्नेर्दाहरूपकार्याजनकत्वं दृष्टम् । ऐन्द्रियकत्वे तु सत्यपि दाहजनकत्वं न दृष्टमित्यप्रतिबन्धदशायामपि तादृशधर्मवत्त्वाभावे चाक्षुषद्रव्यादपि वह्नितो दाहकार्यानुदयः स्यात् । तथा च हेतूच्छित्तिरूपविपक्षबाधकतर्कसहितत्वाद्धेतोः—

"अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसंग्रहः[7]" ॥

[1] सत्र्य–न. रा. ग. [2] तादृशातीन्द्रियोष्णस्य साध्यव्यापकत्वात्. इत्यस्ति–रा. तादृशातीन्द्रियोष्ण–ग. [3] लस्थू–नं. [4] ध्येन्व–उ. [5] पाठस्यै–उ. [6] त्वे प्र–उ. [7] भवः–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लक्षणविपक्षबाधकेनोक्तश्रुत्यादिबाधकप्रसङ्गेन[1] [2]प्रत्युत हेतोरे[3]वोक्ततर्कानुगृहीतत्वेन चोपाधेरेव साध्याव्यापकत्वात् । अत एव नाप्रयोजकत्वम् ॥

न च तृतीये आत्मत्वं द्रव्यत्वं [4]चोपाधिः । अदृष्टादौ साध्याव्यापकत्वात् । न च घटादौ व्यभिचारः । पक्षसमत्वात् ॥

---

इति न्यायेनोपाधेरेव साध्याव्यापकत्वादित्यर्थः । [5]केचित्तु प्रत्युत हेतोरेवोक्ततर्कानुग्रहः । उक्तेति । "परास्य शक्ति" रित्यादिश्रुतिस्मृतिबाधितत्वप्रसङ्गेनेत्यर्थः । अत एवेति । विपक्षे बाधकाद्युपेतत्वादेवेत्यर्थः । तथा च मणिकृदुक्तमप्रयोजकत्वदूषणमज्ञानमूलमिति भावः । अदृष्टादावित्यादिपदेन तादृशदण्डत्वादिधर्मवद्दण्डादिपरिग्रहः । अदृष्टस्यापि पूर्वोक्तरीत्या कार्यानुकूलादृष्टत्वधर्मवत्त्वादिति भावः ॥

घटादाविति । तस्यापि स्वगतरूपादिकं[6] प्रति परमते कारणत्वाज्ज्ञेयत्वाच्च हेतोः सत्त्वेऽपि साध्याभावादिति भावः । पक्षेति । शक्तयः सर्वभावाना' मिति स्मृत्या सर्ववस्तुष्वपि शक्तेरङ्गीकारादिति भावः ॥

मण्युक्तमनवस्थारूपप्रतिकूलतर्कपराहतिलक्षणबाधकमाशङ्क्य नि-

---

1 "साध्यव्यापकताप्राह" इत्यादेःस्थाने. "उपाधेरनुग्राहकतर्काभावेन" इत्यस्ति-नं. ज. 2 प्रत्युतेत्यपि नास्ति-ज. क. "उपाधेरनुग्राहकतर्काभावे" नेत्यधिकम्-क. इतः चोपाधेरित्यत्र 'उपाधे' रिति पर्यन्तं नास्ति-रा. 3 एवकारो नास्ति-ग. 4 वोपा-ग. ज. 5 क्वचि-उ. 6 दिप्र-उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[1] ननु — तथाऽपि बीजादावङ्कुरानुकूलशक्तिवच्छक्त्यनुकूला शक्तिरपि स्वीकार्या। बीजनिष्ठामङ्कुरजननशक्तिं प्रति बीजस्य समवायिकारणत्वात्। एवं तदनुकूला तत्पूर्वकालीना बीजादावनादिशक्तिपरंपराङ्गीकार्येति बीजादेरनादित्वं स्यादिति चेन्न। मन्मतेऽङ्कुरे शक्तियुक्तस्य[2] बीजस्य [3]बीजे शक्तात्स्वकारणादेवोपपत्त्या बीजगतशक्तिपरंपराऽनपेक्षणात्॥

किंच—यथा प्रतिबन्धके सत्यङ्कुरानुत्पत्तिः प्रामाणिकी तथा प्रतिबन्धाभिमतकिञ्चित्सत्त्वे यदि शक्त्यनुत्पत्तिः प्रामाणिकी स्यात्तदा शक्त्यनुकूलाऽपि शक्तिर्बी[4]जादौ स्वीकार्या स्यात्। न च तदस्ति॥

---

राह—नन्वित्यादिना। स्वीकार्येति। अन्यथा प्रागुक्तहेतोस्तत्र व्यभिचारापत्तेरिति भावेनाह—बीजनिष्ठामिति। तदनुकूलेति। अङ्कुरजननशक्तिजननशक्त्यनुकूलेत्यर्थः॥

अनवस्थाऽऽपादनमेवायुक्तं वैषम्यादिति भावेनाह—किंचेति॥

नन्वेवमपि—यथाकारणं बीजादिकं स्वकार्यजनने शक्तिमपेक्षते। तथा शक्तिरपि स्वकार्यजनने शक्त्यन्तरमपेक्षेत। साऽपि तथेत्यनवस्थादि

---

[1] इतः "निर्वाहकत्वादिति" इत्यन्तोभागः, 'तस्मात्' इत्यादेः 'प्रमाणानि इत्यन्तस्यानन्तरमस्ति—नं. रा. क. ज. [2] कवी—नं. [3] बीजशक्तेः स्व—नं. ज. [4] 'बीजादौ इति नास्ति—रा.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नापि शक्तावपि [1]स्वीकार्यानुगुणशक्तिः स्वीकार्येत्यनवस्था । समवायविशेषादिवत्स्वनिर्वाहकत्वादिति ॥

[2]तस्मादुक्तरीत्या [3]श्रुतिस्मृती अर्थापत्तिपञ्चकं परोक्तस्य विशिष्टाभावकारणत्वस्यानुपपत्तिस्तृणादेर्वह्निजातीयकारणत्वानुपपत्तिरनुमानानि च प्रमाणानि ॥

इति सहजशक्तिः [4]॥ ९ ॥

## अथाधेयशक्तिः ॥ १० ॥

एवमाधेयशक्तिरपि स्वीकार्या । अन्यथा

---

स्यादित्यत आह—[5]नाऽपीति । विशेषेति । नित्यद्रव्येषु व्यावर्तकतया तार्किकाभ्युपगतविशेषस्येवेत्यर्थः ॥

सहजशक्तिवादः ॥ ९ * ॥

## अथाधेयशक्तिः ॥ १० ॥

एवमाधेयेति । सहजशक्तिवत्कारणविशेषो[6]ऽप्याद्याप्युपेयेत्यर्थः । यद्यपि सहजशक्तेरभावे विष्णावेव वेदस्य शक्तितात्पर्यरूपसमन्वयायोग

---

[1] स्व—नं. ग. ज. [2] 'तस्मात्' इत्यादिग्रन्थो नास्ति—ग. [3] 'शक्तौ' इत्यधिकम्—नं. [4] वाद इत्यधिकम्—रा. [5] सापी—उ. *४१—उ. [6] त्वया-द्याप्यु-उ.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्रीहीन् प्रोक्षतीत्यादौ प्रोक्षणजन्यस्य व्रीहिनिष्ठ-
स्यातीन्द्रियस्ये[1]प्सितस्यातिशयस्याभावेन व्रीही-
नितीप्सितकर्मणि द्वितीया न स्यात् ॥

यदाधेयशक्त्यभावे काचिदपि हानिर्नास्ति ; पदानि पदान्तरसन्निधाना-हितशक्त्यन्तराणि विशेषतोऽप्यन्वितान् स्वार्थानभिदधतीति पद्धति-वाक्यस्यान्विताभिधानवादेऽग्रे गतेर्वक्ष्यमाणत्वेन विशेषान्वयतोऽप्याधे-यशक्तेरनपेक्षितत्वात् । तथाऽपि करणानां प्रमाजननस्वभावानामपि दोषेणाहितशक्तिकानामप्रमाजनकत्वस्वीकारात्तथा प्रामाण्यग्रहणस्वभाव-स्यापि साक्षिणो विसंवादादिरूपपरीक्षा[2]हितशक्तिकस्याप्रामाण्यग्राहकत्व-स्वीकारात्संस्काराहितशक्तिकस्य चक्षुरादेः प्रत्यभिज्ञा[3]जनकत्वस्वीकारा-त्तदुपयोगितया [4]तत्साधनमित्यवधेयम् ॥

व्रीहीनिति । यदा हि 'चतुरो मुष्टीर्निर्वपति' इति पुरोडाशार्थतया निरुप्तानां व्रीहीणां प्रोक्षणं विधीयते "व्रीहीन् प्रोक्षति" इति । आदिपदेन "अपः प्रणयति" इत्यादिग्रहः । ईप्सितस्येति । आप्तु-मिष्टस्येत्यर्थः । आप्लृव्याप्तावित्यस्य सन्प्रत्यये "आप्ज्ञप्यृधामीत्" इतीकारा[5]देशे सति निष्ठायामीप्सितमिति रूपसंपत्तेः ॥

ईप्सितकर्मणीति । कर्मकारकं तावद्द्विविधम् । ईप्सितमनीप्सितं च । "कर्तुरीप्सिततमं कर्म, तथायुक्तं चानीप्सितम्" इति पाणि-न्युक्तेः । तत्राद्यं ग्रामं गच्छति व्रीहीन् प्रोक्षतीत्यादि । द्वितीयं तु विषं भुङ्क्ते इत्यादि । अतस्तद्व्यावृत्त्यर्थमीप्सतकर्मणीत्युक्तम् । द्वितीयेति । 'कर्मणि द्वितीया' इति सूत्रोक्ता द्वितीयाविभक्तिरित्यर्थः ॥

[1] इप्सितपदं नास्ति—ग. स्य तस्य—ज. [2] क्षासहि—उ. [3] नादिज—उ. [4] या एत—उ. [5] दीप्सितेति सं—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च प्रोक्षणजन्यजलसंयोग एव व्रीहिनिष्ठोऽतिशयः । क्षणिकस्य तस्य भाविकरणोत्पा[1]द्यापूर्वानुपयोगित्वेनानीप्सितत्वात् । संयोगावच्छिन्नक्रियायाः प्रोक्षणपदार्थत्वेन स्वस्यैव [2]स्वजन्यत्वविरोधाच्च ॥

न च धात्वर्थे संयोगादिरुपलक्षणमात्रमिति वाच्यम् । त्यजतिगच्छत्योः पर्यायत्वापत्तेः । ग्रामसंयोगविभागयोर्धात्वर्थाप्रवेशात् । क्रिया[3]त्वमात्रस्य चोभयत्र साम्यात् ॥

---

शशधरे मणौ चोक्तमाशङ्क्य निराह—न चेति । भाविकरणेति । करणं यागः भावि च तत्करणोत्पत्त्यपूर्वं च तदनुपयोगित्वेनेत्यर्थः । प्रोक्षितव्रीहयो हि अवघातादिद्वारा पुरोडाशं निर्वर्त्य तत्साधकयागक्रियाजन्योत्पत्त्यपूर्वे उपयुज्यन्ते । सन्निपात्यङ्गत्वात्तच्च व्यवहितो [4]तत्कालभावीति कथं तदुपयोगः । तदुपयोगाभावे ईप्सितं न स्यादिति भावः । धात्वर्थे इति । प्रोक्षणादिरूपधात्वर्थे इत्यर्थः । संयोगादिरेवेति । विभाग आदिपदार्थः । ग्रामं त्यजतीत्यत्र ग्रामविभागस्त्यजधात्वर्थे उपलक्षणमित्यर्थः । त्यजतीति । त्यज विसर्गे गम्लृ गताविति धात्वोरित्यर्थः । अवच्छेदकीभूतसंयोगविभागयोरुपलक्षणत्वे क्रिया[5]मात्रस्योभयत्र धात्वर्थे सत्त्वादिति भावेनाह—ग्रामेति । एवमित्यस्य व्याख्या व्रीहीणामित्यादि । ग्रामस्य यथा तथेति भावः ॥

---

[1] त्पत्त्य–नं. रा. क. ग. ज. [2] स्वपदं न–ज. [3] यामा–नं. रा. क. ग. ज. [4] त्तत्काल–उ. [5] त्वमा–उ.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किञ्चैवं व्रीहीणामपि प्राप्यकर्मत्वे संस्कार्यकर्मत्वाभावेन—

"उत्पाद्यं च विकार्यं च प्राप्यं संस्कार्यमेव चे"

ति लोक[1]सिद्धं कर्मणश्चातुर्विध्यं न स्यात् ॥

यदि च स्थायी[2] संयोगध्वंसोऽपूर्वोपयोगी

---

उत्पाद्यमिति । कुलाला घटमुत्पादयतीत्यादावुत्पाद्यकर्म, काष्ठं [3]तक्ष्णा करोति सुवर्णं कुण्डलं करोतीत्यादौ विकार्यकर्म, ग्रामं गच्छतीत्यादौ[4] व्रीहीन् प्रोक्षतीत्यादौ संस्कार्यं कर्मेति चातुर्विध्यं न स्यादित्यर्थः । यद्यपि प्रथमे कर्तुरीप्सिततमं कर्मेत्यत्र मञ्जर्याम्—

"निवर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।"

इत्युक्त्वा—

यदसंजायते यद्वा जन्मना यत्प्रकाश्यते ।
तन्निवर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम् ।
प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादि भस्मवत् ।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णकटकादिवत् ।

इत्यादिना तत्स्वरूपं चोक्तम् । तथाऽपि[5] प्राभाकरैराघाराग्निहोत्राद्यधिकरणेषु तत्र चातुर्विध्यस्योक्तत्वात् । पिष्टं सं[6]यौति, आज्यं विलापयति गां दोग्धि, व्रीहीन् प्रोक्षतीत्यादेरुदाहृतत्वाच्चैवमुक्तमिति बोध्यम् ॥

ननु प्रोक्षिता व्रीहयोऽवघाताय कल्प्यन्त इति वाक्यबलेनोत्तरोपयोगित्वेनावगतप्रोक्षणस्योपलक्षणतया संयोगध्वंसद्वारोत्तरोपयोगोऽस्त्वित्यत आह—यदि चेति । अपूर्वेति । योगोत्पत्त्यपूर्वेत्यर्थः ॥

---

[1] प्रसि–रा. ग. [2] 'सन्' इत्यधिकम्–नं. यिस–रा. [3] भस्मक–उ.
[4] प्राप्यं व्रीहीन्–उ. [5] तथापि इति नास्ति–उ. [6] संयोजयति–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तर्हि यागध्वंस एव स्वर्गोपयोगी स्यात् ॥

किंचैवं परमतेऽपि प्रोक्षणजन्यमात्मनिष्ठमपूर्वं[1] कल्प्यं स्यात् । न चात्मनिष्ठमेवादृष्टं व्रीहिसंयुक्तात्मद्वारा व्रीहिसंबद्ध[2]मतिशयः । साक्षात्संबन्धस्यौत्सर्गिकत्वात् । प्रोक्षणजन्यादृष्टवदात्मसंयोगस्याप्रोक्षितव्रीहिष्वपि सत्त्वाच्च ॥

न चात्मनिष्ठमदृष्टं स्वरूपसंबन्धेन साक्षाद्व्रीहिसंबद्धमिति वाच्यम् । अदृष्टस्यात्मना समवायो व्रीहिभिः स्वरूपसंबन्ध इति संबन्धद्वय कल्पने गौरवात् ॥

---

नन्वेवं यागध्वंसस्यानन्तत्वा[3]त्कालानन्त्यं स्यादित्यतो दोषान्तरमाह—किंचैवमिति ॥

नन्वस्त्वेवं व्रीहीणां द्वितीयान्तानामीप्सितकर्मत्वान्यथाऽनुपपत्त्या विहितक्रियारूपप्रोक्षणजन्यातिशयवत्त्वं [4]परंपरैवान्यगतेन साक्षात्स्वरूपसंबन्धेन वोपपन्नमिति किमर्थमप्रामाणिकानेकापूर्वं व्रीहिषु कल्पनीयमित्याशङ्क्याह—न चेति । [5]तच्चात्मनीति च स्वरूपसंबन्धेन । साक्षादिति । आत्मनिष्ठज्ञानादेर्बाह्यघटादिनेवेति भावः । गौरवादिति । ज्ञानादेस्त्वनन्यगता[6]त्मनिष्ठत्वानुभवबलेन च संबन्धद्वयकल्पनम् । न चैवं प्रकृते । व्रीहिगतत्वेनैव कल्पने बाधकाभावादिति भावः ॥

---

[1] वंमक-नं. वंस्या-रा. वं क-ग. [2] द्धोति-नं. क. ज. [3] त्फला-उ.
[4] तच्च इत्यधिकम्-उ. [5] नचात्मनी-उ. [6] त्याआत्म-उ. [7] ल्प्येत-उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च–ग्रामं गच्छामि, घटं जानामि, अतीतं जानामीत्यादौ व्यभिचारः, ग्रामे संयोगादेरनीप्सितत्वात् अन्यस्ये[1]प्सितस्याभावात्, घटादौ[2] च त्वन्मते ज्ञातताया अभावादिति वाच्यम् । ग्रामादौ शयनासनादेर्घटादौ च व्यवसायजन्यानुव्यवसायस्मरणादिविषयत्वस्य व्यवहारयोग्य[3]त्वस्य च क्रियाजन्येप्सितस्य सत्त्वात् ॥

न च शत्रुवधमुद्दिश्य विहिते श्येनादौ देवतोद्देशेन विहिते यागादौ च व्यभिचारः । तत्रापि शत्रुनिष्ठस्य ज्वरस्फोटादेर्देवताप्रीतेश्च सत्त्वात् ॥

तस्मात् प्रोक्षणादिकं व्रीहिनिष्ठेप्सितजनकं

---

एवं द्वितीयाऽवगतेप्सितकर्मत्वान्यथाऽनुपपत्त्या व्रीहिष्वेवातिशयः कल्प्यो न त्वात्मनि परंपरासंबन्धादिना गौरवप्रसङ्गादित्युक्तम् । तदयुक्तम् । ग्रामं गच्छतीत्यादौ का गतिरित्यादिना मणावेव व्यभिचारोक्तेरित्यतस्तदाशङ्क्य निराह–नचेत्यादिना । व्यभिचार इति । द्वितीयाऽवगतेप्सितकर्मत्वबलेन कर्मकारक एवातिशयः कल्प्य इत्यस्य व्यभिचार इत्यर्थः । सर्वत्राप्युक्तकर्मकारकेऽतिशयरूपसाध्य[4]सत्त्वात्तत्र व्यभिचारमुद्धरति–ग्रामादाविति । पङ्ग्वाद्यधिकारिभेदापेक्षयोक्तं शयनासनादेरिति ॥

वक्ष्यमाणप्रयोगे व्यभिचारमुद्धरति—न च शत्रुवधमिति । तस्मादिति । अन्यथोपपत्तिव्यभिचारयोरभावादित्यर्थः । तदुद्देशेन

---

[1] स्य चे–नं. रा. क. ज. [2] टे च–नं. [3] ग्यस्य–नं. [4] वत्त्वोक्तया व्यभि–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तदुद्देशेन विहितत्वात् । पित्राद्युद्देशेन क्रियमाण-गयाश्राद्धादिवत् ॥

न च संस्काराणां प्रतिव्रीहि नानात्वे गौरवम् । प्रोक्षितसर्वव्रीहिष्वेकत्वे तदाश्रयत्रिचतुरादि[1]व्रीहि-नाशानामननुगतत्वेन संस्कारनाशं प्रत्य[2]नाश्यत्वे-नैव प्रयोजकत्वे एकव्रीहिनाशेऽपि संस्कारनाशाद्धा-विकार्यं न स्यादिति वाच्यम् । उक्तरीत्या संस्का-रस्य व्रीह्याश्रितत्वे प्रमितेऽनन्तरं प्रतिसन्धीय-मानस्य नानात्वस्य फलमुखत्वेनादोषत्वात् । त्वन्मतेऽप्यनेकयजमानकसत्रयागादावपूर्वनानात्व-स्यावश्यकत्वाच्च ॥

---

व्रीह्याद्युद्देशेनेत्यर्थः । विहितत्वमात्रस्य व्यभिचाराद्विशेषणोक्तिः । न च विशेषणासिद्धिः शङ्क्या । द्वितीयावगतकर्मत्वेनैव तत्सिद्धेरुक्तत्वादिति भावः ॥

उक्तानुमानस्य मण्याद्युक्ततर्कपराहतिमाशङ्क्य निराह—न च संस्काराणामिति । सर्वव्रीहिष्वेकत्वमित्यापादकस्यैकव्रीहिनाशेऽपीत्या-दिनाऽऽपाद्येऽन्वयः । नन्वेकव्रीहिनाशान्न सर्वव्रीह्यनुगतैकसंस्कारनाशः । किं तु द्वयोस्त्रयाणां चतुर्णां पञ्चादीनां वा नाश एवेत्यत उक्तं तदाश्रयेत्यादि । प्रयोजक[3] इति । वक्तव्ये सतीति शेषः ॥

आत्मनिष्ठापूर्वकल्पनेऽपि क्वचिद्गौरवमस्त्येवेत्याह—त्वन्मत इति । ये यजमानास्त ऋत्विज इति यजमानानामेव सत्रयागे ऋत्विक्त्वेन

---

[1] आदिपदं न—नं. ज. —[2] त्याश्रयनाशकत्वे—नं. ग. ज. [3] त्व इ—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यद्वा एकैव शक्तिरस्तु प्रतिव्यक्ति वृक्षाणां भिन्नानाश्रयत्वेऽपि वनत्वावच्छिन्नस्य तदाश्रयत्ववत्प्रत्येकं व्रीहीणां तदनाश्रयत्वेऽपि कार्योपयोगित्वरूपधर्मावच्छिन्नस्य तदाश्रयत्वोपपत्त्यैकव्रीहिनाशे तदवच्छिन्नानाशेन संस्कारानाशात् ॥

यद्वा यत्किञ्चिदाश्रयनाशेऽपि क्षिप्यमाणवालुकपिण्डादौ वेगाख्यसंस्कारानाशवदिहाप्यनाशोऽस्तु ॥

यत्तु—प्रोक्षणमपूर्वजनकं दृष्टद्वाराभावे सति

---

सर्वेषामपि याग[1]भाक्त्वादिति भावः ॥

एक[2]पक्षेऽप्यधिकरणतावच्छेदकैक्यमादाय दोषं निराह—यद्वेति । अधिकरणतावच्छेदकैक्येनैकद्वित्रिनाशेऽप्यधिकरणतावच्छेदकावच्छिन्नसत्त्वन[3]वाऽश्रितसंस्कारानाश इति भावेन दृष्टान्त पूर्वमाह—प्रतिव्यक्तीति ॥

व्रीहित्वादेरधिकरणतावच्छेदकत्वेऽपि न दोष इत्याह—यद्वेति । ननु प्रोक्षितव्रीहिष्ववघातादिनैकैकावयवापगमे सति पीलुपाकप्रक्रियया द्रव्यान्तरोत्पत्त्या तत्र संस्काराभावस्याभावेनोत्तरकार्यानुपयोगापत्त्याऽऽत्मनिष्ठतैवापूर्वस्य वाच्येत्यतो वाह—यद्वेति ॥

इदं च रीतित्रयं तृणारणिमणीनामेकशक्तिमत्त्वमित्यत्रा[4]नुसन्धेयमिति वदन्ति । अपूर्वजनकमिति । धर्मजनकमित्यर्थः । तथा

---

[1] फलेत्यधिकम्–उ. [2] शक्तीत्यधिकम्–उ. [3] नाश्रि–उ. [4] 'अपि' इत्यधिकम्–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कालान्तरभाविफलजनकत्वेन विहितत्वात् यागवदिति मण्युक्तमनुमानं, तत्र साध्येऽपूर्वपदं मानान्तरा[1]गम्यातिशयमात्रपरं चेद्व्रीहिनिष्ठस्यापि तथात्वेन सिद्धसाधनम् । आत्मनिष्ठत्वेन विशेषित[2]परं चेदुक्तहेतोर्विशेष्यमात्रेणोपपत्त्या विशिष्टं प्रत्यप्रयोजकत्वम्[3] ॥

किंच त्वन्मते जीवन्मुक्तावनुष्ठितप्रोक्षणादिनाऽदृष्टाजननात्कथं तस्य भाव्युपयोगः ॥

अपि च–द्वितीयाश्रुत्या किंचित्कारगर्भिते[4]न शेषित्वेन श्रुते ह्यादौ न किंचित्कारः शेषित्वेनाश्रुते आत्मनि च किंचित्कार इति श्रुतहा[5]न्यश्रुतकल्पने

---

च निषिद्धकर्मण्यव्यभिचाराय हेतौ विहितत्वादित्युक्तम् । प्रायश्चित्ते व्यभिचारनिरासाय कालान्तरेत्यादि ॥

"कृषिवाणिज्यगोरक्षा वैश्यस्यैव विधीयते" ॥

इत्यादिप्रत्येकं वर्णोपायविधिविहितकृष्यादावव्यभिचाराय दृष्टेत्यादिसत्यन्तम् ॥

हेतोर्व्यभिचारं चाह—किंचेति । आत्मनिष्ठत्वेनापूर्वस्य विशेषितत्वपक्षे तर्कपराहतिं चाह—अपि चेति । द्वितीयाश्रुत्येत्यस्य

---

[1] रग—नं–रा. [2] मात्रेत्यधिम्—नं. [3] हेतौ च द्वारपदं अदृष्टेतरद्वारपरम् । अलौकिकातिशयेतरद्वारपरं वा । आद्ये शक्तिवादिनं प्रत्यासिद्धिः । मन्मते शक्तेरेवादृष्टभिन्नत्वात् । नान्त्यः । अप्रयोजकत्वात् । अपूर्वाभावेऽपि शक्त्याख्यालौकिकव्यापारेणैव हेतोरुपपत्तेः–ग. [4] तत्वेन—नं–क. [5] नाश्रु—रा–ग.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्याताम् । अन्यथा सक्तून् जुहोतीत्यादाविव विभक्तिविपरिणामः स्यात् ॥

किंचैवं यागादिजन्यसंस्काराणामेव हविराद्यारम्भकपरमाणुनिष्ठत्वं किं न स्यात् ॥

किञ्च–प्रोक्षणादेरपूर्वजनकत्वे दर्शादिवत्प्रधानकर्मत्वं वा प्रयाजादिवदारादुपकारकत्वं वा स्यान्न तु सन्निपत्योपकारकत्वम् ॥

श्रुत इत्यनेनान्वयः । किंचित्कारो नामोपकार्यत्व[1]विशेषः । अन्यथेति । व्रीहिषु कस्याचिदतिशयस्याभावः किंत्वात्मन्येवेति पक्ष इत्यर्थः । इत्यादाविवेत्युपलक्षणम् । 'व्रीहिभिर्यजेते'त्यादौ द्वितीया च स्यात् । प्रोक्षतीत्यादाविव तत्राप्यदृष्टवदात्मसंबन्धादेस्त्वदुक्तद्वितीयाविभक्तिहेतोः सुवचत्वादित्यपि ध्येयम् ॥

साध्यविकलो दृष्टान्त इति भावेनाह—किंचै[2]वमिति । द्वितीयावगतस्य व्रीहिगतकिंचित्कारस्यात्मगतत्वे सति यागदानहोमादिजन्यापूर्वशब्दितसंस्काराणामेव परमाणुगतत्वं स्यात्, आत्मनस्तज्जन्यसुखभोगश्चादृष्ट[3]वत्परमाणुसंबन्धादेवोपप[4]त्तेः । दोषित्वबोधकाद्द्वितीयाश्रुत्या व्रीहिगतत्वेन प्रोक्षणजन्यसंस्कारस्यावगमादित्यपि सुवचत्वाच्च ॥

प्रागुक्तानुमानस्य तर्कपराहत्यन्तराण्याह—किञ्च प्रोक्षणादेरित्यादिना । फलापूर्वे व्याप्रियमाणमारादुपकारकं यागस्वरूपनिष्पत्तावुपयुज्यमानं सन्निपत्योपकारकमिति ज्ञेयम् । पुत्रानृतवचनेन

---

1 त्वेवि—उ. 2 चेति—उ. 3 ष्टपर. 4 यताभ् । ननु यजेतेत्यात्मनेपदबलात्संस्कारः कर्तृनिष्ठ उपगम्यत इतिचेन्न । तज्जन्यसुखभोगरूपफलाभिप्रायेणात्मनेपदोपपत्तेः । शेषित्वबोधक—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अपि चातिशयस्यात्मनिष्ठत्वे व्रीहीणां चण्डाला[1]दिस्पर्शेन तन्नाशो न स्यात् व्यधिकरणत्वात् । पुत्रानृतभाषणादिना पित्रादेर्नरकादिकं तु—

"स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति ।"

इत्यादिवचनात् । न चेह वचनमस्ति ॥

किञ्च—ताम्रमाम्ले[2]न शुध्यतीत्यादिस्मृतिविरोधः । तया[3] शुद्धिरूपस्य तन्निवर्त्या[4]शुद्धिरूपस्य चातीन्द्रियातिशयस्य ताम्रादिगतत्वोक्तेः । एवं देवताप्रतिमादावपि प्रतिष्ठादि[5]जन्याधेय[6]शक्तिः स्वीकार्या ॥

[7]आधेयशक्तिः ॥ १० ॥

---

पितुः कथं दोष इत्यत आह—पुत्रेति ॥ अतिशयस्य वस्तुनिष्ठत्वानङ्गीकारे बाधकान्तरं चाह—किञ्चेति—

रजसा शु[8]न्धते नारी नदी वेगेन शुध्यति ।
भस्मना शुध्यते कांस्यं ताम्रमाम्रेण शुध्यति ॥

इति स्मृतिविरोधं स्पष्टयति[9]—एवमिति । एवं च मण्याद्युक्तदिशा प्रतिमागतप्रतिष्ठाध्वंसादिर्वा प्रतिष्ठाजन्यादृष्टवदात्मसंयोगादिर्वा पूज्यत्वप्रयोजकः प्रतिमागत इत्याद्यप्रामाणिकं न कल्पनीयमिति भावः ॥

आधेयशक्तिः ॥ १० ॥

---

[1] आदिपदं न—नं. रा. क. ग.　[2] म्रेण—नं रा.　[3] तथाशु—ज.
[4] त्यातीन्द्रियाति—रा.　[5] आदिपदं न—नं. क. ज.　[6] या श—नं.　[7] इत्याधेयशक्तिवादः—रा. इत्याधेयशक्तिस्थापनम्—क.　[8] ध्यते—उ.　[9] 'तयेति' इत्यधिकम्—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ तमसो द्रव्यत्वसाधनम् ॥ ११ ॥

यथा शक्तिः पदार्थान्तरमेवं तमो द्रव्यान्तरम् ।
तमो द्रव्यं रूपि[1]त्वात् क्रियाऽऽश्रयत्वात् परिमाणा-
[2]दियुक्तत्वाच्च घटवदित्य[3]नुमानात् ॥

---



## अथ तमसो द्रव्यत्वसाधनम् ॥ ११ ॥



प्रसङ्गादाह---यथेति । पदार्थान्तरमिति । [4]द्रव्यगुणकर्म-सामान्यसमवायरूपपदार्थादन्यः पदार्थस्तथा [5]तदन्योऽपि पृथिव्यादि-द्रव्यनवकादन्यद्द्रव्यमित्यर्थः ॥

एतेन तमसो द्रव्यत्वे पृथिव्यादिनवकान्तर्भावो वाच्यः । स च न युक्तः । गन्धरसभास्वररूपस्पर्शशब्दहीनत्वेन भूतपञ्चकान्तर्भावा-योगात् । अनित्यत्वेन नित्यवस्त्वन्तर्भावायोगादिति निरस्तम् । अति-रिक्तद्रव्यत्वोपपत्तेः ॥

अन्तर्भावः शक्यश्चेदित्याद्यग्रेतनवाक्यं त्वनास्थेयमिति ध्येयम् । इत्यनुवादमहिम्नैव शक्तेरपि षट्पदा[6]न्तर्भावानुपपत्ति[7]र्बाधकं प्रत्युक्तं ध्येयम् । मणौ तमसो द्रव्यत्वाभावस्याचिन्त्यत्वेऽपि शशधरादौ चिन्ति-तत्वात् । तत्खण्डनेन नविलक्षणत्वाधिकरणे [8]प्राकृतेन्द्रियमनोभेदादित्येत-द्व्याख्यानसुधायां मनो नित्यं स्पर्शरहितद्रव्यत्वादित्यत्र तमसास्माकमनै-कान्त्यादित्युक्तहेतुसमर्थनार्थोऽयं प्रयत्नः ॥

---

[1] पवत्त्वात्–रा ग. [2] णवत्त्वाच्च–नं. [3] त्याद्य–नं. क. ज. ग. [4] यथा इति पूरितम्–उ. [5] तमोपि–उ. [6] दार्था–उ. [7] त्तिः बाधकं च इत्यस्ति–उ. [8] पञ्चेन्द्रिय–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न चासिद्धिः । नीलं तमः छाया गच्छतीत्य[1]-बाधितप्रत्ययात् । रामायणे "हनूमच्छाया[2]यां वायुपुत्रानुगामिनी"त्यनेन क्रियायाः, "दशयोजनविस्तीर्णे"त्यादिना परिमाणस्य 'छायायां संगृहीतायां' इत्यादिना ग्रहणस्य चोक्तेश्च ॥

क्रियाऽऽश्रयत्वादि[3]त्ययं च हेतुर्द्रव्यत्वसाधकः परीत्यैव बोध्यः । तेन मिथ्यात्वानुमानटीकाभावप्रकाशिकायां 'गुणाद्वा लोकवत्' इत्यत्र चन्द्रिकायां च गुणादावपि क्रियावत्त्वसाधनान्न व्यभिचारः शङ्क्यः । [4]पूत्यादीत्यादिपदेन गृह्यमाणत्वपङ्कभूतत्वपाठ्यमानत्वादिग्रहः ॥

छायेति । तस्यास्तमस्त्वस्य सर्वसंमतः तत्र क्रिया प्रत्यक्षसिद्धा । छायाहस्तचतुष्टयपरिमितेत्यादिपरिमाणप्रतीतिरादिपदार्थः—अबाधितेति । कदाऽपि न नीलं तम इत्यादिविपरीतप्रत्ययाभावाद्यौक्तिकबाधस्य[5] प्रत्यक्ष-प्रतीतितो दुर्बलत्वान्निरसिष्यमाणत्वाच्चेति भावः ॥

वचनेनापि क्रियावत्त्वादिकं व्यनक्ति—रामायण इति । वायु-पुत्रपदेन भीमभ्रान्तिनिरासायोक्तं हनुमच्छायायामिति । सुन्दरकाण्डे प्रथमसर्गे—

श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ।

तस्य सा शुशुभे छाया वितताल्वणाम्भसि ॥ इति ॥

तथा—

छायायां संगृहीतायां चिन्तयामास मारुतिः ।

इति वाल्मीक्युक्तेश्चेत्यर्थः । संगृहीतायां छायाग्रहेणेति योज्यम् ॥

[1] त्याद्य—रा. क. ज. ग. [2] थैषा—क. [3] प्रतीकत्रदिदं धृतम्—उ. [4] परिमाणादीत्यादि—उ. [5] 'चा' इत्यधिकम्—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वन्मते आलोकाभावत्वमेव तमस्त्वमिति तमस्त्वेन प्रतीते[1] नैल्या[2]रोपायोगाच्च । दोषाभावेनारोपायोगाच्च ॥

किञ्चान्धकारो नालोकाभावः । नात्रालोकः किंतु तम[3] इति पृथग्व्यवहारात् । आप्तोक्तेन तेजोऽभावेनान्धकारानुमानाच्च । प्रतियोगित्वेनाभिमतालोकाप्रतीतावपि प्रतीतेश्च । विरळनिबिडनिबिडतरत्वादिनोत्कर्षापकर्षादिप्रतीते[4]रबाधाच्च ॥

तमःसुघोरं गगनच्छदं सह-
द्विदारयद्भूरितरेण रोचिषा ।

---

न केवलं नैल्यादिधियो[5]ऽबाधादेव प्रमात्वं विशेषदर्शनेन कारणाभावेन च भ्रमत्वायोगाच्चेत्याशयेनाह—त्वन्मत इति । न हि शुक्तित्वेन ज्ञाने रजतारोपो युक्त इति भावः ॥

ननु तमस आलोकाभावा[6]न्यथानुपपत्त्या भ्रमत्वादिकं कथंचित्कल्पनीयमित्यतस्तदेवासिद्धमित्याह—किञ्चेति । अनुमानाच्चेति । लिङ्गलिङ्गिभावस्य[7] भेदाभावेऽसम्भवादिति भावः ॥

प्रतियोगित्वेति । न च दोषवशात् प्रतियोगिनो[8] भानाभावेऽपि तमसो भानं युक्तमिति वाच्यम् । तादृशक्लृप्तदोषस्य कस्यचिदभावात् । तमसः स्वरूपमेव दोष इति कल्पनं [9]तस्याभावत्वसिध्युत्तरकालीनत्वेनान्योन्याश्रयादिति भावः—विरळेति । अभावे च

---

[1]तेर्नै—नं. तौर्नै—क. ज. [2]ल्याया—रा. क. ग. [3]'एव' इत्यधिकम्—रा. [4]तेश्च—नं. [5]धिया—उ. [6]वत्वान्य—उ. [7]वासम्भ—उ. [8]नो-भानेपि—उ. [9]तु' इत्यधिकम्—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मनोजवं निर्विविशे सुदर्शनं
गुणच्युतो रामशरो यथाचमूम् ॥

इति भागवते,

ततः कदाचिद्दुःखेन रथमूहुस्तुरङ्गमाः ।
पङ्कभूतं हि तिमिर[1]मश्वानां जायतेऽनघ ॥
अथ पर्वतभूतं [2]तत्तिमिरं समजायत ।
तदासाद्य [3]हया राजन् निष्प्रयत्नास्ततः स्थिताः॥
ततश्चक्रेण गोविन्दः पाटयामास तत्तमः ॥

इति हरिवंशे च तमसश्चक्रविदार्यत्वपङ्कत्वपर्वतत्वाद्युक्त्या काठिण्यादिप्रतीतेश्च । तेजोऽभाव[4]वहुत्वादिनोत्कर्षादिधीश्चेत्सुखादावपि दुःखाभावादिवाहुल्यादिनोत्कर्षादिधीः स्यादिति दुःखाभाव[5] एव सुखं[6] संयोगाभाव एव विभागोऽन्धकाराभाव एव चा[7]लोक इति स्यात् ॥

---

नोत्कर्षादिधीरिति भावः । निर्विविशे प्रविवेश—भागवत इति । दशमस्कन्धेऽश्वमेधप्रकरणे--काठिण्या[8]दिप्रतीतेश्चेति । अन्धकारो नालोकाभाव इत्यन्वयः ॥

प्रागुक्तोत्कर्षादिप्रतीतिरूपहेतोरन्यथा[9]ऽनुपपत्त्याऽप्रयोजकत्वमाशङ्क्य निराह —तेज इति । एतेनेत्युक्तं व्यनक्ति —

---

[1] रंस्पर्शेन ज्ञाय-ज. [2] तु तिमिरं समपद्यत-ज. [3] महाराज निष्प्रयत्ना हयाः स्थिताः-ज. [4] बाहुल्यादिनो-नं. रा. क. ज. ग. [5] एव इति नास्ति-नं. एवालो-क. [6] स्यात् इत्यधिकम् -रा. [7] च इति नास्ति--रा. नं. [8] ण्य-प्र-उ. [9] थोपपत्त्या-उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतेन तमो द्रव्यान्तरमिति मतेऽप्यालोकाभावस्यावश्यकत्वात्स एव तम इति निरस्तम्। आलोको द्रव्यान्तरमिति मतेऽप्यन्धकाराभावस्यावश्यकत्वात् ॥

ननु—तमसो[1] रूपित्वे आलोकनिरपेक्षचक्षुर्ग्राह्यत्वं न स्यात्। तस्मात् प्रौढप्रकाशकयावत्तेजःसंसर्गाभावो वा, उद्भूतरूपयोग्ययावत्तेजः संसर्गा-

---

आलोक इति। नचालोकस्य द्रव्यत्वमनन्यथासिद्ध[2]स्वरूपवत्त्वादिप्रमाणसिद्धमिति वाच्यम्। तमोद्रव्यत्वस्यापि प्रागुक्तरूपवत्त्वादिप्रमाणसिद्धत्वादिति भावः॥

ननु तानि प्रमाणानि तर्कपराहतानि न द्रव्यत्वसाधकानीति भावेन शशधराद्युक्तं तर्कविरोधरूपवत्त्वं हेतौ तावदाशङ्क्य निराह—नन्वित्यादिना नव[3]च्छायायां गतेरित्येतत्पर्यन्तेन ग्रन्थेन ॥

तस्मादिति। आलोकनिरपेक्षचक्षुर्ग्राह्यत्वेन द्रव्यत्वायोगादित्यर्थः। तारादितेजसि सत्यपि तमो व्यवहाराद्यु[4]क्तं प्रौढेति। रूपित्वादिना विविच्य प्रकाशनसामर्थ्यं प्रौढत्वम्। विद्यमानेऽपि प्रौढतेजसि तेजोन्तराभावमादाय तमोव्यवहारापत्तेरुक्तं यावदिति। तत्रैव तदन्योन्याभावसत्त्वात्तमोव्यवहारोपपत्तेरुक्तं संसर्गेति। संसर्गारोपपूर्वकोऽभाव इत्यर्थः। तेन संसर्गान्योन्याभाववति न तमोव्यवहारापत्तिस्तत्र संसर्गतादात्म्यस्यैवारोपात्। उद्भूतेति[5]। उद्भूत[6]रूपयोग्यं

---

[1] सो निरू–क. [2] द्धिरू–उ. [3] चच्छा–उ. [4] दुक्तं–उ. [5] अत्र प्रतीको न धृतः–उ. [6] 'तं रूपं यावद्यत्तेजः' इत्याद्यस्ति–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भावो वा, तमस्तेजोविरोधि द्रव्यमिति मते यत्तेजःसं-
सर्गा[1] विरोधि[2] तदभावो वा, तम इति चेन्न[3]। रात्रिंच-
राणामुलूकादीनां ज्ञातॄणामिवान्धकारस्य ज्ञेयस्या-
प्यालोकनिरपेक्षचाक्षुषसाक्षात्कारसंभवात्। आलोके

---

यावत्तेजः तत्संसर्गाभाव इत्यर्थः । यावदादिपदकृत्यं पूर्ववत्। परमाण्वादितेजसि सत्यपि तमोऽव्यवहारा[4]द्योग्यमित्युक्तम्। ग्रीष्मोष्मादौ सत्यपि तमो व्यवहारादुद्भूतेत्युक्तम्। विरोधीति। तमो विरोधीत्यर्थः॥

ज्ञातॄणामिति। रात्रौ रूपवत्पदार्थद्रष्टृभिरालोकनिरपेक्षयैव घटादिपदार्था उपलभ्यन्त इत्येतावता घटादयोऽर्था रूपवन्तो नेति कल्प्यन्ते[5]। उलूकादयो वा चक्षू[6]रहिता[7] इति कल्प्यते। किंतूलूकादिप्राणिचक्षुषामेव तादृशस्वभाव इत्युच्यते। एवं केषांचिद्रूपवद्वस्तूनामालोकसापेक्षचक्षुर्ग्राह्यत्वेऽपि तमोरूपवस्तुनोऽपि तन्निरपेक्षचक्षुर्ग्राह्यत्वमस्त्वित्यर्थः॥

यत्तु रात्रिंचरादीनामपि[8] बाह्यालोकनिरपेक्ष[9]चक्षुर्ग्राहकमित्यसिद्धमेव। तत्रापि तेजोन्तरस्य सत्त्वादिति शशधरोक्तम्। तन्न। तादृशतेजोन्तरसत्त्वे मानाभावात्। तथैव तमसोऽपि तादृशतेजःसापेक्षचक्षुर्ग्राह्यत्वसंभवाच्चेति भावः॥

प्रागुक्ततर्कस्याप्रयोजकत्वमुक्त्वा व्यभिचारं चाह—आलोक इति। आलोकान्यत्वे सतीत्यापादकविशेषणे च तमोन्यत्वे सतीत्यापि विशेष्यताम्। अद्याप्यालोक एव द्रव्यं तमस्तु नेत्यस्यासिद्धेरिति भावः। आपाद्याभिप्राय-

---

[1] र्गवि—नं. र्गोवि—चा. क. ग. ज. [2] धी—रा. ग. ज. [3] न इति नास्ति—नं. [4] उद्भूतरूपेत्युक्तम्—उ. [5] ते—उ. [6] रादिर—उ. [7] 'न' इत्यधिकम्—उ. [8] पेचकादीनामपि—उ. [9] क्षं च—उ.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यभिचाराच्च। तत्र विषयीभूतस्यालोकस्य सत्त्वेऽ-[1]पि विषयसंस्कारकस्यालोकान्तरस्याभावात् ॥

ननु तत्राप्या[2]लोकावयवग्रहे महत आलोकाव-यविनस्तद्ग्रहे च महतोऽवयवस्यापेक्षाऽस्ति [3]जल-स्थतेजस्त्र्यसरेणुग्रहे तु सौरालोक एवास्तीति चेत्[4] । न तावदालोकसंबन्धस्य साक्षात्परम्परासाधारण-संबन्धत्वेन हेतुत्वम् । अतिप्रसङ्गात् ॥

नापि संयोगसमवायसाधारणसाक्षात्संबन्धत्वेन। तदपेक्षया संयोगत्वजातेर्लघुत्वात् । अवयवावय-विनोश्च संयोगाभावात् ॥

---

व्यक्तीकरणेन व्यभिचारं व्यनक्ति--तत्रेति। आलोकसाक्षात्कार इत्यर्थः॥

किं महालोके व्यभिचारस्त्र्यणुकरूपालोके वा। आद्येप्यवयविन्युत अवयव इति विकल्प[5]क्रमेण क्रमेण व्यभिचारोद्धारमाशङ्क्य निराह— नन्वित्यादिना। त्र्यसरेण्ववयवस्याप्रत्यक्षादाह—सौरालोक एवेति॥

आलोकस्य विषयसंस्कारकत्वं संयोगसंबन्धेनैव वाच्यम् । एवं च रूपित्वे संयोगसंबन्धेन विषयसंस्कारकालोकनिरपेक्षचक्षुर्ग्राह्यत्वं न स्यादित्यापाद्यार्थः स्यात्। तथा च त्र्यसरेणौ व्यभिचाराभावेऽपि महालोके व्यभिचारस्तदवस्थ एवेति भावेन प्रसक्तपक्षप्रतिषेधपूर्वमाह—-न ताव-दित्यादिना। अतिप्रसङ्गादिति । आलोकसंबन्धकुड्यसंबन्धा[6]न्धकारस्य साक्षात्कारोदयप्रसङ्गादित्यर्थः ॥

संयोगाभावादिति। तथा च तत्राव्यभिचारायालोकान्यत्वे

---

[1] 'अपि' इति नास्ति–नं. [2] आलोकपदं न–रा. [3] तैजसत्र्यसरे- इत्यस्ति–नं. क. जालस्थ तेजस्त्र्यस–रा. ग. जलस्थपदं न–ज. [4] च न–ज. [5] ल्प क्रमेण व्यभिचा–उ. [6] द्ध अन्धकारस्थे–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

किञ्च—तमस आलोकाभावत्वेऽपि नीलं तम इति धीर्न स्यादिति बाधकं सममेव। रूपसाक्षात्कारस्यालोक[1]सापेक्षचक्षुर्जन्यत्वनियमात्। न च प्रमारूपविशेष एवायं नियमः। सामान्ये बाधकाभावात्। शुक्ल[2]पटादौ चाक्षुषस्य नील इति भ्रमस्याप्यालोकं विनाऽनुत्पत्तेश्च ॥

यत्तु—[3]वर्धमानोक्तं वस्तुतो रूपवतो विशेष्यस्य

सति रूपित्वमेव तादृशालोकसापेक्षचक्षुर्ग्राह्यत्वे प्रयोजकमित्युपेत्योक्तापादकस्यालोकेऽभावान्नोक्ततर्कस्तत्र व्यभिचारीति वाच्यम्। एवं सति तमोन्यत्वे सति रूपित्वमेवालोकापेक्षचक्षुर्ग्राह्यत्वे प्रयोजकमित्युपेयताम्। एवं[4] तमसो रूपित्वेऽपि नोक्ततर्कबाधः। आलोकस्येव तमसोप्यनन्यथासिद्धोक्तप्रमाणसिद्धद्रव्यत्ववत्त्वादिति भावः ॥

अस्त्वेवं कथं चिदुक्तन्यायेनालोके व्यभिचाराभावस्तथाऽपि तमोन्यरूपित्वमेवालोकसापेक्षचक्षुर्ग्राह्यत्वप्रयोजकमिति त्वयाऽपि वाच्यम्। अन्यथा तव मते तमसि रूपधीर्न स्यादिति भावेन परपक्षेऽपि बाधकमुपपादयति—किंचेत्यादिनैवं च त्वयापीत्यन्तेन ग्रन्थेन। नियमादिति। आलोकरूपसाक्षात्कारे[5] त्वदुक्तदिशा व्यभिचारा[6]दितिभावः ॥

रूपभ्रमेऽपि रूपप्रमायामिव न सर्वत्रालोकापेक्षा, येन शुक्लपटादौ नीलरूपभ्रमे तदपेक्षायां तमसि रूपभ्रमेऽपि तदपेक्षा स्यात्। धर्मिणो रूपित्वारूपित्वाभ्यां तन्नियमोपपत्तेरिति भावेनोक्तमनूद्य निराचष्टे—यत्त्वित्यादिना ॥

[1] कापेक्षेति शोधितम्—नं. [2] क्लेप—नं. क. ज. क्लेघ—रा. ग. [3] वद्धमानो—रा. धर्ममानो—ग. [4] 'च' इत्यधिकम्—उ. [5] र इव—उ. [6] राभावादिति—उ.



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चाक्षुषत्वे आलोकापेक्षा, भ्रमाधिष्ठानभूतः पटादिश्च वस्तुतो रूपीति त[1]त्र विशेष्य[2]स्य ग्रहार्थमेवालोकापेक्षा न तु रूपग्रहणार्थं, मन्मते चालोकाभावरूपं तमो वस्तुतो [3]नीरूपमिति नीलं तम इति साक्षात्कारे नालोकापेक्षा, त्वन्मते [4]तु तमो वस्तुतो रूपीति तत्रालोकापेक्षा स्यादेवेति। तन्न। दधि धवळमाकाशं नील[5]माकाशमित्यादौ नी[6]रूपाकाशविशेष्यकभ्रमे, आकाशे [7]धवळिमा आकाशे नीलिमेत्यादौ रूपविशेष्यकभ्रमे चालोकापेक्षादर्शनात् ॥

नन्वाकाशे धावळ्यादि[8]धीर्गृह्यमाणारोपरूपा, ग्रहणात्मकं चारोप्यज्ञानं रूपवद्रव्यविषयकमित्या-

---

नीरूपे वस्तुनि रूपभ्रमे आलोकापेक्षा नेति किं [9]निरूपवस्तुविशेष्यकरूपविशेषणकभ्रमे वा रूपविशेष्यकवस्तुविशेषणकभ्रमे वा। [10]उभयमप्ययुक्तम् व्यभिचारादित्याह—दधि धवळमिति। शुभ्राभावदशापन्नोऽयं भ्रमः। दर्शनादिति। तथा च तमस्यपि रूपभ्रमे तदपेक्षा स्यादेवेति भावः ॥

आकाशरूपभ्रम[11]तमोरूपभ्रमस्य गृह्यमाणत्वस्मर्यमाणत्वकृतवैषम्यमाशङ्क्य निराह—नन्विति ॥

---

[1] तद्वि–रा. [2] ष्यग्र–न. [3] न रूपीति–नं. रा. क. ग. ज. [4] 'तु तमो' इति नास्ति–न. [5] आकाशपदं न–ज. [6] नील–रा. [7] धावळ्य–रा. [8] आदि इति नास्ति–रा. [9] नी–उ. [10] नोभयमपि युक्तम्–उ. [11] मात्तमो–उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रोपकारणस्य रूपवद्द्रव्यज्ञानस्यैवालोकापेक्षा, न तु साक्षा[1]दारोपस्येति चेन्न। तत्रानुभूयमानारोपोऽन्धकारे तु स्मर्यमाणारोप इत्यत्र नियामकाभावात्॥

किञ्च गृह्यमाणरूपस्य संसर्गारोपार्थमेव रूपग्रहस्यापेक्षितत्वात् रूपग्रहे आलोकापेक्षेति मदिष्टसिद्धिः। न च तत्र रूपवदभेदस्यैवारोपः न तु रूपसंसर्गस्येत्यत्र मानमस्ति॥

न च रूपग्रहो न तदाश्रयग्रहं विनेत्याश्रयग्रहा-

---

यद्वा नीरूपे रूपभ्रमे नालोकापेक्षेत्यत्राकाशरूपारोपे व्यभिचारोक्तिरयुक्ता, तत्राप्यालोकापेक्षायां रूपारोपकारणं यद्रूपवद्द्रव्यान्तरज्ञानं तत्रोपयोगादिति भावेनाशङ्क्य तमोरूपारोपेऽपि तथैव तदपेक्षा दुर्वारेत्याह—नन्वित्यादिना। न तु साक्षादिति। द्रव्यं विना कृतकेवलरूपारोपलक्षणे स्मर्यमाणारोपेत्यर्थः। तमो रूपारोपश्च स्मर्यमाणारोप इति भावः॥

अङ्गीकृत्यापि स्मर्यमाणारोपत्वमालोकसापेक्षत्वमावश्यकमित्याह—किंचेति। मदिष्टेति। तमोरूपारोपेप्यालोकापेक्षा स्यादित्यापादनसिद्धिरित्यर्थः। इष्टासिद्धिमाशङ्क्य [2]परिहरति—न च तत्रे[3]ति। गृह्यमाणारोपस्थळ इत्यर्थः। अभ्युपेत्यापि रूपसंसर्गारोपमालोकापेक्षाया अन्यथासिद्धिमाशङ्क्य निराह—न च रूपेति॥

---

[1] द्रूपस्येति—रा. [2] निराह—उ. [3] इतः 'निराह' इति पर्यन्तं नास्ति—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

र्थमेवालोकापेक्षेति वाच्यम्। त्वन्मते नयनगतपित्तपीतिमादेस्तदाश्रयग्रहं विनाऽपि ग्रहात्। तस्माद्रूपज्ञानस्य रूपवद्विशेष्यकत्वे[1] रूपविशेष्यकत्वे भ्रमत्वे प्रमात्वे [2]च रूप[3]भानप्रयुक्तैवालोकापेक्षेति तमसोऽभावत्वेऽपि नीलं तम इति तमसि नैल्यमिति वा ज्ञाने आलोकापेक्षा दुष्परिहरा ॥

एवं च त्वयाऽपि तमोनिष्ठत्वेन रूपसाक्षात्कारभिन्नरूपसाक्षात्कारे तेजोपेक्षेति वाच्यम्। ततो वरं तमोभिन्नरूपवत्साक्षात्कारे तदपेक्षेति तमो द्रव्यमेवास्तु ॥

किञ्च रूपिणो घटादेरिव रूपिघटाद्यभावस्य ग्रहोऽप्यालोकसापेक्षो दृष्ट इत्यभावत्वपक्षे[4]ऽपि तदपेक्षाऽऽवश्यकी ॥

ननु–तेजोऽभावग्रहे न तेजोऽपेक्षा। अन्यथा

---

तमोऽन्यरूपित्वमेवालोकसापेक्षचक्षुर्ग्राह्यत्वप्रयोजकमित्युपपाद्य तमसो द्रव्यत्वे प्रागुक्ततर्कबाधो[5] निरस्तः। अधुना तेजोविरोधिप्रत्यक्षत्वमेवालोकनिरपेक्षत्वे प्रयोजकं, तच्चास्ति तमःप्रत्यक्षत्वेपीत्युपपादयंस्तर्कबाधं प्रकारान्तरेणोद्धरति—किञ्चेत्यादिना एतेनेत्यन्तेन। अभावत्वे[6]ति। तम[7]स्तेजोभावत्वपक्षेऽपीत्यर्थः ॥

---

[1] रूपविशेष्यकत्वे इति नास्ति–रा. [2] त्वेवा–नं. [3] पभ्रम–क पाभाव–ग. [4] 'अपि' इति नास्ति–रा. [5] धे निरस्ते–उ. [6] पीति–उ. [7] सस्ते–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

घटाभावग्रहेऽपि घटापेक्षा स्यादिति चेत्। तेजोऽन-पेक्षा हि न तेजोऽभावप्रत्यक्षत्वेन। तेजोऽभाव-व्यापकभास्वररूपविरहप्रत्यक्षस्यापि तेजोऽनपेक्षत्व-दर्शनात्। नापि तेजोविरोध्यभावप्रत्यक्षत्वेन। गौरवात्। किं तु तेजोविरोधिप्रत्यक्षत्वेनैव। तथा च तमस्तेजोविरोधि द्रव्यमेवास्तु। तेजोऽ[1]पेक्षा-प्रसङ्गस्य विरोधेनैव समाधानात्। एवं च रूपि-त्वादिप्रतीतिरप्यनुकूलिता भवति॥

एतेन—तमोग्राहकं तेजोऽनपेक्षं चक्षुर्भिन्नमिन्द्रि-यान्तरमेवास्तु, अधिष्ठानं तु तस्यापि नयनगोळ-कमेव, सर्पाणां चक्षुःश्रोत्रयोरिवैकाधिष्ठानत्वसंभ-वादिति निरस्तम्। उक्तरीत्या चक्षुर्ग्राह्यत्वेनैवोप-पत्ताविन्द्रियान्तरकल्पकाभावात्। धर्मिग्राहकमा-नेन चक्षुष एव रूपग्राहकत्वेन सिद्धेश्च॥

---

एतेनेति। तमोभिन्नरूपवत्साक्षात्कार एवालोकापेक्षेति कथनेन। तथा तेजोविरोधिप्रत्यक्षत्वेनैव तेजोनपेक्षेति कथनेनेत्यर्थः। तदेव व्यनक्ति—उक्तरीत्येति। रूपग्रहणान्यथानुपपत्तिरेव कल्पिकेत्यत आह—धर्मीति। रूपज्ञानं करणसाध्यं कार्यत्वादिति मानेने-त्यर्थः॥

एवं तर्कपराहत्यादिदोषनिरासेन रूपवत्त्वादित्युक्तहेतुं समर्थ्येदानीं क्रियाश्रयत्वादित्युक्तहेतुमपि शशधराद्युक्तबाधकोक्तिमुखेनासिद्धिमाशङ्क्य

---

[1] नंप—नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च छाया[1]यां गतेः स्वाभाविकत्वे आवरक-छत्रादिद्रव्यानुविधानानुपपत्तिः। स्थाणावचलेऽपि [2]तच्छायायां गतिदर्शनात्। मण्याद्यनुविधायि-मण्यादिप्रभावदुपपत्तेश्च। रूपादिधीस्तु प्रभाया-मिव तमस्यप्यबाधिता ॥

न च तमसः क्रियावत्त्वे क्रियावतः प्रत्यक्षस्य[3] स्पर्शवत्त्वनियमात्स्पर्शवत्त्वं स्यादिति वाच्यम्। विपक्षे बाधकाभावेन स्पर्शवतोऽपि वायोर्नीरूपत्व-वत्क्रियावतोऽ[4]प्यस्य निःस्पर्शत्वोपपत्तेः। आलो-कादाविव स्पर्शस्यानुद्भूतत्वेनानुपलम्भसम्भवेने-ष्टापत्तेश्च ॥

---

साधयति—न च छायायामिति। गतिदर्शनादिति। सूर्यादिगत्यनुरोधे-नेति भावः। [5]प्रामाण्यादिभावादिति। प्रभाव[6]त्तन्मते द्रव्यमेवेति भावः॥

ननु शशधरादौ कुड्याद्यपसरणादिरूपकारणवशादन्यत्रापि प्रभा-चलनोपलम्भात्तदनुविधायित्वं तत्रासिद्धमित्युक्तमिति चेन्न। छायायामपि तदनुविधानाभावस्योक्तत्वादिति भावः॥

ननु—प्रभायामन्यानुविधायिगतित्वेऽपि तत्र रूपत्वाद्यन्यथासिद्ध-मानावगतं द्रव्यत्वमित्यत आह—रूपादीति। अबाधितेति। न नलिं [7]तम इति कदाऽप्यप्रतीतेर्यौक्तिकबाधस्य च निरस्य[8]त्वादिति भावः। बाधकान्तरमाशङ्क्य द्वेधा निराह—न च तम [9]इत्यादिना॥

---

[1] याग—नं. याया ग—क. [2] तत् इति नास्ति—नं. [3] क्षस्पर्श—नं.क.ज. [4] प्यस्पर्शवत्त्वो क. प्यस्यास्पर्श—ज. [5] 'मण्यादिप्रभावदिति' इत्यस्ति—उ. [6] च त्वन्म—उ. [7] 'ननु' इत्यारभ्य एतावन्नास्ति—उ. [8] स्तत्वा—उ. [9] मस— इ—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च स्पर्शसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्य-जातेरुद्भूतस्पर्शसामानाधिकरण्यनियमान्नैवमिति वाच्यम् । विपक्षे बाधकाभावात् ॥

भोगविशेषसंपादनार्थं हि स्पर्शोद्भवः, न चास्मदादिभिः प्रकृते भोगविशेषसंपादन[1]प्रयोजनकत्वं निर्णेतुं शक्यम् । पुराणेषु तमसः काठिन्योक्त्योद्भूतस्पर्शस्यापीष्टत्वाच्च ॥

यत्तु छायायाः तेजोविरोधिद्रव्यत्वे प्रभाऽऽश्रये रत्नविशेषे[2] छाया नोपलभ्येतेति चोद्यं, तदालोकाभावत्वेऽपि समम् । तत्रालोक[3]स्य विरळत्वाद्वाऽऽवरणीयतेजोऽन्तराभावस्य छायात्वाद्वा छाया[4]त्वोपपत्तिरिति समाधानं च भावत्वेऽपि समम् ॥

---

इष्टापत्तेश्चेत्ययुक्तमित्याशङ्क्य द्वेधा समाधिमाह—न च स्पर्शेत्यादिना । नियमादिति । पृथिवीत्वजलत्वादिजातेस्तथादर्शनात्तमसो द्रव्यत्वपक्षे तमस्त्वस्य पृथिवीत्वादेरिव द्रव्यत्वसाक्षाद्व्याप्यजातित्वापत्त्योद्भूतस्पर्शसामानाधिकरण्यं स्यादेवेत्यर्थः । प्रभादावव्यभिचाराय साक्षाद्व्याप्यजातेरित्युक्तम् । प्रभात्वादेर्द्रव्यत्वव्याप्यतेजस्त्वव्याप्यत्वात् । विपक्ष इति । उक्तरूपजातेरापि तादृशस्पर्शसामानाधिकरण्याभाव इत्यर्थः ॥

तमेव व्यनक्ति—भोगेति । स्पर्शोद्भवः स्पर्शस्योद्भूतत्वमित्यर्थः । प्रयोजकत्वमिति । तमःस्पर्शस्येत्यर्थः । पुराणेष्विति । तमस्तु घोरमित्यादिप्रागुक्तवचनेष्वित्यर्थः ॥

तमः तेजोविरोधिद्रव्यमेवास्तु इति पक्षे बाधकमाशङ्क्य निराह—

---

[1] नेन प्रयोजनवत्त्वं—रा. [2] षच्छाया—नं. [3] स्यावि—नं. [4] योप—रा. क. ग. ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यत्तु—[1]वर्धमानादिभिरुक्तं प्रौढालोकमध्ये सर्वतो घनतरावरणे छाया न स्यात्, तेजोविरोधेन तत्र तमोऽवयवानां पूर्वमनवस्थानात्। सर्वत[2]स्तेजःसंकुलेऽन्यतोऽपि तदागमना[3]संभवादिति। तन्न। पिहित[4]प्रदीपागमनानन्तरं प्रासादव्याप्यालोकमण्डलवदावरणानन्तरं छायाया दीपनाशानन्तरमन्धकारस्य चारम्भसंभवात्॥

ननु—तम आलोकाभावो न चेदालोकाभावाविषयबुद्ध्यविषयो न स्यादिति चेन्न। आलोकाभावग्रहे प्रतियोगिस्मरणादेरधिकस्यापेक्षितत्वेनेष्टापत्तेः॥

एतेन—तमो द्रव्यं चेत्तदवयवानां तमोऽवयव्यारम्भकत्वं वाच्यम्। न च तद्युक्तम्। आरम्भकत्वे स्पर्शवत्त्वस्य प्रयोजकत्वेन निःस्पर्शस्य तमसोऽनारम्भकत्वात्। न च मूर्तत्वमेवारम्भकत्वेतन्त्रम्। मनसोऽप्यारम्भकत्वा[5]पातादिति शशधराद्युक्तं

---

यत्त्विति। तमसस्तेजोविरोधिद्रव्यत्वे बाधकान्तरमनूद्य निराह—यत्तु वर्धमानादिभिरिति॥

शशधराद्युक्तबाधकमाशङ्क्य निराह—नन्वित्यादिना। अपेक्षितत्वेनेति। तमसो ग्रहे तदनपेक्षितत्वेनेत्यपि ज्ञेयम्॥

बाधकान्तरं च निराह—एतेनेति। स्पर्शकथनेनेत्यर्थः।

---

[1] बद्धमान–रा. धर्ममान–ग. इत्यस्ति [2] र्वतेजः–नं. [3] भावादिति–नं.
[4] 'प्र' इति नास्ति–नं. [5] त्वप्रसङ्गात्–रा.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निरस्तम् । निःस्पर्शत्वमसिद्धमित्युक्तत्वात् ॥

तम आरम्भकं अन्त्यावयविभिन्नत्वे सति रूपवत्त्वादित्यनेन सत्प्रतिपक्षत्वाच्च । अस्पर्शत्वरूपसाधनावच्छिन्नसाध्यव्यापकस्य नीरूप[1]त्वस्योपाधित्वाच्च । अस्पर्शस्यापि पुरुषार्थसाध[2]कत्वेनारम्भकत्वसंभवेनाप्रयोजकत्वाच्च ॥

मनस्तु नारम्भकं प्रयोजनाभावात् । अनारम्भ[3] एव च प्रयोजनाभावे प्रमाणम् । अन्यथाऽऽरम्भकत्वे

---

तदेव व्यनक्ति—निःस्पर्शत्वमिति । सत्प्रतिपक्षत्वाच्चेति । अवयवारब्धं तमोऽवयवरूपतमोनारम्भकं निःस्पर्शत्वादिति परोक्तस्यानुमानस्येति भावः । अन्त्यावयविनि घटादावव्यभिचाराय हेतौ सत्यन्तम् ॥

न च तस्यापि स्वगतगुणकर्मारम्भकत्वान्न व्यभिचार इति शङ्क्यम् । आरम्भका[4]नानेकपदाभ्यां द्रव्योपादानत्वतदभावयोरभिमतत्वात् । अत एव पटादावन्त्यावयविनि साध्य[5]व्यापकत्ववारणाय साधनावच्छिन्ने साध्यव्यापकस्य नीरूपत्वस्योपाधित्वाच्चेत्युच्यते । अस्पर्शत्वात् तमोरूपद्रव्यान्तरानारम्भकं तम इत्यस्य दोषान्तरमाह—अस्पर्शस्यापीति । पुरुषार्थेति । छायायाः सुखहेतुत्वेन पुरुषार्थसाधनत्वं ध्येयम् ॥

मनसो द्रव्यारम्भकत्वं स्यादित्यत आह—मनस्त्विति । हेतोरसिद्धिमाशङ्क्याह—अनारम्भ इति । कुत एषा कल्पनेत्यत आह—अन्यथेति । [6]स्पर्शवत्त्वादिमानसिद्धा[7]न्ततो रूपवत्त्वमात्रं न

---

[1] पस्यो–रा. [2] नत्वेनारम्भकत्वासंभवेन–न. [3] म्भक–न. [4] नारम्भक–उ. [5] ध्याव्या–उ. [6] 'स्पर्शवत्त्वस्यैवारम्भकत्वे प्रयोजकत्वमुपेत्य तमसोऽनारम्भकत्वस्य द्रव्यत्वाभावस्य वा आपादन इत्यर्थः । वायोः पृथग्द्रव्यत्वादिकम् इत्यधिकम्–उ. [7] द्धम् ततो–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रूपवत्त्वमेव तन्त्रम्, वायुस्त्वनुद्भूत[1]रूपा पृथिवी वा स्यादनारम्भको वा स्यात्, अद्रव्यं वा स्यात् ॥

एतेनालोक[2]ज्ञानाभाव एव तमः । तत्काले तद्देशे आलोकसाक्षात्काराभावस्य सर्वसम्मतत्वात् । आलोकवद्गर्भगृहं प्रविशतः प्रथममालोकाज्ञाने तमःप्रत्ययाच्च । आलोकविरोधिद्रव्यान्तरस्यालोकभावस्य वा तमस्त्वे [3]तदानीं द्वयोरप्यभावात्तमः प्रत्ययो भ्रमः स्यादित्यपास्तम् । नीलं[4] तम इत्यबाधितप्रतीतिविरोधात् । तमः[5]साक्षात्कारस्य चक्षुरन्वयव्यतिरेकानुविधान[6] विरोधाच्च । न हि ज्ञानाभावो नीलः । न वा चाक्षुषः । प्रदीपादिमत्यपि गर्भगृहे तमोधीर्भ्रान्तिर्बाधितत्वात् ॥

किंच—रूपाज्ञाना[7]द्गौणं व्यवहारमात्रं वा ।

---

प्रयोजकं चेत्तमसोऽपि तथात्वं सिद्धमिति न स्पर्शवत्त्वमारम्भकत्वे प्रयोजकं किंतु प्रयोजनवत्त्वमेवेति सममिति भावः ॥

कस्य चिन्मतमपाकरोति—एतेनेति । आलोकस्मृतिमतः तमः प्रत्ययदर्शनात्कथमेतादित्यतो ज्ञानं साक्षात्कार इति भावेनाह—तत्काल इति । असिद्धिं निरस्य युक्तिं चाह—आलोकवदिति । सूक्ष्मप्रदीपालोकयुक्तेत्यर्थः । पक्षान्तरे बाधकं चाह—आलोकेति । विरोधद्वयं व्यनक्ति—न हीति । परोक्तयुक्तिं निराह—प्रदीपेति ॥

---

[1] रूपपदं न—न. [2] काज्ञा—नं. [3] इदा—रा. [4] लीनं—रा. [5] सासा—रा. [6] पुनः 'विधाने' त्यधिकम् रा. [7] नवद्गौ—नं. रा. ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतेनैवारोपितं नीलरूपमेव तम इति निरस्तम् । नीलं[1] रूपं तम इत्यननुभवात् । [2]नीलरूपवदित्येवानुभवाच्च । आलोकमध्यस्थे शुक्ले वस्तुनि नैल्यारोपे तमोव्यवहारापाताच्च ॥

किंचारोपस्योपलक्षणत्वेऽनारोपदशायामपि तमोव्यवहारःस्यात् । विशेष[3]णत्वे आरोपस्यापि तमःशरीरप्रविष्टत्वेना[4]चाक्षुपत्वं[5] स्यात् ॥

तस्मात्तम आलोकाभाव इति, [6]आलोकाज्ञानमात्रमिति, आरोपितं नीलरूपमेवेति च पक्षत्रयमप्ययुक्तम् ॥

एवं च तमसो द्रव्यत्वे सिद्धे प्रसिद्धद्रव्यान्तर्भावश्शक्यश्चेत्तथैवास्तु न चेद्द्रव्यान्तरमस्तु । न तत्रास्माकमाग्रह इति ॥

इति तमसो द्रव्यत्व[7]साधनम् ॥ ११ ॥

---

एतेनैवेत्येतद्व्यनक्ति—नीलरूपमिति । अनुभवविवादिनं प्रत्याह—आलोकेति ॥

तादृशभ्रमेऽपि विप्रतिपन्नं प्रत्याह—किञ्चेति । एवं तर्हि नवैव द्रव्याणीति नियमात् क्वान्तर्भाव इत्यत आह—एवं चेति । न तत्रेति । [8]न चैवं भानाभावादिति भावः ॥

इति तमसो द्रव्यत्वसमर्थनम् ॥ ११ ॥

---

[1] लरू–रा. क ज. [2] अयं हेतुर्नास्ति–ग. [3] षत्वे–रा. [4] न–रा. [5] 'न' इत्यधिकम्–रा [6] 'रूपज्ञान' इत्यस्ति–नं. 'रूपाज्ञा'–रा. क.ग.ज. [7] समर्थनम्–रा.ग.ज. 'इति' इत्यधिकमपि–क. [8] नवैवेत्यत्र मानाभा–ङ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ परमते सुवर्णस्य योग्यानुपलब्धिबाधः ॥ १२

सुवर्णं तु न द्रव्यान्तरं, नापि तैजसं, किंतु पार्थिवमेव। पीतत्वात्। अजलत्वे[1] सति गुरुत्वात्। नैमित्तिकद्रवत्वाधिकरणत्वाच्च। [2]घृतादिवदित्या[3]द्यनुमानात्। 'दिव्यं पार्थिवं वास्त्वि[4]'त्यादि[5]श्रुतेश्च ॥

जम्बूनदीरोधसो[6] मृत्तिका जम्बूफलरसानु-

---

अथ परमते सुवर्णस्य योग्यानुपलब्धिबाधः ॥ १२ ॥

तमोवत्सुवर्णमपि नवभ्यो द्रव्यान्तरं किमित्यत आह—सुवर्णं त्विति। न्यायमत इव तेजस्यन्तर्भावः किन्नेत्याह—नापीति। [7]तैजसमिति। पयस्यव्यभिचारायैव जलान्यत्वे सतीति नैमित्तिकेति चोक्तिः। अनुमानानुग्राहकश्रुत्याद्याह—दिव्यमिति ॥

यत्सोमचित्रमुक्थ्यं दिव्यं पार्थिवं वसु।

तन्नः पुनान आभरेति—

बह्वृचशाखायां श्रवणादित्यर्थः ॥

पञ्चमस्कन्धवाक्यान्याह—जाम्बूनदीति। मेरुसमीपस्था काचिन्नदी[8]तीरयोर्मृत्तिकेत्यर्थः। पूर्ववाक्योक्तस्या[9]नुवादो जाम्बूनदीति।

---

1 जलान्यत्वे–रा. ग. 2 घटादि–न. रा. क. 3 त्यनु–नं. ग. 4 वस्वि–नं. क. ग. ज. 5 देश्च–नं. 6 सोर्या–नं. सोर्म्य–ग. 7 तैजसमिति इति नास्ति–उ. 8 तत्ती–उ. 9 स्थानु–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[1]विध्यमाना वाय्वर्कसंयोगविपाकेन जाम्बूनदं नाम सुवर्णं भवतीति, तावती भूमिः काञ्चन्यादर्शतलोपमेत्यादिभागवतादिवचनाच्च ॥

"अग्नेः [2]प्रजातं प्रथमं[3] हिरण्य" मिति श्रुतिस्त्वग्नेराप इत्यादिश्रुतिवदग्नेर्हिरण्यनिमित्तत्वमाह। न तु हिरण्यस्याग्न्यात्मकताम् ॥

ननु—पीतरूपगुरुत्वाश्रया[4]विनिर्भागवर्ति तैजसं[5] भागान्तरमेव सुवर्णम्।तत्रच पीतत्वादिकमासिद्धमि[6]ति चेन्न। तादृशभागान्तरस्याननुभवात्। तत्कल्पकस्य

---

अन्य[7]समं [8]यावन्मानसोत्तरमेर्वोरन्तरं तावतीति षण्णवतिलक्षयोजन-परिमिता काञ्चनी सुवर्णमयी दर्पणतलवदतिश्लक्ष्णतमेति स्वादूदक-समुद्रात्परतो लोकालोकपर्वतादर्वाग्भागभूमिरित्यर्थः। परोक्तश्रुतिगति-माह—अग्नेरिति ॥

सुवर्ण[9]द्विभागम्। तत्र पार्थिवभागपक्षीकारे सिद्धसाधनम्। भागान्तरपक्षीकारे हेतूनामसिद्धिरिति भावेन शङ्कते—नन्विति। नैमित्तिकद्रव्यत्वाश्रयेत्यपि ज्ञेयम्। अवनि[10]भागवर्तीति। संश्लिष्टतया वर्तमानेत्यर्थः ॥

शुक्लभास्वरोष्णस्पर्शवद्द्रव्याननुभवेऽप्यनुमीयत इत्यत आह—तत्कल्प[11]कस्येति। तथाचैक एव भाग इति तस्यैव च पक्षत्वान्ना-

---

1 पिच्यमाना–नं. 2 रपत्यंजातं–ग. 3 'परियत' इत्यधिकम्–ज. 4 वनिभाग–नं. ग. यानेभावगर्भित–रा. 5 सभा–रा. 6 इत्थं' इत्यधिकम्–रा. 7 न्यत्स–उ. 8 या–उ. 9 र्णं द्वि–उ. 10 भागवतीति–उ. 11 नस्य–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चाभावात् । न चानुद्भूत[1]स्पर्श[2]वत्त्वान्नानुभवः । त्वन्मते सुवर्णरूपस्योद्भूतत्वेनापसिद्धान्तात् ॥

न च–सोपि भागश्चक्षुषा सुवर्णत्वेनानुभूयते, तस्य शुक्लभास्वररूपं तूपष्टम्भकपीतरूपाभिभूतत्वान्नानुभूयत इति वाच्यम् । पार्थिवरूपेण तेजोरूपाभिभवे घटादिरूपेण तत्प्रकाशकालोकरूपाभिभवापातात् ॥

न च-पार्थिवं रूपं स्वाश्रया[3]विनिर्भागवर्तिन एव तेजसो रूपाभिभावकमिति वाच्यम् । मण्यादिमध्यवृत्तितेजोरूपस्य मणिरूपेणानभिभवात् । तथा च सुवर्णमुपष्टम्भकपीतद्रव्यसंयुक्तमप्यनभि-

---

सिद्धिः । अन्यथा घटादावपि भागान्तरकल्पनेन तैजसत्वादिकल्पनं तत्रापि स्यादिति भावः ॥

अननुभवस्यान्यथासिद्धिमाशङ्क्य निराह—नचेति । किं रूपानुभवो नेत्युच्यते अथ द्रव्यानुभवः । आद्य आह—त्वन्मत इति । रूपं [4]सुवर्णस्योद्भूतमेवेति मण्युक्तेरिति भावः । द्वितीयमाशङ्कते—न चेति ॥

मण्यादिमध्य इति । तत्रापि तेजोभागस्य तव संमतत्त्वात्तत्राप्यभिभवे [5]परप्रकाशकत्वाभावप्रसङ्गादिति भावः । संयुक्तमपीत्यपिपदेनाभ्युपगमं सूचयति ॥

---

[1] 'रूप' इत्यधिकम्–रा. ग. अपिच 'स्पर्श' इति नास्ति–क. रूपस्पर्श–ज. [2] र्शत्वा–रा. नं. [3] वनिभाग–नं. याविभाग–रा. वनिर्भा–ग. [4] तुतस्योद्भू–उ. [5] 'स्व' इत्यधिकम्–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भूतोद्भूतरूपवत्तेजस्त्वादङ्गारवह्विरिवान्धकारे स्वपरप्रकाशकं स्यात् । न चाङ्गारादावनभिभूतरूपं प्रभाऽन्तरमनुभूयते येन तदेव प्रकाशकं न त्वङ्गारवह्विरिति स्यात् ॥

अत्रोक्तं मणौ—मणिप्रभायामङ्गारवह्नौ च रूपगत[1]शुक्लत्वमेवाभिभूतं, न तु रूपं, न वा तद्गतं भास्वरत्वं, अत एवाङ्गारवह्न्यादिकं नीलारुणादिरूपव[2]त्त्वेनैव भासते, एवं च स्वपरप्रकाश[3]कत्वोपयुक्तभास्वरत्वस्यानभिभवादङ्गारवह्निः स्वपरप्रकाशकः, सुवर्णे तु रूपमुद्भूतं, तद्गते शुक्लभास्वरत्वे चाभिभूते इति न तत्स्वपरप्रकाशकमिति । तन्न । रत्नात्प्रभाया इव काष्ठाद्वह्नेरिव चोपष्टम्भकपीतद्रव्याद्भिन्न[4]स्य त्वदभिमतस्य सुवर्णस्य कदाऽप्यननुभवेन कल्पकाभावात् । अन्यथा—अभिभवकल्पनेनानुपलब्धिविरोधे परिहृते तेजोभागासिद्धिः

---

सर्वस्यापि पार्थिवत्वस्यैवाभिमतत्वादत्रोक्तामिति च तथाचेत्यादिनोक्तप्रमेये समाधानं प्रत्यक्षखण्डे सुवर्णतैजसत्व[5]वादे उक्तमित्यर्थः । अन्यथेति । कल्पकाभावेप्येवं कल्पन इत्यर्थः ।

---

[1] तं शु—नं. रा. क. ज. [2] पत्वे—नं. ग. [3] 'शयुक्तभास्वरस्यानभि' इत्यस्ति—नं. [4] न्नत्वस्य—नं. [5] स वा—ज.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सिद्धे च तस्मिन् फलबलादभिभवकल्पनमित्यन्यो-
न्याश्रयः स्यात् ॥

किं चास्तु सुवर्णरूपमभिभूतं तथाऽपि महत्त्वे सत्युद्भूतरूप[1]वत्तेजस्त्वस्यैव व्यञ्जकत्वे तन्त्रत्वेन सुवर्णमपि व्यञ्जकं स्यात्। यदि ह्युद्भूतरूपमप्यभिभूतरूपत्वेनानभिव्यञ्जकं किंचित्तेज उभयसिद्धं स्यात्। तदा तत्रानतिप्रसङ्गायानभिभूतत्वविशेषणमर्थवद्भवेत्। न च तदास्ति। अनभिव्यञ्जकानां ग्रीष्मोष्मादीनामनुद्भूतरूपवत्त्वात् ॥

किंचैवं सुवर्ण(अनु)उष्णस्पर्शोऽप्युद्भूत एवाभि-

---

तस्मिन्निति। तेजोभाग इत्यर्थः। फलेति। अनुपलब्धिरूपकार्य बलेनेत्यर्थः ॥

अस्तु वा रूपमभि[2]मतं तथाऽपि दीपादिवत्परप्रकाशकं स्यादेव प्रयोजकस्य [3]समत्वादिति भावेनाह—किंचेति। ननु महत्वे सत्यनभिभूतोद्भूतरूपवत्तेजस्त्वमेव प्रयोजकमतः सुवर्णे तादृशतेजस्त्वाभावान्न दोष इत्यत आह—यदि हीति। ग्रीष्म ऊष्माद्येव तादृशं तेज इत्यत आह—अनभिव्यञ्जकानामिति ॥

अस्तु वाऽनभिभूतोद्भूतरूपवत्तेजस्त्वमेव व्यञ्जकत्वे प्रयोजकं, अथापि सुवर्णे तेजश्चेदुपेयते तर्हि स्यादेव तत्परप्रकाशकं तद्रूपाभिभवस्यायुक्तादिति भावेन स्पर्शप्रतिबन्दीमाह—किंचेति। यद्वा तेजः स्पर्शवत्तेजोरूपस्याप्यभिभवायोगात्प्रागुक्तप्रयोजकेनाभिभूतत्वा[4]विशेषणम-

---

[1] पते—नं. रा. ग. ज. [2] भूत—उ. [3] सत्त्वादि—उ. [4] त्ववि—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भूतः कल्प्यताम्। न चैवं स्पर्शोद्भवे सुवर्णमन्धकारे त्वचा गृह्येत, तथा च सुवर्णं न वेति संशयो न स्यादिति वाच्यम्। तव[1] सुवर्णत्वजातेरुपष्टम्भका[2]भिमतरूपविशेषग्रहव्यङ्ग्यत्वेन ब्राह्मणव्यक्तिग्रहेऽपि ब्राह्मणत्वजातिसंदेहवदुपपत्तेरिति[3] सुवचत्वात्। तेजःस्पर्शोऽन्यस्पर्शानभिभाव्य इति तु रूपेऽपि तुल्यम्। तस्मात्त्वचा चक्षुषा वा पीतगुरुद्रव्यातिरिक्तस्य [4]भागान्तरस्याग्रहे[5]ण धर्मिण एव बुद्ध्यनारोहान्न तद्रूपेऽभिभवादिकल्पनं युक्तम्॥

पराभि[6]मत सुवर्णस्य योग्यानुपलब्धिबाधः ॥ १२ ॥

---

संभवदुक्तिकम्। संभवव्यभिचाराभ्यामेव विशेषणस्यार्थवत्त्वादिति भावेनाह—किंचेति। नैवं कल्पना युक्तेत्याशङ्क्य निराह—नचैवमिति। तवेति। उपष्टम्भकमस्तीति वदत इत्यर्थः। तेजःस्पर्श एव सर्वाभिभावको न स्वयमन्येनाभिभवितुं शक्य इत्यत आह—तेज इति। तस्मादित्यस्य विवरणं त्वचेत्यादिपञ्चम्यन्तपर्यन्तम्॥

पराभिप्रेतसुवर्णस्यानुपलब्धिबाधः ॥१२॥

---

[1] नवेति नास्ति–नं. रा. ग. ज. [2] कत्वाभि–रा. ग. [3] 'तव' इत्यधिकम्–ग. [4] भागन्तरस्येति नास्ति–रा. [5] हणे–नं. क. ज. हणात्–रा. [6] प्रेतसुवर्णस्यानुपलब्धि–रा. ग.



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ सुवर्णस्योदयनाद्युक्तार्थापत्तेः पञ्चधाऽन्यथोपपत्तिसमर्थनम् ॥ १३ ॥

अत्र मणावुदयनोक्तं मतमुक्तं—

अवश्यं भागान्तरं स्वीकार्यम्। अत्यन्तानलसंयोगि[1]रूपाधिकरणं पार्थिवं पूर्वरूपविजातीयरूपप्रतिबन्धक[2]द्रवद्रव्यसंयुक्तं अत्यन्तानलसंयुक्तत्वे सति पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्वात्।

---

## अथ सुवर्णस्योदयनाद्युक्तार्थापत्तेः पञ्चधाऽन्यथोपपत्तिसमर्थनम् ॥ १३ ॥

एवं सुवर्णस्य पार्थिवत्वे प्रयुक्तहेतूनामसिद्धिासिद्धसाधनतयोर्निरासाय तत्र पराभिमतभागान्तरेऽनुपलब्धिबाधमुक्त्वा तत्साधकतया पराभिमतानुमानमप्यनूद्य निराह—अत्रेत्यादिना। मण्युक्तस्य निरासेन प्राचीनमतं च प्रत्युक्तमिति ज्ञापनायोक्तम्—मणावुदयनोक्तमतमुक्तमिति। प्रत्यक्षखण्डे सुवर्णतैजसवादे एतत्प्रयोगोक्त्यनन्तरमित्याचार्यो[3]क्तीरति मणावुक्तोरीति भावः। भागान्तरमिति। सुवर्णं[4] पार्थिवभागसंपृक्तं भागान्तरमित्यर्थः। तथा च तत्र प्रागुक्तहेतवोऽसिद्धा इति भावः। अत्यन्तेति। पार्थिवमित्यन्तं[5] पक्षः। पार्थिवमित्येवोक्ते घटादौ बाधः। तन्निरासायात्यन्तेत्यादिविशेषणम्। तादृशा[6]मघटादौ बाधासिद्ध्योर्नि-

---

[1] गे पी—रा. सु. गिपार्थिवं—ग. [2] द्रवपदं नास्ति—क. ग. ज. नं. [3] र्या इति मणा—ङ. [4] र्णंपा—ङ. [5] न्त: प—ङ. [6] शस्या—ङ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[1]क्वाथ्यमानजलमध्य[2]स्थपटवदित्यनुमानात् । न चाप्रयोजकम् । द्रवद्रव्यसंवन्धं विना पार्थिवेऽत्यन्तानळसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वनियमात् । तच्च द्रवद्रव्यं न जलम् नैमित्तिकद्रवत्ववत्त्वात् स्नेहशून्यत्वाच्च, स्नेहवत्त्वे तदधीनसङ्ग्रहप्रसङ्गात्, नापि पार्थिवम् दाहविरोधित्वात्,

रासाय पीतरूपाधिकरणमिति । आपादकदशायामवाधायात्यन्तानळसंयोगीति । पार्थिवमिति स्वरूपोक्तिः । जलपरमाण्वादिसंयुक्तत्वेनार्थान्तरनिरासाय साध्ये प्रतिवन्धकान्तरोक्तिः । स्वावयवावयव एव पूर्वरूपपरावृत्तिप्रतिवन्धकोस्तु । तथा च तत्संयुक्तत्वेनार्थान्तरवारणाय द्रवद्रव्येत्युक्तिः । स्वावयवावयवस्तु न द्रवद्रव्यमित्याहुः । स्तंभादावव्यभिचाराय हेतौ सत्यन्तम् । पच्यमानघटादावव्यभिचाराय पूर्वरूपविजातीयरूपानाधिकरणेति विशेषणम् । जले व्यभिचारवारणाय पार्थिवत्वादित्युक्तिः । दृष्टान्तेऽत्यन्तानळेत्यादिहेत्वंशोपपादनाय क्वथ्यमानेत्युक्तिः । साध्योपपादनाय जलमध्यस्थेत्युक्तिः । जलमध्यस्थेत्युक्त्यैव पूर्वरूपविजातीयरूपानधिकरणस्य स्फुटत्वात्पार्थिवत्वलाभाय घटवदित्युक्तिः । अप्रयोजकमिति । अनुमानमित्यन्वयः ॥

नन्वेतावता [3]द्रवद्रव्यं तैजसमिति कुत इत्यतः परिशेषादिति भावेनाह—तच्चेति । सङ्ग्रहेति । यथा जलं पार्थिवरजांसि पिण्डीभूततया संगृह्णाति, एवं द्रवीभूतं सुवर्णं न संगृह्णाति किंचिदिति [4]न स्नेहरूपचिक्कणतालक्षणजलासाधारणधर्माभावान्न जलमित्यर्थः । नापीति । तच्च द्रव[5]द्रव्यं-

[1] क्वस्थ–रा. क. ग. ज. नं. सु. [2] 'स्थ' इति नास्ति–सु. [3] तद्द्रव–उ. [4] न इति नास्ति–उ. [5] प्रायः 'वद्र' इत्येवास्ति–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तद्द्रव्यं रूपवच्च द्रवत्ववत्त्वादेव, तैजसं च पृथिवीजलान्यत्वे सति रूपवत्त्वादिति धर्मिग्राहकमानसिद्धं[1] तेजस्त्वमिति ॥

तन्न । त्वदुक्तं रूपापरावृत्तिरूपं लिङ्गं हि[2] रूपपरावृत्ति प्रतिबन्धककिञ्चिद्वत्त्वेनैवोपपन्नं[3] सन्न प्रतिबन्धकस्य द्रवत्वपर्यन्तं धावति । येन द्रवत्ववतोरूपित्वमित्यादित्वदुक्तरीत्या तेजस्त्वं सिध्येत् । संभवति चेह क्लृप्तं प्रतिबन्धकान्तरम् । करकादौ

---

पार्थिवं न भवति । पार्थिवस्य स्वसंयुक्तोपष्टम्भकभागे यो भस्मीभावलक्षणो दाहस्तदविरोधित्वादस्य च द्रवद्रव्यस्य तद्विरोधित्वादित्यर्थः ॥

तर्हि तद्द्रव्यं वाय्वादिरूपं कुतो नेत्यत आह—रूपवच्चेति। तत्र हेतुमाह—द्रवत्ववत्त्वादिति । जलवदिति भावः । तैजसं चेति । द्रव्यमित्यनुषङ्गः ॥

ननु—तेजोन्तरे नैमित्तिकद्रवत्वविजातीयरूपे [4]प्रतिबन्धकत्वयोरदृष्टेरत्र कथं तदधिकरणस्य तैजसत्वकल्पनमित्यत आह—इति धर्मिग्राहकेति । दाहविरोधित्वनैमित्तिकद्रवत्वरूपत्वहेतुभिः सहकृतप्राचीनेन द्रवद्रव्यसंयुक्तत्वसाधकेनानुमानेन सिद्धमित्यर्थः ॥

आद्यानुमाने हेतोरुक्तसाध्येन विनाऽन्यथोपपत्त्याऽप्रयोजकत्वेन धर्मिग्राहकमानं निराह—त्वदुक्तमित्यादिना । ननु—द्रवत्वहीनमन्यत्तादृशप्रतिबन्धकं वस्तु नास्त्येवेत्यत आह—संभवति चेति । किं तददृष्टं चेत्कथं च प्रतिबन्धकता क्वाप्यदृष्टेरित्यतो दृष्टान्तपूर्वं व्यनक्ति—करकेति॥

---

[1] तस्येत्यधिकम्—रा. ग. नं. सु. तत्ते-क. ज. [2] हि शब्दो नास्ति—रा. सु. [3] न्नप्रति—रा. सु. [4] पप्र—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सांसिद्धिकद्रवत्वस्येवात्यन्तानळसंयुक्ते पार्थिवे वज्रे पूर्वरूपविजातीयरूपस्येव[1] सुवर्णेऽपि विजातीयरूपस्य भोजकादृष्टविशेषादेव प्रतिवन्धोपपत्तेः।

अन्यथा करकादौ द्रवत्वप्रातिवन्धकं कठिनं भागान्तरं वज्रेऽपि रूपपरावृत्तिप्रतिवन्धकं द्रुतं भागान्तरं कल्प्यं स्यात्। तत्र वज्राद्यतिरिक्तं भागान्तरमनुपलब्धिवाधितं चेदिहापि पीतिमाश्रयातिरिक्तं द्रुतमनुपलब्धिवाधितमिति समम्। स्वीकृतं च त्वयाऽपि तेजोऽन्तरेऽदृष्टमप्यग्निसंयोगाद्द्रवत्वमदृष्टविशेषोपवन्धात्तेजोरूपे सुवर्णे॥

किं चास्तु द्रवत्वमेव प्रतिवन्धकम्। तत्तु द्रवत्वं पीतपार्थिवद्रव[2]भागगतमेवास्तु। क्लृप्तत्वात्। समाना-

---

नन्वदृष्टं दृष्टसामग्रीसंपत्तावेवोपयुक्तमुपलब्धम् न तु किंचित्करमित्यत आह—स्वीकृतं चेति। द्रवत्वद्वारैव[3] दृष्टस्य रूपपरावृत्तिप्रतिवन्धकता[4] न साक्षात्क्वथ्यमानजलान्तरस्थघटादौ तथैव दृष्टेः। अन्यथादृष्टकल्पनाऽऽपत्तेः। करकादावनन्यगत्यैव तथाऽऽश्रयणमित्यत आह—किं चास्त्विति[5]। पीतपार्थिवेति। त्वयोपष्टम्भकत्वेनोपात्तपार्थिवेत्यर्थः। क्लृप्तत्वादिति। धर्मिणो धर्मस्य चोभयोरपि प्रमितत्वात्प्रतिवद्ध्यरूपेण सह प्रतिवन्धकत्वाभिमतद्रवत्वस्यैकाधिकरणत्वाच्चे-

---

[1] च इत्यधिकम्—क. ज. नं. [2] व्यगतमेवास्तु—रा. ग. सु. वभागान्तरमेवास्तु—क. ज. [3] वाद्द—उ. [4] न स्यात् क्वथ्य—उ. [7] स्त्वपांति उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धिकरणत्वाच्च। न तूपष्ट[1]म्भगतं धर्मिणा सह कल्प्य-
त्वाद्व्यधिकरणत्वाच्च। अन्यथा क्वा[2]थ्यमानजले[3]रू-
पा[4]परावृत्त्यर्थं द्रवद्रव्यान्तरसंयोगः कल्प्यः स्यात्॥

ननु—पार्थिवद्रवत्वस्य स्वसमानाधिकरणरूप-
परावृत्तिप्रतिबन्धकत्वे ला[5]क्षादिद्रवत्वमपि तथा
स्यादिति चेन्न[6]। त्वदभिमतद्रुततेजसः स्वसंयुक्ते
पीतद्रव्ये रूपपरावृत्तिप्रतिबन्धकत्वे स्वसंयुक्ते
पटादावपि तथा स्यादिति [7]साम्यात्। स्वभाव-
विशेषकल्पनेन समाधानं तु प्रकृतेऽपि समम्॥

---

त्यर्थः। न तूपष्टम्भेति। त्वदभिमततेजो[8]मतमित्यर्थः। धर्मिणेति। तदनुपलम्भस्य प्रागुपपादितत्वादिति भावः। व्यधिकरणत्वाच्चेति। प्रतिबन्धेन पार्थिवरूपेण [9]भिन्नाधिकरणमेव द्रवत्वं द्रव्यान्तरगतरूप-परावृत्तिप्रतिबन्धकं तथैव कल्पनादित्यत आह—अन्यथेति। तत्रा-नुपलम्भबाधश्चेदिहापि तथैवानुपलब्धेरुक्तत्वात्। क्लृप्तेनैवोपपत्तौ ना-क्लृप्तकल्पनेत्यस्यापि साम्यादिति भावः। कुसुमाञ्जल्याद्यभिमतमाश-ङ्कते—नन्विति। क्वचिद्व्यभिचारदृष्टमात्रेणाप्रतिबन्धकत्वे त्वदभिमतो-पष्ट[10]म्भकस्यापि तथात्वमस्त्विति भावेनाह—त्वदिति॥

ननु तस्योपष्टम्भक एव प्रतिबन्धकत्वं स्वभाव इत्यत अह—स्वभावेति। एवं द्रवद्रव्यसंयुक्तमिति साध्ये द्रवत्वं वा तादृशद्रव्य-

---

[1] ष्टम्भ–रा. म्भक–क. ज. नं. सु. [2] क्वथ्य–रा. ग. ज. नं. सु. [3] पटेत्यधिकम्–क. [4] पप–रा. सु. [5] लाला–क. [6] न इति नास्ति–रा. सु. [7] स्यात्–क. ज. नं. [8] गत–उ. [9] ‘भिन्नाधिकरणवृत्तित्वाच्चेत्यर्थः। ननु—’ इत्यधिकम्–उ. [10] ष्टम्भ्यस्या–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किं चास्तु द्रुतं द्रव्यान्तरमेव प्रतिबन्धकम् । तथाऽपि कथं तस्य तेजस्त्वम् । पृथिव्यन्यत्वसाधकेन दाहविरोधित्वेनैव तेजोन्यत्वस्य सुतरां सिद्धेः । न हि द्रवद्रव्यसाधकं धर्मिग्राहकं मानं तस्य [1]द्रवत्वसमानाधिकरणं पार्थिवत्वं विहाय नियमेन [2]द्रवत्वव्यधिकरणं तेजस्त्वं स्पृशति । येन दाहविरोधित्वेन तेजोन्यत्वसाधनं धर्मिसिद्ध्यसिद्धिभ्यां व्याहतं स्यात् । द्रुततेजसोप्रसिद्ध्या व्याप्तय-

---

संयुक्तत्वं [3]विना वा हेतुरुपपन्न इत्या[4]दिना हेतुरप्रयोजक इत्युक्तमिदानीं तदुपेत्यापि परिशेषतस्तेजस्त्वोक्तिरयुक्तेत्याह—किंचेति । प्रतिबन्धकमिति । पूर्वरूपविजातीयरूपप्रतिबन्धकमित्यर्थः । तेजोन्यत्वस्येति । उपष्टभ्यतया त्वदभिमतं द्रव[5]द्रव्यान्तरं न तेजो भवितुमर्हति दाहविरोधित्वात् जलवदिति प्रयोगसंभवात्तेजसश्च दाहानुकूलत्वेन तद्विरोधित्वाभावादिति भावः ॥

नन्वेवं प्रागुक्तद्रवद्रव्यसंयुक्त[6]साधकधर्मिग्राहकमानबाध इत्यत आह—न हीति । स्पृशति—अनुमापयतीत्यर्थः । सिद्ध्यसिद्धिभ्यां[7] तादृशद्रव्यसिद्धौ तेजस्त्वेनैव सिद्ध्या तदभावसाधनं व्याहतम् । तदसिद्धौ चाश्रयस्यैवासिद्ध्या तस्य तेजोन्यत्वसाधनं व्याहतमित्यर्थः । कुतो न स्पृशतीत्यत आह—द्रुतेति । दाहविरोधित्वेनैवोपष्टभ्यद्रुत-

---

[1] द्रवद्रव्यत्व–क. ज. [2] द्रवेत्यधिकं–क. [3] वा विना–उ. [4] इति । अत्यन्तेत्यादिना इत्याद्यस्ति–उ. [5] द्रवपदं न–उ. [6] कत्वसा–उ. [7] भ्यामिति । इत्यस्ति–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ग्रहात् । अन्यथा पृथिव्यात्मक एव स भागोस्तु । धर्मिग्राहकमान[1]मादाय विरोधशङ्कासमाधानस्योभयत्र साम्यात् ॥

भागस्य तेजोन्यत्वानङ्गीकारे बाधः[2] । अन्यथेति । विरोधेति । द्रुतभागस्य दाहविरोधित्वात्कथं पृथिवीत्वमिति शङ्कायां तत्समाधानस्य यथा तेजस्त्वं कथमिति शङ्का धर्मिग्राहकमानेन तथैव सिद्धेरिति [3]तथैव समाधीयते तथैव धर्मिग्राहकमादायैवावनित्वं सिद्धमित्यपि कर्तुं शक्यत्वादित्यर्थः । उभयत्रेति । अवनित्वे तेजस्त्वे चेत्यर्थः ॥

अयं भावः । दाहविरोधित्वेन कल्पितद्रुतभागस्य धर्मिग्राहकमानसिद्धत्वेन तेजस्त्वा[4]वगमश्चेत्तर्हि स भागः पृथिव्यात्मक एवास्तु । न च पृथिव्याः दाहाविरोधित्वादस्य च उपष्टम्भकद्रव्यविरोधित्वात्कथं पृथिवीत्वं तस्येति वाच्यम् । एवं सति तेजसोपि दाहाप्रतिबन्धकत्वादस्य च भागस्य दाहप्रतिबन्धकत्वात्कथं तेजस्त्वमिति साम्यात् ॥

ननु—अत्यन्तानलेत्यादिप्रागुक्तानुमानरूपधर्मिग्राहकमानेनैव द्रुतभागस्य तेजस्त्वं सिद्धमिति तेजोन्तरेनुपलब्धमपि दाहविरोधि[5]त्वमत्रैवोपेयत इति चेत् । तर्हि तेनैव धर्मिमानेनावनित्वं सिद्धमिति पृथिव्यन्तरेऽदृष्टमपि दाहविरोधित्वमत्रैवोपेयत इति साम्यात् । तेनै[6]वावनित्वं न सिद्धं चेत्तेजस्त्वं न सिद्धमिति ॥

द्रुतभागस्य पृथिवीत्वसाधनं तेजोन्यत्वसाधनं वा धर्मिग्राहक-

[1] मानमिति द्विरस्ति—रा. सु. [2] कमाह—उ. [3] तथैव इति नास्ति—उ. [4] स्त्वोप—उ. [5] धि अ—उ. [6] एवकारोनास्ति—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नन्नु—धर्मिग्राहकमाने[1]नैव तैजसत्वसिद्धिः। उक्तरीत्या द्रुतभागे सिद्धे स भागः पृथिवी तेजो वेति सन्देहे पृथिवीद्रवत्वत्वस्य लाक्षाद्रवत्वादावतिप्रसक्तत्वेन सुवर्णरजतताम्राद्युपष्टम्भकावनि[2]भागवर्ति तत्तत्पृथिवीद्रवत्व[3]त्वं दाहप्रतिबन्धकतावच्छेदकं कल्प्यमिति गौरवम्। तेजोद्रवत्व[4]त्वमात्रं तु लघ्विति लाघवतर्कसहकारेण धर्मिग्राहकस्यैव तैजसत्वपर्यन्तं व्यापारादिति चेन्न। तेजोद्रवत्वस्य प्रकृतप्रमाणप्रवृत्तेः प्रागसिद्धत्वेन लाघवानुपस्थितेः॥

किं च सुवर्णस्य तैजसत्वे स्मृतिषु

मानबाधितमिति भावेनाशङ्कते—नन्विति। तेजस्त्वसिद्धिरिति। द्रुतभागस्येति शेषः। उक्तेति। अत्यन्तानलेत्युक्तरीत्येर्थः। लाक्षाद्रवत्वादाविति। तस्य दाह[5]प्रतिबन्धकत्वादिति भावः। तेजोद्रवत्वमात्रमिति। तस्य दाहाप्रतिबन्धके क्वाप्यनतिप्रसक्तत्वादिति भावः। लाघवतर्केति। कार्यता[6]नुमानस्य कर्त्रैक्यपर्यन्ते[7] व्यापारवदिति भावः। प्रकृतेति। अत्यन्तानलेत्युक्तप्रमाणे[8]त्यर्थः। एवमत्यन्तानलेत्याद्युक्तमनुमानं द्रवद्रव्यसंयुक्तत्वसाधने तस्य तेजस्त्वसाधने च न क्षममप्रयोजकत्वादेरित्युक्तम्। तर्कपराहतं च तदिति भावेन प्रतिकूलतर्कानाह—किं चेति। स्मृतिष्विति। स्मृतिषु शरीरपरिमित[9]त्वाद्युक्तिः। श्रुतिषु

[1] नेन न तेजसत्व—रा. सु. [2] विनिर्भाग—रा. क. ग. ज. सु.
[3] वत्वं—रा. क. सु. वत्वे—ज. [4] वत्वमा—क. [5] हाप्र—उ. [6] त्वस्यानु—उ.
[7] न्तव्या—उ. [8] णेने—उ. [9] त्वसहस्रपलपरिमित—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'कृष्णलंस्नपये' दि'ति, श्रुतिषु च तुलापुरुषादि-
दानेषु शरीरपरीमितत्वसहस्रपलपरिमितत्वाद्युक्तिः

श्रवणाद्युक्तिरित्यन्वयः ॥

सुवर्णं रजतं वाथ वस्त्रं वान्यदभीप्सितम् ।
यावत्साम्यं भवेद्राजन्नात्मनोभ्यधिकं तु वा ॥
तावत्तुलायामारोप्य सर्वं दद्याद्द्विजातये ॥

इति स्कान्दे ॥

तत्रैकत्र तुलभागे सुस्नाते धौतवाससि ।
. . खड्गधरे भूते[2] सम्यक्पद्मासने स्थितः ॥
ततोपरं[3] तुलभागे न्यसेयुर्द्विजपुङ्गवाः ।
सममभ्यधिकं यावत्काञ्चनं चाभिनिर्मलम् ॥

इति मात्स्ये स्मरणात् ॥

तथा मात्स्य एव स्वर्णकामधेन्वादिदानप्रस्तावे—
काञ्चनस्यापि[4] शुद्धस्य धेनुं वत्सं च कारयेत् ।
उत्तमा पलसाहस्रैस्तदर्धेन तु मध्यमा ॥
कनीयसी तदर्धेन कामधेनुः प्रकीर्तिता ॥

इति स्मरणादिति भावः—कृष्णलमिति । स्वर्णमासिः । प्रजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इति श्रुतेरर्थात्प्राप्तस्य वा चोदकप्राप्तश्रवणस्य वाऽनुवादः । 'कृष्णलंश्रये' दिति शाखान्तर-वाक्यं वा। अत एव दशमे द्वितीये पादे 'कृष्णलेष्वर्थलोपादपाक'

[1] स्यादिश्रु–रा. ग. ज. नं. सु. स्नादपुच–क. [2] खड्गखेटधरे भूप–उ.
[3] रे–उ. [4] तिश्च–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रपणाद्युक्तिश्च न स्यात् । न च तत्रोपष्टम्भकपर-
मेव सुवर्णपदम् । अशक्यपरत्वे लक्षणाऽऽपत्तेः ।
तस्यापि शक्यत्वे नानार्थकत्वात् ॥

एतेन—

पीतिमा च गुरुत्वं च दाहे यत्र च रक्तता ।
तस्य लोकप्रसिद्धस्य स्वर्णत्वं केन वार्यते ॥
अविच्छिन्नद्रवत्वं च वस्तु [1]यत्त्विह भासते ।
सुवर्णव्यवहारोऽयं [2]यत्र शास्त्रे प्रवर्तते ॥

---

इत्य[3]धिकरणे कृष्णलेष्ववयवविक्लृप्तादिकार्याभावादपाक इति प्राप्ते श्रपणवचना[4]पथानुपपत्तया ऊष्मीकरणमात्ररूपः पाकोऽवश्यं कर्तव्य इति सिद्धान्तिततमिति भावः । तत्रेति । शरीरपरिमितत्वाद्युक्तिस्थळ इत्यर्थः । उपष्टम्भकेऽपि सुवर्णपदस्य शक्तिर्नास्ति उतास्ति । आद्य आह—अशक्यपरत्व इति । अन्त्य आह—तस्यापि शक्यत्वेति । नानार्थत्वेति । तस्य[5] न्यायश्चानेकार्थत्वमितिन्यायेनान्याय्यत्वादिति- भावः । एतेनेति । सुवर्णे द्रव्यान्तराभावत्वकथनेनेत्यर्थः । निरस्त- मित्यन्वयः । अत्र वस्तुनि पीतिमा गुरुत्वं च दाहनिमित्तरक्तता चोप- लभ्यते तस्येत्यर्थः । तस्मिन् पीतिमाद्यधिकरणे कस्य सुवर्णत्वव्यवहारो मुख्यः कस्यामुख्य इत्यत आह—अविच्छिन्नेति । अवच्छिन्नद्रवत्व- मिति बहुव्रीहिः । वस्तुविशेषणं दाह इत्यनुषङ्गः । शब्दसाम्यं सुवर्ण- शब्दसाम्यमुष्टम्भकेऽपि प्रवर्तते । मधुरशब्दः रसे मुख्योऽपि वीणा-

---

[1]वस्त्विह—रा. सु. [2]त—ज. नं. सु. [3]त्वाद्य—उ. [4]न्यथा—उ.
[5]वा न्यायैश्चा—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वस्तुभेदे प्रसिद्धेऽपि शब्दसाम्यं प्रवर्तते ।
रसस्वभावो मधुरो ध्वनिश्च मधुरो यथा ॥

इति लीलावत्युक्तं निरस्तम् । वस्तुभेदस्यैवासिद्धेः। पार्थिव एव शास्त्रीयव्यवहारस्य दर्शितत्वाच्च । संभवत्येकार्थत्वे नानार्थत्वायोगाच्च ॥

किं च सिध्यतु दाहप्रतिबन्धकस्य द्रुतभागस्य तैजसत्वम् । तथाऽपि स भाग आवश्यकवह्निगत एवास्तु । न तु [1]स्वर्णरजतताम्रादिरूपोपष्टम्भक-भागगतः । गौरवात् ॥

यद्यपि द्रुततेजोऽधिकरणीभूतव्यक्तिबहुत्वमधि-करणतावच्छेदकधर्मैक्यं चोभयत्र समम् । उपष्टम्भ-

ध्वनिर्मधुरः वेणुध्वनिर्मधुर इति यथा तथेत्यर्थः । दर्शितत्वादिति । शरीरपरिमितत्वादिकथनेनेत्यर्थः । नानार्थत्वेति । उपष्टम्भकस्याशक्य-त्वेन लक्षणापत्त्य[2]शक्यत्वेऽवश्यम्भाविनि नानार्थत्वापात इति भावः । आवश्यकेति । द्रवत्वार्थं वह्निसंयोगस्यापेक्षितत्वादिति भावः । वह्नि-गत इति । उपष्टम्भकपार्थिवसंबद्धो यो वह्निस्तद्गत इत्यर्थः । व्यक्ति-मादाय गौरव[3]दवच्छेदकैक्येन लाघवस्यापि साम्यात् कोऽत्र पक्षे विशेष इत्याक्षिपति—यद्यपीत्यादिना । द्रुततेजोलक्षणभागस्याधिकरणीभूत-व्यक्तयो यास्तासां बहुत्वमित्यर्थः । अधिकरणतेति । द्रुततेजोभागाधि-करणतेत्यर्थः । उभयत्रेति । द्रुतभागः वह्निगत इति पक्षे उपष्टम्भक-गतपक्षे चेत्यर्थः । सममित्युक्तं व्यनक्ति—उपष्टम्भकेति । उपष्टम्भक-

[1] स्वर्णपदं नास्ति–ज. [2] त्याश–उ. [3] वदव–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कसुवर्णादिव्यक्तीनामिव वह्निव्यक्तीनामपि बहुत्वात् । बहुषु[1] वह्निषु वह्नित्वस्यैवोपष्टम्भकेषु सुवर्णादिष्वप्यधिकरणतावच्छेदकस्य पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्वस्यैकत्वात् । तथाप्युपष्टम्भके[2]ष्वधिकरणतावच्छेदक[3]मौपाधिकधर्मत्वाद्गुरु वह्नित्वं तु जातित्वाल्लघु । वह्निगतस्यापि तस्योपष्टम्भकसंयुक्तत्वात्तत्र रूप[4]परावृत्ति[5]प्रतिबन्धकता च युक्ता । न चाविनि[6]र्भागवर्तिन[7] एव

---

सुवर्णरजतताम्रादिव्यक्तीनामिवेत्यर्थः । तज्जन्यतया[8] रजतादावपि रजतादिपदवाच्यतया द्रुतभागस्य तेजस्त्वोपगमात् रजतादेरप्युपादानम् । अन्यथा तत्रैवात्राप्युपष्टम्भ्यभागान्तरं विनोपष्टम्भकद्रवत्वादिनैव पूर्वोक्तदिशोपपत्तौ तत्संयुक्तद्रव्यान्तरकल्पनाभावप्रसङ्गादिति भावः । वह्नीति । उपष्टम्भकसंबद्धसुवर्णादिपदवाच्यवह्निव्यक्तीनामित्यर्थः । वह्निष्विति । उपष्टम्यकसंबद्धद्रुततेजोधिकरणवह्निव्यक्तिष्वित्यर्थः । अवच्छेदकलाघवे-विशेष इति समाधत्ते—तथापीति । उपष्टम्भकेष्विति । उपष्टम्भकत्वेन-त्वदङ्गीकृतेषु सुवर्णादिपदवाच्यद्रुततेजोभागाधिकरणेष्वित्यर्थः ॥

ननु—वह्निगतस्य द्रुततेजोभागस्य कथमुपष्टम्भकभूतपार्थिवरूपापरावृत्तिहेतुत्वं व्यधिकरणत्वादित्यत आह—वह्निगतस्यापीति । ननु पृथग्भूत वह्निसंयोगः प्रतिबन्धकः कथमित्याशङ्क्य निराह —न चेति ।

---

[1] बहुष्विति नास्ति–रा. क. ग. ज. नं. सु [2] षु सुवर्णादिष्वपि अधि–रा. सु. [3] कं सोपा–नं. [4] पाप–क. ग. नं. [5] हेतुता च युक्ता–रा. ग. नं. सु. [6] निभाग–ग. नं. [7] नैव–सु. [8] तुल्यन्यायतया–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संयोगः प्रतिबन्धकः। जलसं[1]बन्धेन जलमध्यस्थ-
पटादौ रूप[2]परावृत्तिप्रतिबन्धदर्शनात्। वह्नौ तादृ-
शभागस्यानुपलब्धिबाधस्तूपष्टम्भकेऽपि समः।
वह्निगतत्वे तत्संब[3]द्धपटादिरूपस्यापि प्रतिबन्धः
स्यादिति चोद्यं स्वभावादुपष्टम्भकस्यैव रूपं प्रति-
बध्नातीति समाधानं चोपष्टम्भकगतत्वे च समम्॥

किंचास्तूपष्टम्भकाविनि[4]र्भागवर्त्येव स भागः।
तथाऽपि तस्य सुवर्णत्वादिजातिमत्त्वे न मानम्।
लोकसिद्धसुवर्णरजतादौ विजातीयरूप[5]प्रतिबन्ध-
कत्वेन सिध्यतस्तस्य नानाजातीयत्वे गौरवादे-
कजातीयत्वेनैव सिद्धेः। तस्माल्लोकसिद्धसुव-

---

तत्र हेतूनाह—जलेति। [6]उपष्टम्भकेति। उपष्टम्भकगत एव तादृशो द्रुतभाग इत्यत्रापि पूर्वोक्तदिशाऽनुपलम्भबाध एवेत्यर्थः॥

नन्वस्त्वे[7]तावता न सुवर्णस्य पार्थिवत्वं भवदभिमतं प्राप्तमिति चेन्न। परमतासिद्धेरेवाभिलषितत्वादिति भावः॥

ननु द्रुतत्वमुपष्टम्भकस्थमेवोपलभ्यत इति तद्द्रुत एव कश्चि-द्भागः कल्प्यत इत्यत आह—किं चास्त्विति। न मानमिति पद-विभागः। नानेति। सुवर्णरजतताम्रादिजातीयत्व इत्यर्थः॥

प्रागुक्तं सर्वं बुद्ध्यारोहायोपसंहारव्याजेन दर्शयति—तस्मादिति।

---

[1] योगेन—ग. [2] परावृत्तीतिनास्ति—रा. क. ग. ज. नं. सु. [3] न्धघ-टा—रा. द्धघ—सु. [4] निभाग—ग. नं. [5] तस्येत्यारभ्य एतदन्तंनास्ति—रा.सु.
[6] तर्हि प्रागुक्तानुपलब्धिबाधः कुतो नेत्यत आह—वह्नाविति। तादृशेति। पूर्वरूपापरावृत्तिहेतुभूतभागस्येत्यर्थः। इत्यधिकम्—उ. [7] वं ता—उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

र्ण[1]रूपपरावृत्तिप्रतिबन्धस्य क्लृप्तेनावश्यकेन भोज-
कादृष्टेनैव वा द्रवत्वस्य प्रतिबन्धकत्वेऽपि क्लृप्तेन
समानाधिकरणद्रवत्वेनैव वा व्यधिकरणस्य [2]द्रव-
त्वस्य प्रतिबन्धकत्वेपि द्रवत्वाधिकरणान्तरस्य
क्लृप्तेन पार्थिवत्वेनैव वा तैजसत्वेऽपि लाघवात्तस्य
दाहकवह्निगतत्वेनैव वोपष्टम्भकसुवर्णाद्यवि[3]निर्भा-
गवर्तित्वेऽपि तस्यासुवर्णत्वेनैव वोपपत्तेर्न सुवर्णस्य
तैजसत्वसिद्धिः ॥

सुवर्णस्योदयनाद्युक्तार्थापत्तेः पञ्चधाऽन्यथो[4]पपत्ति-
समर्थनम् ॥ १३ ॥

---

तस्य विवरणं लोकेत्यादिनोपपत्तेरित्यन्तेन । किं चास्तु [5]द्रव-
द्रव्यत्वमित्यादिनोक्त[6]माह—द्रवत्वस्येति । किंचास्तु द्रुतमित्यादिनोक्त-
माह—व्यधिकरणस्येति । [7]किं चास्त्वित्यादिनोक्तमाह—उपष्ट-
म्भकेति ॥

सुवर्णस्योदयनाद्युक्तार्थापत्तेः पञ्चधा[8]न्यथोपपत्तिसमर्थनम् ॥ १३ ॥

---

[1]'र्णेपि' इति, ततः 'क्लृप्तेन' इति ततः 'समानाधिकरणद्रवत्वेनैव वा' इति चास्ति—रा. सु. [2]'द्रवत्वस्य' इति नास्ति—ज. नं. [3]वनिभाग—ग. नं. [4]थैवो—क. ग. ज. नं. [5]द्रवपदं न—उ. [6]क्तमन्वाह—उ. [7]किं च सिद्धय-त्वित्यादिनोक्तमाह—तैजसत्वेपीति—उ. [8]मान्य—उ.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथसुवर्णस्य तैजसत्वे मण्याद्युक्त-प्रकारद्वयभङ्गः ॥ १४ ॥

यदपि मणौ लीलावत्यु[1]क्तं [2]मतमुक्तमत्यन्ताग्निसंयोगे [3]नानुच्छिद्यमानद्रवत्वाधिकरणं रूपवद् वहिरिन्द्रियप्रत्यक्षद्रव्यत्वात्, पृथिव्यादित्रयान्तर्गतं च रूपत्वात्, तत्रापि न जलम् पूर्वोक्तहेतुद्वयात्, नापि पार्थिवम् असति द्रवद्रव्यसंबन्धेऽत्य-

---

अथसुवर्णस्य तैजसत्वे मण्याद्युक्तप्रकारद्वयभङ्गः ॥ १४ ॥

मतमुक्तमिति । नवीनास्त्वित्यादिनोक्तमित्यर्थः । तदर्थं निष्कृष्यानुवदति—अत्यन्तेति । अधिकरणमित्यन्तं पक्षः । सुवर्णरजतताम्रादिकं विशेष्यं ध्येयम् । रूपवदिति साध्यम् । आश्रयासिद्धिनिरासाय सत्यन्तम् । जीवात्मनि गगने रूपादौ चाव्यभिचाराय—वहिरिन्द्रियेति प्रत्येक्षेति द्रव्यत्वादिति च हेतावुक्तिः । अस्मिन्नेव पक्षनिर्देशे साध्यहेत्वन्तरे आह—पृथिव्यादीति । रूपित्वहेतोरसिद्धिनिरासाय पूर्वप्रयोगः । तत्रापीति । पृथिव्यादित्रयान्तर्गतत्वेपीत्यर्थः । पूर्वोक्तेति । नैमित्तिकद्रवत्ववत्त्वात्, स्नेहशून्यत्वाच्च, स्नेहवत्त्वे तदधीनसंग्रहप्रसङ्गादिति पूर्वभङ्गोक्तहेतुद्वयादित्यर्थः । लाक्षावदिति भावः । नापि पार्थिवमिति । उक्तरूपद्रवत्वाधिकरणं वस्त्वित्यनुषङ्गः । अत्रा[4] सति द्रवद्रव्यसंबन्ध इति पक्षो विशेषणीयः । तेन [5]कथ्यमानजलमध्य-

---

[1] त्याद्युक्तं—रा. [2] मतमुक्तमिति नास्ति—क. ज. [3] गे सत्य—ग.
[4] त्रसति—नं. [5] कथ्यमानजलमध्यस्थघृतादौ न बाधः इत्यधिकम्—मु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात्, जलवदिति परिशेषात्तेजस्त्वसिद्धिरिति । तन्न । सुवर्णे द्रुतद्रुततरत्वादेः क्रमशः प्रतीत्या द्रवत्वानुच्छेदस्यासिद्धेः ॥

न च द्रवत्वप्रागभावासमानाधिकरणध्वंसाप्रतियोगिद्रवत्वाधिकरणत्वं हेतुः, स च नासिद्ध इति वाच्यम् । प्रबलान[1]ळसंयोगेन द्रव्यस्य नष्टतया द्रवत्वध्वंसस्य द्रवत्वप्रागभावासमानाधिकरणत्वेन[2] हेत्वसिद्धेः ॥

अथ सुवर्णद्रवत्वमाश्रयनाशान्नश्यति न त्वग्नि-

---

स्थ[3]घटादावव्यभिचाराय हेतावसति द्रवद्रव्यसम्बन्ध इत्युक्तिः । असिद्धिनिरासायात्यन्ताग्निसंयोगेऽपीत्युक्तिः । अप्रयोजकत्वनिरासायानुच्छिद्यमानेति । यद्वा लाक्षा[4]घृतादावव्यभिचारायानुच्छिद्यमानेत्युक्तिः ॥

असिद्ध्युद्धारं मण्युक्तमाशङ्क्य निराह—न च द्रवत्वेति । एकस्य द्रवत्वस्य नाशे पूर्वपूर्वस्मादुत्कृष्टोत्कृष्टतरोत्कृष्टतमद्रवत्वानामुत्तरोत्तरेषां तत्र जायमानत्वेन पूर्वपूर्वद्रवत्वध्वंसस्योत्तरोत्तरद्रवत्वप्रागभावसमानाधिकरणत्वेन तदसमानाधिकरण[5]ध्वंसाप्रतियोगित्वाद्द्रवत्वानां तादृशद्रवत्वाधिकरणत्वं नासिद्धमित्यर्थः । नष्टतयेति । पीलुपाकप्रक्रियावयवक्रियया तत्संयोगनाशेन परमाणुद्रव्यनाशे सति पुनर्भोजकादृष्टेन परमाणुक्रियया तत्संयोगद्वारा द्रव्यान्तराणामुत्पत्तेस्तत्रोपगमादिति भावः ॥

मण्युक्तमेवासिद्धिशून्यहेत्वन्तरमाशङ्कते -- अथेत्यादिना ।

---

[1] लाग्निसं–सु. [2] त्वासिद्ध्या हे–रा. सु. [3] घृता–मु. [4] क्षाद्यजादौ–उ. [5] घटादि इत्यधिकम्–मु.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संयोगात्। तथात्वे घृत [1]इव द्रवत्वान्तरं नोत्पद्येत।
एवं चाग्निसंयोगे सत्यपि तद्धेतुकनाशाप्रतियोगि-
द्रवत्वाधिकरणत्वं हेतुः स च नासिद्ध इति चेन्न[2]।
तथाप्युपष्टम्भके पीते पार्थिवे उक्तरूपस्य द्रवत्वानु-
च्छेदस्य दर्शनेन[3] व्यभिचारात्॥

ननु—पार्थिवद्र[4]वत्व[5]त्वमेवा[6]ग्निसंयोगनाश्यत्वे
तन्त्रम्। न तु जन्यद्रवत्व[7]त्वम्। सुवर्णादिद्रव-
त्वेतिप्रसक्तेः। नापि घृतलाक्षादिद्रवत्व[8]म्।
अननुगमात्। एवं च पीते पार्थिवे द्रवत्वाङ्गीकारे
तस्योच्छेदापत्त्या पीतं[9] द्रुतमिति प्रतीतिर्भ्रान्ति-

---

अग्निसंयोग इति। आश्रयानाशाद्यत्र घृते द्रवत्वा[10]नाशस्तत्राव्यभिचा-
राय सत्यन्तम्। तथापीति। असिद्ध्यभावेऽपीत्यर्थः। पार्थिवत्वोप-
पादनाय [11]पीतेत्युक्तिः। साध्याभावोपपादनाय पार्थिव इत्युक्तिः।
तत्रोक्तरूपहेतोरेवाभावान्न व्यभिचार इति भावेन बाधोक्तिपूर्वं पीतं
द्रुतमिति बुद्धेर्भ्रमत्वमाशङ्कते—नन्विति। द्रवत्वस्याग्निसंयोगनाश्यत्वे-
न द्रवत्वमात्रं तन्त्रम्। जलगतद्रवत्वे व्यभिचारात्। किं तु पार्थिवद्र-
व[12]त्वं वा लाक्षाद्रवत्वं घृतद्रवत्वमित्यादिकं वाच्यम्। तत्राद्यमेव युक्तं न
त्वन्यदिति निराह—पार्थिवेति। अस्तु किं तत इत्यत आह—एवं

---

[1] घट इव–क. ज. नं. [2] न इति नास्ति–रा. सु. [3] तत्रेत्यधिकम्–रा. ग. नं. सु. [4] वत्वमेवाग्नि–क. [5] त्वमे–रा. ज. नं. सु. [6] त्यन्ता–रा. सु. [7] वत्वं–रा. क. ज. सु. जन्यपदमपि नास्ति–नं. [8] त्वत्वम्–ग. [9] तद्द्रुत–नं. [10] घृतत्वाना–ङ. [11] 'पार्थिवेत्युक्तिः' इत्यन्तं नास्ति–ङ. [12] वत्ववत्त्वं वा–ङ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रिति चेन्न। अनुभवसिद्धं[1] पीते द्रवत्वमपलप्य तदसिद्ध[2]स्य त्वदभिमततेजसि द्रवत्वस्य स्वीकारे दृष्टहान्यदृष्टकल्पनाप्रसङ्गात् ॥

अन्यथा—पार्थिवद्रवत्वस्याग्निसंयोगनाश्यतायां तन्त्रत्वे सिद्धे पीते पार्थिवेऽनुच्छिद्यमानद्रवत्वा[3]भावसिद्धिः तत्सिद्धौ चातिव्याप्त्यभावेन पार्थिवद्रवत्व[4]त्वस्याग्निसंयोगनाश्यत्वे तन्त्रत्वसिद्धिरित्यन्योन्याश्रयः स्यात्। दृष्टानुसारिणी हि कल्पना॥

किंच पीतभागो न द्रुतश्चेत्तत्र काठिन्यधीः स्यात्॥

---

चेति। त्वदभिमत इति। उपष्टम्भ्यत्वेनाङ्गीकृत इत्यर्थः। अन्यथेति। अनुभवसिद्धस्यापि पार्थिवद्रवत्वस्य बाधकेनापलाप इत्यर्थः॥

ननु लाक्षादिद्रवत्वं तन्त्रमित्युक्तावननुगमः प्राप्नोतीत्यतः प्रामाणिकत्वान्न दोष इति भावेनाह—दृष्टेति। पीतपार्थिवभागे द्रुतत्वस्य दृष्टत्वेन तदनुसारेण पार्थिवद्रव[5]त्वादन्यदेव किं चिदग्निसंयोगनाश्यतायां प्रयोजकं कल्प्यमित्यर्थः॥

ननु दृष्टिर्भ्रान्तिरित्युक्तमिति चेन्न। तस्या भ्रमत्वे तद्विपरीत प्रत्ययरूपबाधावतारः स्यादिति भावेनाह—किं चेति। यदा [6]द्रवत्वा[7]नुच्छेदरूपहेतोरभावान्नोपष्टम्भकपार्थिवभागे व्यभिचारस्तदा न केवलं दृष्टहान्याद्यापात[8] इति भावेनाह—किं चेति। काठिण्यबुद्ध्यभावोऽन्यनिमित्तक एव न तु तदभावहेतुक इति भावेन मण्युक्तमेवाशङ्क्य

---

[1] द्धे—नं. [2] द्धे—नं. [3] त्वाधिकरणत्वासि—रा. सु. त्वाधिकरुणत्वाभाव—नं. [4] त्वस्या—रा. क. ज. नं. सु. [5] वत्वत्वाद—उ. [6] यद्वाद्र—नं. [7] द्रवत्वेति नास्ति—उ. [8] किंत्वनिष्टान्तरंचापद्यत इति भा—मु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च जलस्थमपीक्षोदादाविव प्रशिथिलावयवसंयोग[1]वत्त्वान्न तद्धीरिति वाच्यम्। एवं हि घृतादावपि द्रवत्वं न सिध्येत्। त्व[2]न्मते घृते स्नेहप्रतीत्यर्थ[3]मावश्यकाप्यद्रव्यसंयोगकृतावयवसंयोगशैथिल्येनैव काठिन्याप्रतीतिरिति सुवचत्वात्। एवं जलेऽपि सांसिद्धिकद्रवत्वं न सिध्येत्। आवश्यकेनावयवसंयोगशैथिल्यविशेषेणैव द्रवत्वधीरिति सुवचत्वात्॥

अन्यथा पार्थिवान्तरे द्रवत्वानुच्छेदादर्शनात् सुवर्णमपार्थिवं चेत्तेजोन्तरे द्रवत्वादर्शनात्सुवर्णं[4] तैजसं न स्यात्। तेजो विशेषस्वभावात् तदुपपत्तौ च पार्थिवविशेषस्वभावादिदमप्युपपद्यताम्। कृतं पीतिमगुरुत्वाश्रयातिरिक्तभागान्तरं कल्पयित्वा

---

निराह—न चेति। [5]अपां नेत्राञ्जनन्यायमते घृतस्य पार्थिवत्वेन स्वतः स्नेहाभावादाह—[6]त्वन्मत इति॥

ननु काठिन्यबुद्धेरभावेऽपि लाक्षादौ पार्थिवान्तरेऽत्यन्ताग्निसंयोगे द्रवत्वानुच्छेदादर्शनादिह च तद्दर्शनात्स्वर्णादौ प्रतीतद्रवत्वं नोपष्टम्भकपार्थिवगतं किं तु तदुपष्टभ्यभागान्तरगतमिति कल्पनीयः। अत एव मणौ घृतादौ द्रवत्वे बाधकाभावादित्युक्तमित्यत आह—अन्यथेति। तस्यैव विवरणं चेदित्यन्तम्। इदमपीति। द्रवत्वानु-

---

[1] गत्वा–रा. ग. सु. गवत्त्वनैव–नं. [2] तन्म–रा. सु. [3] र्थे आ–रा. सु. [4] अतैजसं किं न स्यात्–रा. ग. सु. [5] मपांनेत्राञ्जनम्। न्या–उ. [6] तन्म–नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्र स्वभावविशेषकल्पनेन पीतत्वप्रतीतेर्भ्रमत्वकल्पनेन च ॥

अन्ये तु—अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणं पीतं पार्थिवं द्रवत्वोच्छेदप्रतिबन्धकद्रवद्रव्यसंयुक्तं अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणपार्थिवत्वात्क्वा[1] थ्यमानजलमध्यस्थ[2]घृतवदित्यनुमानेन [3]द्रवद्रव्यं सिध्य-

च्छेददर्शनमपीत्यर्थः । कृतं अलमित्यर्थः । कल्पनेन कल्पनेन चेत्याभ्यामन्वयः । कल्पनाद्वयं व्यर्थमिति फलितोऽर्थः ॥

एवं मणावुक्त लीलावत्यभिमतमुपष्टम्भकभागे द्रवत्वं नास्त्येवेत्युपेत्य प्रवृत्तं सुवर्णस्यापार्थिवत्वसाधकहेतुमसिद्धिव्यभिचाराभ्यां निरस्योपष्टम्भके द्रवत्वमुपेत्य प्रवृत्तमन्येत्वित्यादिना मण्युक्तमेवान्यदपि मतत्रयं तावदनूद्य निराह—अन्येत्वित्यादिना । एतदपि[4] निरस्तमित्यनेन । अन्येत्वित्यस्याहुरित्यनेनान्वयः । एतन्मतं [5]पार्थिवगतं भवत्येव पीत[6]द्रुतमिति प्रतीतेर्दुरपह्नवत्वात्, प्रागुक्तबाधस्य चोक्तदिशाऽप्रयोजकत्वेन काठिण्यप्रतीत्यापातेन च द्रवत्वप्रतीतेर्भ्रमत्वायोगाच्चानुच्छिद्यमानद्रवत्वाधिकरणं पीतं पाथिवमिति पक्षनिर्देशः । उपष्टम्भकत्वेनोपगतमित्यर्थः । जले बाधनिरासाय पार्थिवमित्युक्तिः । तावत्युक्ते[7] बाधः । अतः पीतमिति । घटादावबाधाय द्रवत्वाधिकरणमिति । लाक्षादाव-

[1] क्वथ—क. क्थ्य—ग. ज. नं. सु. [2] घटवत्—क. ज. [3] द्रुतेत्यधिकम्—रा. क. सु द्रुतद्रव्यं—ग. ज. [4] प्रागेवेत्यधिकम्-मु. [5] ते द्रवत्वं-उ. मु. [6] तं—उ. [7] घृतादावित्यधिकम्—उ. मु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जलत्वे पृथिवीत्वे चोक्ततर्कबाधात्तैजसं सिध्यति ॥

यद्वा प्रतिबन्धकतया सिद्धं द्रुतद्रव्यं तैजसं असति द्रवद्रव्यसंबन्धेऽत्यन्ताग्निसंयोगेनानुच्छिद्यमानानित्यद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा घृतमिति व्यतिरेक्यन्तरात्तैजसत्वसिद्धिः ॥

न चा[1]त्रासाधारण्यम् । तस्य विपक्षे बाधका-

---

बाधायानुच्छिद्यमानेति । आश्रयासिद्धिनिरासायात्यन्ताग्निसंयो[2]गेति । अप्रतिबं[3]न्धाग्नीत्यर्थः । जलपरमाणुसंयोगेनार्थान्तर वारणाय साध्ये प्रतिबन्धकान्तं विशेषणम् । [4]स्वावयवावयवसंयोगेनार्थान्तरवारणाय प्रतिबन्धकान्तम् । हेता[5]वव्यभिचाराय पार्थिवत्वादित्युक्तिः । घटादावव्यभिचाराय-द्रवत्वाधिकरणेति । लाक्षादावव्यभिचारायानुच्छिद्यमानेति । असिद्धिनिरासायात्यन्तेत्यादि । [6]उक्ततर्केति। जलत्वे नैमित्तकद्रवत्वं न स्यात् । स्नेहवत्त्वं च स्यात् । पृथिवीत्वे च लाक्षादाविव द्रवत्वोच्छेदः स्यात् इति तर्केत्यर्थः ॥

पर्यवसानगत्या तैजसत्वं प्रसाध्य साक्षादेव तैजसत्वमथवेत्यादिना मण्युक्तप्रकारेणान्वाह—यद्वेति । जलपरमाण्वादावव्यभिचाराय हेतावनित्येति द्रवत्वविशेषणम् । लाक्षादावव्यभिचारायानुच्छिद्यमानेति । असिद्धिनिरासायात्यन्तेत्यादि । क्वथ्यमानजलस्थघृतादावव्यभिचाराय[7] सतीत्यादि । असाधारण्यमिति । तेजोन्तरे सत्यपि तैजसत्वे हेतोरभावादिति भावः । असाधारण्यस्य दोषत्वे संशयः सत्प्रतिपक्षो[8] वा द्वारम् । स च विशेषादर्शनस्थळे संभवति न त्विहेत्याह—तस्येति ।

---

[1] अत्रेति नास्ति—क. नं. च तत्रा—ग. [2] गे पीति—उ. मु. [3] द्धा—उ. [4] 'यद्वा' इत्यधिकं—उ. मु. [5] तौ पयस्यव्य—उ. [6] स्वरूपोक्ति र्वा । इत्यधिकम्—मु. [7] 'यास' इति शोधितं—उ. मु. [8] क्षवद्वाच्य:—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दर्शनदशायामेव दोषत्वात्। प्रकृते च पृथिवी-
त्वादौ बाधकस्योक्तत्वात् ॥

यद्वा द्रुततेजस्त्वमेव साध्यम्। इदं च साध्यं
विशिष्टं[1] क्वापि न प्रसिद्धमिति नासाधारण्यम्। न
चैवमप्रसिद्धविशेषणत्वम्। तेजस्त्वं नाद्रवरूपवन्मा-
त्रवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् द्रुतवृत्ति वा
रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् जलत्व-
वदिति सामान्यतो द्रुततेजस्सिद्धिरित्याहुः ॥

---

बाधकस्येति। लाक्षादाविव द्रवत्वोच्छेदः स्यादित्यादिबाधकस्येत्यर्थः ॥

ननु द्रुततेजस्त्वमेव साध्यम्। तथा च [2]पक्षाभावान्न [3]साधारण्य-
मपि। किं तद्दोषतानिरासाय विपक्षे बाधकतर्कानुसारणायासेनेत्यतोऽन्येत्वि-
तिमण्युक्तमेव प्रकारान्तरमाह—यद्वेति। प्रतिबन्धकतया सिद्धद्रुतद्रव्यस्ये-
त्यनुषङ्गः। नाद्रवेति। अद्रवं यद्रूपवत्तन्मात्रावृत्ति रूपवद्द्रुतवृत्तीति फलि-
तोर्थः। घटत्वादावव्यभिचाराय हेतौ साक्षाद्व्याप्येत्युक्तिः। तस्य द्रव्य[4]-
त्वव्याप्यपृथिवीत्वव्याप्यत्वात्। अत्म[5]नोऽन्यतरत्वादावव्यभिचाराय
जातिपदम्। मणौ रूप[6]वृत्तिद्रव्यत्वसाक्षाद्व्याप्येत्युक्तावप्येति[7]हेत्वनु-
वादस्तु रूपवद्द्रुतवृत्तीतिपर्यवसितसाध्ये मनस्त्वे व्यभिचारेण तन्निरासाय
रूपवत्पदसार्थक्येऽपि यथाश्रुतसाध्ये व्यभिचाराभावेन व्यर्थत्वमभिप्रेत्येति
ध्येयम्। रूपवदित्यंशस्य साध्ये गुरुत्वादाह—द्रुतवृत्तित्वेति। मन-
स्त्वादावव्यभिचाराय हेतौ[8]रूपवृत्तीति द्रव्यविशेषणम्। घट[9]सौरालोकान्य-

---

[1] व्यक्ता–रा. ग. नं. सु. [2] सप–उ. [3] नासा–उ. [4] वत्व–उ.
[5] त्म मनो–उ. [6] वद्वृ–उ. [7] प्येवं हे–उ. [8] 'वद्वृत्तीति द्रव्यत्वविशे इत्यस्ति–
मु. [9] तेजोन्य–मु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतदपि प्रागेव निरस्तम् । करकादाविवादृष्ट-विशेषस्यैव प्रतिबन्धकत्वोपपत्तेरनुपलब्धिबाधित-भागान्तरकल्पनायोगात् । तैजसत्वसाधकव्यति-रेकिणि तु पक्ष एवासिद्धः । अत एव तर्कोऽपि निरालम्बनः । यच्चाप्रसिद्धविशेषणत्वनिरासायानु-मानद्वयमुक्तम् । तदपि [1]न । तेजस्त्वं नागुरुरूप-वन्मात्रवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् गुरु-वृत्ति वा रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् जलत्ववदित्यादिना तेजस्त्वस्य गुरुवृत्तित्वस्या[2]-प्यापत्त्याप्रयोजकत्वात् ॥

---

तरत्वादावव्यभिचाराय जातिपदम् । प्रागेव पूर्वभङ्ग एवेत्यर्थः । तद्व्य-नक्ति—[3]कारणादाविति । एतदपि योग्यानुपलब्धिबाधेनान्यथैवोप-पत्तिपञ्चकेन च प्रागेव निरस्तमिति क्वचित्पाठः । पक्ष एवासिद्ध इति । सुवर्णे द्रुतद्रुततरत्वादेः क्रमशः प्रतीत्या द्रवत्वानुच्छेदस्यासिद्धेरित्युक्तदि-शाऽनुच्छिद्यमान[4] द्रवत्वाधिकरणत्वस्यासिद्ध्या पक्ष एवासिद्धः । किं दोषान्तरेणेत्यर्थः । अत एवा[5]नुच्छिद्यमानद्रवत्वाधिकरणत्वासिद्ध्या पक्षा-सिद्धेरेव । द्रुतद्रव्यसंयुक्तत्वरूपसाध्यस्यासिद्धत्वात् यदि तादृशद्रुतद्रव्यं पार्थिवं स्याद्द्रुतत्वोच्छेदः स्यात् इति तर्को निरालम्बन इत्यर्थः । नागुरु-रूपवन्मात्रवृत्तीति । गुरुत्वहीनरूपवन्मात्रवृत्ति नेत्यर्थः ॥

अथ वा घटे [6]द्रुतत्वोच्छेदसमय[7]समानाधिकरणद्रवत्व[8]सामग्री-

---

[1] न इति नास्ति—क. रा. ज. नं सु. [2] प्युपपत्त्या—रा. सु. [3] कर-कादा—उ. [4] 'सुवर्णे' इत्यादि नास्ति—मु. [5] अनुच्छिद्यमानेति नास्ति—मु. [6] दद्रु—उ. घृते—मु. [7] ये स—उ. [8] त्वे सा—उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एतेन सुवर्णं तैजसं समानाधिकरणद्रवत्वसामग्र्यसमवहिताग्निसंयोगजन्यध्वंसप्रतियोग्यवृत्तिद्रव[1]त्वत्वव्याप्यजातिमद्द्रवत्ववत्त्वात् व्यतिरेकेण घृतवत्। सुवर्णारम्भकाः परमाणवो न पार्थिवाः अत्यन्ताग्नि संयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात्। जलपरमाणुवत् । तैजसा वा उक्तहेतोः। व्यतिरेकेण घृतपरमाणुवदित्यादीन्यपि निरस्तानि। पीते

---

समवधानं नास्ति सुवर्ण[2]त्वमस्तीत्यादिना मण्युक्तान्येव प्रयोगान्तराण्यनूद्य निराह-एतेनेति। सुवर्णमित्या[3]दिनोपष्टम्भ्यंद्रुतभागो गृह्यते-समानेति। समानाधिकरणं यद्द्रवत्वं तत्सामग्र्यसमवहितो योऽग्निसंयोगस्तज्जन्यो[4]ध्वंसप्रतियोगीनि घृतादिनिष्ठद्रवत्वानि तदवृत्तिर्जातिः सुवर्णद्रवत्व एवेति नासिद्धिः । अत्र नञ्द्वयाप्रवेशेन तादृशसामग्रीसमवहिताग्निसंयोगजन्यध्वंसप्रतियोगिवृत्तीत्युक्तावग्निसंयोगप्रयोज्यनैमित्तिकद्रवत्वमात्रनिष्ठजातिविशेषमादाय घृते व्यभिचारापातात् । इत्यादीनीत्यादिपदेन सुवर्णमपार्थिवारब्धं तैजसारब्धं वा अपार्थिवं तैजसं वा अत्यन्ताग्निसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणपरमाण्वारब्धत्वादित्यादिसंग्रहः । पीत इति। उपष्टम्भकपार्थिवभाग इत्यर्थः । तत्रापि द्रवत्वस्योपपादितत्वादिति भावः । तेजस्त्वेन विनाऽपि हेतूनामुपपत्तेःप्रागुक्तरीत्यासंभवा-

---

[1] व्यत्वव्या-क. ज. सु. वत्वव्या-ग. नं. [2] र्णे त्वस्ती-उ. [3] त्यनेनो-उ. [4] यो ध्वंसः तत्प्रतियोग्यवृत्तिर्या द्रव्यत्वव्याप्यजातिस्तद्युक्तद्रवत्ववत्त्वादित्यर्थः। सुवर्णे अग्निसंयोगेन द्रवत्वव्यक्तिपरंपराया जायमानत्वेन तत्राग्निसंयोगस्य समानाधिकरणद्रवत्वसामग्रीसमवहितत्वात्तादृशसामग्र्यसमवहिताग्निसंयोगजन्य-इत्याधिकम्-सु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यभिचारादप्रयोजकत्वाच्च[1] ॥

सुवर्णस्य तैजसत्वे मण्या[2]द्युक्तप्रकारद्वयभङ्गः ॥ १४ ॥

## अथ सुवर्णस्य पार्थिवत्वसमर्थनम् ॥ १५ ॥

अन्यस्त्वाह—

सुवर्णं[3] द्रव्यान्तरमेव । तथा हि द्रवत्वाधिकरणं न तेजः पीतत्वात् । न च पीतत्वात्पार्थिवमेवास्त्विति वाच्यम् । पृथिव्यां[4] शुक्लरूपवत्त्वेऽपि शुक्लरूपस्य जलस्य [5]सांसिद्धिकद्रवत्वादिनेव सुवर्णस्य पीतत्वेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पृथिवी-

दाह—अप्रयोजकत्वाच्चेति । प्रकारद्वयेति । उपष्टम्भके[6]द्रवत्वनास्तित्वास्तित्वप्रकारद्वयभङ्ग इत्यर्थः ॥

सुवर्णतैजसत्वे मण्याद्युक्तप्राकारद्वयभङ्गः ॥ १४ ॥

अथ सुवर्णस्य पार्थिवत्वसमर्थनम् ॥ १५ ॥

द्रव्यान्तरमेवेति । नवद्रव्यातिरिक्तमित्यर्थः । पृथिव्या इत्यादेरयमर्थः । [7]यथा पृथिवीजलयोर्द्वयोः शुक्लरूपत्वे[8]नाविशेषेपि

[1] 'सुवर्णस्य द्रव्यान्तरत्वमेव निराकरणम्' इत्यधिकम्—रा. सु. [2] ण्युक्त—क. [3] तु इत्यधिकम्—सु. रा. [4] व्याः—सु. रा. नं. ग. [5] संसि—सु. रा. [6] प्रकारद्वयं नास्तीत्येतत्प्रकार—उ. [7] यथा इति नास्ति—उ. नं. [8] त्वे यथा नैमि-उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तो[1] वैलक्षण्यसंभवात् । न च पृथिवीजलान्यत्वे सति रूपवत्त्वात्तेजः । अप्रयोजकत्वात् । अन्यथा जलतेजोन्यत्वे सति स्पर्शवत्त्वेन वायुरपि पृथिवी स्यात् । न च पृथिव्येवास्तु धर्मिकल्पनातो धर्मकल्पना[2]या लघुत्वादिति वाच्यम् । द्रव्यान्तरत्वपक्षेऽपि धर्मिणः सुवर्णस्य सिद्धत्वेनातिरिक्तत्वमात्रस्य कल्पनादिति ॥

एतदपि प्रागेव निरस्तम् । द्रवत्वोच्छेदप्रतिवन्ध[3]कस्य करकादाविवादृष्टविशेषा[4]देवोपपत्त्या पीतस्य पृथिवीभेदायोगात् । अन्यथा करको[5]ऽपि द्रव्यान्तरं स्यात् ॥

यदि च जलत्वव्याप्यधर्मदर्शनात्करको[6] जलं, तर्हि स्वर्णमपि पृथिवी[7]त्वव्याप्यपीतत्वदर्शना-

---

नैमित्तिकसांसिद्धिकद्रवत्ववत्त्वभेदेन वैलक्षिण्यं तथा पीतत्वाविशेषेऽपि द्रवत्वोच्छित्त्यनुच्छित्तिभेदाद्वैलक्षण्य*मिति प्रागुक्तमण्यादिमतं निराह—

नचेति । तेज इति । सुवर्णमित्यनुकर्षः । एवं पृथिव्येवास्तु इत्यत्रापि । धर्मीति । द्रव्यान्तररूपधर्मिकल्पनापेक्षया क्लृप्तपृथिवीत्वमेवोपादाय तस्यैव द्रवत्वानुच्छेदरूपधर्मकल्पनाया लघुत्वादित्यर्थः । इतिपदस्याहेति पूर्वेणान्वयः । प्रागेवेति । उदयनाद्युक्तभङ्ग एवेत्यर्थः । पृथिवीभेदेति । पृथिवीतो भेदेत्यर्थः । जलत्वव्याप्येति । शुक्लरूपवद्द्रवत्वा-

---

1 वीवं–सु. रा. ग.　2 नाल–सु. रा.　3 न्धस्य–सु. रा. ग. ज.
4 षोपपत्त्या–सु. रा.　5 काद्यपि–सु. रा. क. ग. ज.　6 का ज–ग. ज. क.
7 वी व्या–सु. रा.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्पृथिव्येवास्तु। अन्यथा पीतत्वान्न तेज इत्यपि न युक्तम्। पीतत्वस्य तेजोन्यत्वेनेव पृथिवीत्वेनापि व्याप्तिग्रहात् ॥

तस्मादुपष्टम्भकद्रव्यगतपीतरूपपरावृत्तिप्रतिवन्धकत्वेन द्रुततेजः सिद्धिरिति वा, उपष्टम्भके द्रवत्वानङ्गीकारेणानुच्छिद्यमानद्र[1]वत्वाधिकरणस्य द्रव्यान्तरस्यानुच्छिद्यमानद्रवत्वाधिकरणत्वादेव तै[2]जसत्वसिद्धिरिति वा, उपष्टम्भके द्रवत्वाङ्गीकारेण तदुच्छेदप्रतिवन्धकत्वेन द्रुततेजस्सिद्धिरिति वेति सुवर्णस्य तैजसत्त्वे पक्षत्रयं सुवर्णं द्रव्यान्तरमिति [3]चतुर्थपक्षश्चायुक्त[4] इति सुवर्णं पार्थिवमेव ॥

---

दिकमित्यर्थः। अन्यथेति। पीतत्वस्य पृथिवीत्वाव्यप्यत्व इत्यर्थः[6]*॥

अत्र मणावुदयनोक्तं मतमित्यादिनोक्तभङ्गत्रयार्थं संक्षेपेण [7]दर्शयन्नुपसंहरति–तस्मादिति। सर्वेष्वप्यपार्थिवत्वपक्षेषु दोषसद्भावात्साधकाभावाच्चेत्यर्थः। उदयनादिमतमाह—उपष्टम्भकेत्यादि। मण्युक्तलीलावतीमतमाह—उपष्टम्भक इति। अन्ये त्वित्यादिनोक्तमतान्तरमाह—उपष्टम्भके द्रवत्वेति। अन्यस्त्वाहेत्यादिनोक्तमाह—सुवर्णमिति ॥

प्रासङ्गिकमुपसंहृत्य पूर्वप्रकृतप्रमेयमुत्तरप्रसङ्गो[8]पक्षेपायोपसंहरति—

---

1 'वत्वादेव तेजसत्वसिद्धिरितिवा' इत्यस्ति–सु. 2 तेजसत्वसि–नं. ज. 3 चतुर्थपदं नास्ति–सु. रा. 4 क्तम्–सु. रा. * एतावान्ग्रन्थः प्रलुप्तः प्रतीयते–नं. मित्यर्थः। प्रागु–उ 6 'अन्यथेति' इत्यादि नास्ति–उ. 7 णानुवदन्नु–नं. 8 ङ्गाक्षेपा–नं. ङ्गापेक्षयो–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्माच्छक्तिः पदार्थान्तरं चेत्सुवर्णमपि द्रव्या-
न्तरं स्यादिति प्रतिवन्ध्या[1] असंभवादनन्तगुणा-
न्विते विष्णौ वेदानां शक्तितात्पर्ये युक्ते इति ॥
सुवर्णस्य पार्थिवत्वसमर्थनम् ॥ १५ ॥

## अथ अन्विताभिधाने साधनषट्कम् ॥ १६ ॥

ननु कथमन्विते शक्तिः। पौनरुक्त्यादिदोषात्।

तस्माच्छक्तेरिति। वैदिकपदानां विष्णौ शक्तत्वाद्वेदानां शक्तिता-त्पर्येत्युक्तम्। यद्यपि तमोद्रव्यं सुवर्णं पार्थिवमिति च न मूलग्रन्थादौ कण्ठतः क्वाप्युक्तमथापि वास्तवनिरूपणमेतदितिध्येयम् ॥

सुवर्णपार्थिवत्व[2]समर्थनम् ॥ १५ ॥

अथ अन्विताभिधाने साधनषट्कम् ॥ १६ ॥

एवं ननु स्वरूपसहकार्यतिरिक्तशक्तौ मानं नेत्युपक्रम्य प्रकरण-सप्तकेन शक्तिरस्तीति समर्थ्य प्रसङ्गागतं तमसो द्रव्यत्वं सुवर्णस्य पार्थिवत्वं च प्रकरणपञ्चकेन समर्थ्येदानीमन्वये शक्तिरित्यर्थं प्रकरण-सप्तकेन साधयितुकाम आक्षिपति—नन्विति। शक्तिरिति। पदाना-मिति शेषः। पौनरुक्त्येति। गामानयेत्यादौ गोपदेन बोधितस्य गवानयनान्व[3]यस्यानयपदेनापि बोधनात् पुनरुक्तत्वम्। आदिपदे-नोत्तरभङ्गे शङ्किष्यमाणदशविधबाधकानां ग्रहः। सामान्यान्वये शक्तिर्न तु विशेष्यान्वय इति सिद्धान्त्याभिमतत्वात्तद्दृष्टान्तेनालभ्यत्वाच्छक्ति-

[1] न्याय्य–ज. न्धाय–क. [2] वादः–नं. वत्ववादः–ङ. [3] न्वितस्या–ङ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पदार्थेषु शक्तैरेव पदैः पदार्थस्मृत्यवान्तर-व्यापारैराकाङ्क्षादिसहकारिवशादन्वयविशेषवद-न्वयसामान्यस्यापि लाभेन तत्र शक्तिकल्पना-योगाच्च। अत एव न प्रमाणान्तरापत्तिः। शब्द-स्यैवान्वये प्रमाणत्वात्। एतेन [1]तदन्वयबोध-जनकं [2]तत्राशक्तं चेति व्या[3]हतमिति निरस्तम्। न ह्यत्राशक्तशब्देनाजनकत्वं विवक्षितम्। किं-त्वभिधारूपवृत्तिराहित्य[4]मात्रमिति चेत्॥

उच्यते। न तावदन्वये शक्तिरेव नास्तीति युक्तम्। प्राथमिकव्युत्पत्तिहेतुनान्वितविषयके[5]ण

---

कल्पनमयुक्तं चेति भावेन पदं करणं पदार्थस्मरणं व्यापारः आका-ङ्क्षादिसहकारिवशात् स्मारितार्थान्वयानुभवः फलं इति मण्युक्तमाह— पदार्थेष्विति। नन्वन्यत्र शक्तानां कथमशक्यान्वयबोधकत्वमित्यत उक्तं पदार्थे[6]त्यादि। बहुव्रीहिः। अन्वयविशेषवदन्वयविशेषस्यैव। लाभेन बोधसम्भवेत्यर्थः। तत्र सामान्यान्वये। अन्यथाऽन्वयविशेषेऽपि शक्तिकल्पनाप्रसङ्ग [7]इति भावः॥

नन्वन्वयस्य पदशक्त्यविषयत्वे तद्बोधकं शब्दादन्यत्प्रमाणं स्यादित्यत आह—अत एवेति। पदार्थमात्रशक्तपदप्रमाणकत्वादेवा-न्वयस्येत्यर्थः। तदेवाह—शब्दस्यैवेति। दोषोस्तीत्येतन्निरसिष्यत इति भावेनाह—न तावदिति। प्राथमिकेति। प्रथमं तावद्वृद्धव्यव-

---

[1] यद–सु. रा. नं. पक्षमन्व–ग. [2] तत्तत्रा–सु. रा. [3] घात इ–नं. [4] मात्रमिति नास्ति–सु. रा. ग. [5] कव्य–सु. रा. [6] ति बहुव्रीहिः–नं [7] 'इति भाव इति नास्ति–ड.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यवहारेण सामान्यतो योग्येतरान्वित एव शक्ति-
ग्रहात्। अनन्तरभाविनश्च व्याकरणोपमानकोशाप्त-
वाक्यवाक्यशेषविवरणप्रसिद्धपदसमभिव्याहाररूप[1]

हार एव शक्तिग्रहहेतुः। स च व्यवहारो न पदार्थमात्रे, किंत्वन्वित एवेति तेनान्वित एव शक्तिग्रहादित्यर्थः। आनयनाद्यन्वयानां व्यभिचारात्कथमन्वये शक्तिरित्यत उक्तं सामान्यतो योग्येतरान्वित इति। आनयनबन्धनादिविशेषमपहाय क्रियान्वितं कारकं कारकान्विता क्रियेत्येवं रूपेण गवादिपदानां शक्तिग्रह इत्यर्थः। व्याकरणेति। 'श्रोत्रियं श्छन्दोऽधीत' इत्यादिसूत्रैः श्रोत्रियादिशब्दानां छन्दोध्ययनकर्त्राद्यर्थे शक्तिग्राहकं व्याकरणम् अतिदेशवाक्यार्थस्मरणसहकृत [2]गोसादृश्यादिविशिष्टपिण्डज्ञान [3]मुपमानं गवयादिपदशक्तिग्राहकम्। कोशोऽमरादिनिघण्टुः प्रसिद्धः। इयं गौरित्याद्याप्तवाक्यं गवादिपदशक्तिग्राहकम्॥

'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्॥'

इति वाक्यशेषः स्वर्गपदस्य सु[4]खविशेषे शक्तिग्राहकः। तथा यवमयश्चरुर्भवतीत्यादौ यवशब्दस्य—

'वसन्ते सर्वसस्यानां जायते पत्र[5]शातनम्।
मोदमानाश्च दृश्यन्ते यवाः कणिशशालिनः॥'

इति वाक्यशेषो दीर्घशूके शक्तिग्राहकः। 'उग्रं वचोऽपावधीं स्वाहेति'

[1] पाव्यु—सु. रा. नं. ग. ज. क. [2] गोपदं नास्ति—उ. [3] रूपमित्यधिकं—उ. [4] दुःख—उ. [5] त्रिशा—उ. नं.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्युत्पत्तिहेतवस्तदनुसारितया क्लृप्तेऽन्वित एव शक्तिग्राहकाः। अन्यथाकल्पने गौरवात्। तदुक्तं भगवत्पादैः—

'शक्तिश्चैवान्विते स्वार्थे
शब्दानामनुभूयते।
अतोऽन्विताभिधायित्वं
गौरवं कल्पनेऽन्यथे' ति ॥

श्रुतस्योग्रं वच इदि शब्दस्या 'शनाया पिपासे ह वा उग्रं वच' इत्यादिविवरणमशनापिपासयोः शक्तिग्राहकम्। 'सहकारतरौ मधुरं रौति पिक' इत्यादौ पिकपदस्य कोकिले सहकारादिप्रसिद्धपदसमाभिव्याहारः शक्तिग्राहकः ॥

यद्यप्यसाधारणधर्मरूपलक्षणज्ञानमपि शक्तिग्राहकम्। तथापि तस्यापि तस्य धर्ममात्रोपमानरूपत्वादुपमानपदेनैव तस्य ग्रहणं प्राप्तमिति न पृथग्लक्षणस्य ग्रहः ॥

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥'

इति प्राचीनोक्तिरिति भावः। व्युत्पत्तीति। वाच्यवाचकभावसम्बन्धज्ञानहेतव इत्यर्थः। अन्यथेति। क्लृप्तत्यागेनाक्लृप्तस्य पदार्थमात्रशक्तिग्राहकत्व[1]स्य कल्पन इत्यर्थः। तदुक्तमिति। जिज्ञासाधिकरणानुव्याख्याने इत्यर्थः। शक्तिश्चेति। उपलक्षणमेतत्। तच्च नाभिहितान्वय इत्यादि शब्दा[2]अन्वितवाचकाः इत्यन्तः भक्तिपादीयानु-

[1] त्वक-नं. उ. [2] ह्यन्वि-नं-ह्यन्वि-उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किं चेश्वरसङ्केतरूपायाः[1] स्वाभाविकसम्बन्ध-
रूपाया वा शक्तेरभावे वृत्त्यन्तराविषय[2]स्यान्वयस्य

व्याख्यानसुधयोरुक्तम् । तद्विवरणमग्रे यथायोगं ध्येयम् । व्यवहारा-
दिना शब्दशक्तिमवधारयता पुरुषेण शब्दानां शक्तिश्चान्वित एव
स्वार्थेऽनुभूयते । अतोऽनुभवबलाच्छब्दानामन्वितस्वार्थाभिधायित्वम-
भ्युपेयम् । शक्तिग्रहानुसारित्वादभिधानस्यानुभवानादरेण स्वार्थमात्र-
शक्तिकल्पने गौरवमित्यर्थः । न केवलं पदानां किंतु प्रकृतिप्रत्ययानाम-
पीति द्योतनाय शब्दानामित्युक्तिः ॥

नन्वन्यलभ्येप्यन्वयशक्तिकल्पन एव गौरवमित्यतो 'न चाशं-
क्याभिधायित्व' मित्यनुव्याख्यानांशस्य शब्दानामशक्यान्वयबोधजनकत्वं
न चेत्यर्थमुपेत्याह—किञ्चेत्यादिना । परमतेनाह—ईश्वरसङ्केतेति ।
स्वमतेनाह—स्वाभाविकेति । शक्तेरभाव इति । वाक्यार्थरूपा-
न्वय इति योज्यम् । वृत्तिमात्रमन्वये नास्तीति म[3]तेनोक्तं वृत्त्यन्त-
राविषयस्येति । लक्षणाऽवृत्तिरन्वयेऽस्तीति पक्षस्याग्रेऽन्वय[4]लक्ष्यत्वभङ्गे
निरसिष्यमाणत्वाच्च । तथा च ना[5]न्यलभ्यत्वमिति भावः ॥

यद्वाऽन्विते शक्तिरित्यत्र प्राथमिकव्युत्पत्तिरूपमेकं मानमुक्त्वाऽ-
न्वयः शब्दशक्तिविषयः वृत्त्यन्तराविषयत्वे सति शाब्दधीविषयत्वात्
शक्तिविषयपदार्थवत् इत्यनुमानं च मानमुपेत्य तस्याप्रयोजकत्वनिरा-
साय विपक्षे हेतूच्छित्तिरूपबाधकतर्कमाह—किं चेश्वरेत्यादिना ।
अर्थस्तु प्राग्वत् । एतेन पदं करणं, पदार्थस्मरणं व्यापारः, अन्वयानु-
भवः फलं, इति मण्युक्तं निरस्तं ध्येयम् । वृत्तेरभावे पदजन्यानुभव[6]-

[1] या वा–सु. रा. [2] स्य शाब्द–सु. रा. [3] तोक्तं–उ. [4] स्य ल–नं
[5] नानन्य–उ. [6] वाविषयत्वायोगा–नं.



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शाब्दधीविषयत्वं न स्यात् ॥

किं च शब्दस्यापि करणत्वेन चक्षुरादेरिव विषयप्रत्यासन्नस्यैव क्रियाजनकत्वेन पदार्थेनेवान्वयेनापि शक्तिरूपप्रत्यासत्ति[1]रङ्गीकार्या । अन्यथाकल्पने गौरवात् ॥

न च चक्षुषो रूपेण संयुक्तसमवाय इव शब्दस्या[2]न्वयेन शक्यपदार्थसंबन्ध एव प्रत्यासत्ति-

---

विषयत्वादिति ॥

शब्दोऽर्थप्रत्यासन्नो भवितुमर्हति बोधरूपक्रियाजनकत्वात्, जनकत्वं च करणत्वाच्चक्षुरादिवदिति सामान्यतोऽ[3]र्थेन शब्दस्य संबन्धस्य सिद्धावन्यस्यायोगाच्छक्तिरेव प्रत्यासत्तिः सामान्यपरिशेषाभ्यां सिध्यतीति भावेन—

"प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य"

[4]चेत्यत्र "स्वत एव स्वाभाविकसंबन्धेनैव" इत्यादिसुधोक्तदिशाऽऽह — किं च शब्दस्येति । हेतोरप्रयोजकत्वं निराह— अन्यथेति । संबद्धस्यैव क्रियाजनकत्वमिति क्लृप्तत्याग इत्यर्थः । यद्वा शब्दार्थयोः संयोगसमवायतादात्म्यरूप संबन्धान्तरकल्पन इत्यर्थः । द्रव्यत्वायुतसिद्धत्वादेरपि शब्दार्थयोरङ्गीकारप्रसङ्गाद्गौरवमिति भावः । क्रियाजनकत्वहेतो[5]रशक्यान्वयस्य स्वरूपसतो नियामकत्वादित्यादिमण्युक्तान्यथोपपत्तिमाशङ्क्य निराह— न चेत्यादिना । शक्येति । शक्तिविषये-

---

[1] रिति वाच्यम्-इत्यस्ति मध्ये लोपः-ग. रिति वाच्यम्—च. क.
[2] 'अपि' इत्यधिकम्—सु रा. [3] तोन्वयेन—नं. [4] स्येत्यत्र—नं. उ. [5] तोः शक्या-उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रिति वाच्यम् । साक्षात्संवन्धसंभवेऽपि[1] परम्परया सवन्धाश्रयणे गौरवात् । अन्यथा चक्षुःसंयुक्तकपालसमवेते घटे संयोगः पत्यासत्तिर्न स्यात् ॥

किंचैवं शक्य[2]घटसम्बन्धिगुरुत्वादेरपि घटपदात्प्रतीतिप्रसङ्गः । न च गुरुत्वादिकं प्रत्यक्षस्येव शब्दस्याप्ययोग्यम् । नापि शक्यसंवन्ध्यन्वयत्वं प्रत्यासत्तिः । अन्वयत्वविशेषणस्यान्वयाशक्यत्वनिश्चयोत्तरकालं कल्प्यत्वेन[3] तत्कल्पने गौरवात् । शक्यसंवन्धेन[4] च प्रतीतावन्वयस्य लाक्षणिकत्वप्रसङ्गाच्च । व्यक्तेरपि शक्यजातिसं-

---

त्यर्थः । पदार्थसंबन्धः पदार्थकर्मत्वादिरित्यर्थः । अन्यथेति । परम्परासंबन्धेन साक्षात्संबन्धापलाप इत्यर्थः । संयोग इति । चक्षुष इति शेषः । तत्रापि घटोपलम्भरूपकार्यस्यैव परम्परासंबन्धेनोपपत्तेः सुवचत्वादिति भावः । शक्यसंबन्धस्य शाब्दबोधहेतुत्वेऽतिप्रसङ्गं चाह—किंचैवमिति । अयोग्यमिति । तथा[5]त्वे शब्दादतीन्द्रियधीर्नस्यादिति भावः । शक्यसंबन्ध्यन्वयत्वमिति । तथा च गुरुत्वे प्रागुक्तदोषो नेति भावः । न चक्षुष इत्यादिनोक्तार्थे दोषान्तर[6]माह—शक्येति । व्यक्तेरपीति च । लाक्षणिकत्वेति । ग[7]ज्ञापदशक्यप्रवाहसंबन्धेन

---

[1] अपि पदं नास्ति—सु. रा.　[2] घटपदं नास्ति—सु. रा.　[3] त्वेन गौर—सु. रा. तत्पदं नास्ति—ग क.　[4] न्धात्प्रती—सु. रा.　[5] थासति—नं.
[6] रं चाह—नं.　[7] ज्ञापदात्प्रती—नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बन्धेनैव प्रतीत्युपपत्त्या जातिविशिष्टव्यक्तावपि शक्त्यसिद्धिप्रसङ्गाच्च ॥

एतेन प्रथमं गृहीताऽप्य[1]न्वये शक्तिः कार्यान्विते शक्तिरिव[2] पश्चाद्बाधकात्त्यज्यताम् । बाधकं चात्रान्यलभ्यत्वमेवेति निरस्तम् । अन्यलभ्यत्वेन्वयस्य शाब्दत्वं न स्यादित्युक्तत्वात् ॥

न च वृत्त्यविषयस्याप्यन्वयस्याकाङ्क्षादिसहकारिवशाच्छब्दजन्यधीविषय[3]त्वेन शाब्दत्वमिति वाच्यम् । इन्द्रियासन्निकृष्टस्यापि वह्नेर्धूमज्ञानादिसहकारिवशादिन्द्रियजन्यधीविषयत्वेनैन्द्रियकत्वापातात् । तत्रेन्द्रियसन्निकर्ष एवैन्द्रियकत्वमर्यादाहेतुरित्यसन्निकृष्टो वह्निर्नैन्द्रियक इति चेत्तर्हि शब्दवृत्तिरेव शाब्दत्वमर्यादाहेतुरितिवृत्त्यविषयोन्वयो न शाब्द इति समम् ॥

---

पदात्प्रतीतिरस्त्येवेति भावः । कार्यान्विते शक्तिरित्येत्परमतेन ध्येयम् । स्वमते च सिद्धार्थ एव प्रथमं व्युत्पत्तेरुपगमात् । अन्यलभ्यत्वमेवेति । पदार्थेष्वित्यादिना प्रागुक्तादिशेति भावः । उक्तत्वादिति । किं चेश्वरेत्यादिनेत्यर्थः । प्रागुक्तमयुक्तमित्याशङ्क्य प्रतिवन्द्या[4]निराह—न च वृत्तीति । परमुखेन समाधिं वाचयति—तत्रेन्द्रियेति ॥

'गौरवं कल्पनेऽन्यथे' त्येतदन्वयमुखेनानुवदन्मूलारूढमेवैतदिति

---

[1] न्विते–नं. [2] क्तिरिति बाध–ग. [3] यत्वमिति वाच्यम्–ग. [4] न्याह–नं..

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्यथाकल्पने गौरवात् ॥

किं चैवं जातावेव शक्तिः व्यक्तेस्त्वाकाङ्क्षा-दिवशाद्धीरिति स्यात् ॥

किं च घटमित्यनेन क्रियासामान्यान्वितस्वार्था-नभिधाने सामान्यज्ञानसाध्या क्रियाविशेष[1]जि-ज्ञासा न स्यात् ॥

न च जम्बीरादौ रूपविशेषाक्षिप्ते[2] रससामा-न्ये[3] रसविशेषस्येव घट[4]निष्ठकर्मत्वाक्षिप्ते क्रिया-सामान्ये तद्विशेष[5]स्य जिज्ञासा युक्तेति [6]वाच्यम् । व्यभिचारादर्शनसहचारदर्शना[7]दिरूपभिन्नसामग्री-

---

दर्शयति—अन्यथा कल्पन इति । मर्यादामुल्लङ्घ्य कल्पन इत्यर्थः । अन्वयस्यान्यलभ्यत्वे व्यक्तेरपि तथात्वापत्त्या शब्दशक्यता न स्यादि-त्याह—किं चेति । विवरिष्यते चैतत् षट्का[8]न्तर्गतव्यक्तिप्रतिबन्दी न युक्तेत्यादिना । क्रियाविशेषजिज्ञासान्यथाऽनुपपत्तिं चान्विते शक्तौ मान[9]मित्याह—किंचेति । क्रियाविशेषेति । दर्शनस्पर्शना[10]दिक्रिया-विशेषेत्यर्थः । सामान्यान्वयस्य शब्दशक्त्यविषयत्वेऽपि तज्ज्ञानसंभ-वाद्विशेषजिज्ञासा युक्तेति भावेन दृष्टफलादौ रसविशेष[11]जिज्ञासावदि-त्यादिना मण्युक्तमाशङ्क्याह—न चेत्यादिना । तेजोव्यावृत्ततादिरूपस्य रसव्याप्तत्वाद्रूपविशेषाक्षिप्तेत्युक्तम् ॥

---

[1] षेजि–सु रा. नं. ज. क.　[2] प्तर–सु. रा.　[3] न्येन–सु. रा.　[4] टादि–सु. रा.　[5] षजि–ज. क.　[6] वाच्यमिंति नास्ति–सु. रा.　[7] आदि-पदं नास्ति–सु. रा.　[8] ष्ठ–उ. नं.　[9] न माह–नं.　[10] आदिपदं न–उ. नं.　[11] षे. जि–नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेद्याया व्याप्तेर्घटमिति पदोच्चारणकाले उपस्थिति-
नियमाभावेनाक्षेपासम्भवात् ॥

अननुभूतस्या[1]प्युपस्थितिनियमस्य कल्पने गौर-
वात् ॥

किं च त्वयाऽपि घटमिति द्वितीया[2]विभक्त्य-
र्थकर्मत्वान्वितस्यैव प्रातिपदिकार्थस्य क्रियान्वये
प्रतियोगिता खण्डवाक्यार्थभूतस्यान्वितस्य च
महावाक्या[3]र्थभूतान्वये प्रतियोगिता वाच्या ।
वृत्त्यविषयश्च नान्वयप्रतियोगी[4] कर्मत्वान्विते प्रा-

---

एतदपि मूलारूढं दर्शयति—अन[5]नुभूतस्यापीति । एकत्रा-
न्विते शक्तेः क्लृप्तत्वात्सर्वत्रापि तथेत्याह—किं चेति । द्वितीयेति ।
'कर्माणि द्वितीयेति' पाणिन्युक्तेर्द्वितायाविभक्त्यर्थकर्मत्वेत्युक्तम् । प्रति-
योगितेति । घटमानयेत्यादाविति योज्यम् । वाच्येत्यन्वयः । अन्य-
थाऽऽनयनादिक्रियाऽनन्वयापातादिति भावः । क्रियान्वय इति ।
पदार्थान्तरेणान्वितपदार्थस्यैव वाक्यार्थत्वादिति भावः । [6]खण्डेति ।
पर्वतोऽग्निमानित्यादिहेत्वादिरूपावान्तरवाक्यार्थभूतस्यान्योन्यपदार्थेनान्वि-
तस्येत्यर्थः । [7]महावाक्यार्थेति । वह्न्यादिनिरूपितव्याप्तिपक्षधर्मतयो-
र्लिङ्गनिष्ठतारूपमहावाक्यार्थभूतान्वय इत्यर्थः । तावता शब्दवृत्तिविषय-
त्वमन्व[8]यस्य कुतः, तथात्वे वा शक्तिविषयत्वं कुत इत्यत आह—
वृत्तीति । कुमार्यादिप्रदर्शितकलमबीजादेरन्व[9]याप्रतियोगित्वादिति

---

[1] अपिपदं नास्ति-सु. रा. [2] यवि-सु. रा. [3] भूत इत्यारभ्य एत-त्पर्यन्तं नास्ति-सु. रा. [4] गि-सु. रा. [5] अनुभूत-नं. [6] क्रियान्वय इति इत्यारभ्य नास्ति-उ. नं. [7] पदार्थान्तरेणेत्यादि, दिति भावः इत्यन्तं अत्रास्ति-नं. भाव इति नास्ति-उ. [8] न्यस्य-उ. नं. [9] य-उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तिपदिकार्थे खण्डवाक्यार्थरूपेऽन्विते च न लक्षणे-
त्यन्विते शक्तिः क्लृप्तेत्यन्यत्रा[1]न्विते शक्तिसिद्धिः।
अन्यथा कल्पने गौरवात् ॥

न च खण्डवाक्यार्थस्य न महावाक्यार्थेऽन्वयः, किं तु महावाक्यस्थसर्वपदगोचरसमूहालम्बनस्मृति-रूपं करणं शुद्धतावत्पदार्थगोचरसमूहालम्बनस्मृति-रूपावान्तरव्यापारसहितमे[2]कदैव महावाक्यस्थान् सर्वान् पदार्थानन्विततया बोधयतीति वाच्यम्। अनुभवविरुद्धस्या[3]स्य प्रकारस्य कल्पने गौरवात्। तथात्वे हि दिनेदिने श्रुतेन शास्त्ररूपमहावाक्यैक-देशरूपखण्डवाक्येन तत्तदर्थबोधोदयो न स्यात्। कुळकादावित्युवाचेत्यादौ खण्डवाक्यार्थकर्म[4]क्रि-

भावः। न लक्षणेति। तत्पक्षस्याग्रे निरसिष्यमाणत्वादिति भावः। अन्यत्रेति। क्रियाकारकभावादिस्थळेऽपीत्यर्थः। अन्वये शक्तिं विनैव महावाक्यार्थबोधप्रकारमाशङ्क्य निराह—न चेति। शुद्धेति। अन्वय[5]-विनाकृतेत्यर्थः। दिने दिन इति। एकस्मिन्नेव दिने सर्वशास्त्रश्रवणा-योगेन प्रत्यहं यावदवधारणं[6] शक्यं तावत एव शिष्यैः श्रूयमाणत्वात्ताव-न्मात्रश्रवणस्यार्थाबोधकत्वे शास्त्रमेव व्यर्थमापद्येतेति भावः। इत्युवाचे-त्यादाविति। माघे चतुर्थे सर्गे—'उत्कंधरं दारुक इत्युवाचे' त्यत्र-त्यस्य 'इत्युवाचे' त्यस्य आसर्गसमाप्ति प्रतिश्लोकमन्वयेन तत्तच्छ्लोकार्थ-

[1]अपि इत्यधिकम्—सु. रा. नं. ग. [2]मेकमेक—सु. रा. [3]प्यस्य—सु. रा. [4]क शाब्दबो—सु. रा. कक्रिया—नं. ग. ज. [5]यं वि—उ. नं. [6]णश—उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

याऽन्वयबोधश्च न स्यात् । प्रतिज्ञावाक्येन विशिष्ट-स्वार्थावोधने कुत इत्याकाङ्क्षाऽनुदयेन हेतुवाक्य-स्यान्वयश्च [1]न स्यात् ॥

तस्मादन्विते प्राथमिकी व्युत्पत्तिः, अन्वयस्या-नभिधाने तस्य शाब्दत्वानुपपत्तिः, अन्वयांश शक्त्यभावेऽन्वयस्य शब्देन सह प्रत्यासत्त्यनुपपत्तिः, व्यक्तिप्रतिवन्दी, अन्वयसामान्ये शक्त्यभावे विशेषे जिज्ञासाऽनुपपत्तिः, अन्यत्रान्विते शक्तेः क्लृप्तत्व-मिति युक्तिषट्केनान्विताभिधानं सिद्धम् ॥

अन्विताभिधाने साधनषट्कम् ॥ १६ ॥

---

विषयकक्रियान्वयबोधश्च न स्यादित्यर्थः । [2]विशिष्टेति । धर्मविशिष्ट। धर्मिरूपस्वार्थेत्यर्थः ॥

प्रागुक्तं सर्वं बुद्ध्यारोहाय संग्रहेणानुवदन्नुपसंहरति—तस्मादिति । तस्यार्थोऽन्वित इत्यादिना युक्तिषट्केनेत्यन्तेन[3]विवृतः । प्राथमिक इत्या-दिनोक्तार्थोक्तिरन्वित इत्यादि । किं चेश्वरेत्यादिनोक्तार्थोक्तिः अन्वय-स्येत्यादि । किं च शब्दस्येत्यादिनोक्तार्थोक्तिः अन्वयांश इत्यादि । किं चैवं जाताविवेत्यादिनोक्तार्थोक्तिः व्यक्तीति । किं च घटमित्यादिनो-क्तार्थोक्तिरन्वयेति । किं च त्वयाऽपीत्यादिनोक्तार्थोक्तिरन्यत्रेति । अन्वि-ताभिधानं पदानामिति शेषः ॥

अन्विताभिधाने साधक[4]षट्कम् ॥ १६ ॥

---

[1] न इति नास्ति—सु. रा [2] माधे इत्यारभ्य नास्ति—नं. उ. [3] विवृत इति नास्ति—नं. उ. [4] न—उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ अन्विताभिधाने उदयनाद्युक्तबाधक-दशकोद्धारः ॥ १७ ॥

———

नन्वन्विताभिधाने घटमानयतीत्यादौ कारकपदे[1]नान्वयप्रतियोगितया क्रियायाः क्रियापदेनापि तत्प्रतियोगितया कारकस्याभिधानात्पर्यायता स्यादिति चेन्न[2]। कारकपदे क्रियान्वित-कारकत्वस्य क्रियापदे च[3] कारकान्वितक्रियात्वस्य प्रवृत्तिनिमित्तस्य भेदेन पुत्रपितृशब्दयो-

## अथ अन्विताभिधाने उदयनाद्युक्तबाधकदशकोद्धारः ॥ १७ ॥

———

एवं साधकान्युक्त्वाऽन्विताभिधाने बाधका[4]न्यप्याशङ्क्य निराह—नन्वित्यादिना। विशिष्यान्विताभिधानं भ्रा[5]न्त्वाह—कारकपदेनापीति। पर्यायता क्रियाकारकपदयोरिति शेषः। स्यादयं दोषो[6]यदि घटः करीर इत्यादाविव पदप्रवृत्तिनिमित्तैक्यं[7] भवेत्। न चैवमस्तीत्याह—कारकपद इति। पुत्रेति। पुत्रादिशब्दस्य संबन्धिशब्दत्वेन पित्राद्युपस्थापकत्वेऽपि पुत्रत्वादिनिमित्तभेदाद्यथा न पर्यायत्वं तथेत्यर्थः॥

ननु क्रियात्वकारकत्वादेः परस्पराविनाभावात्तद्वाचिनोरपि पर्या-

1 नाप्यन्व–रा. सु. ग. 2 'न' इति नास्ति–सु रा. नं. 3 'च' इति नास्ति–सु. रा.. 4 न्याश–नं. 5 न्त्या–नं. उ. धानमाह–ए. 6 यदि इति नास्ति–नं. उ. ए. 7 क्यैभ–ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रिवापर्यायत्वात् । न हि प्रवृत्तिनिमित्तयोर्भेदेऽपि तयोस्सम[1]नियततामात्रेण पर्यायत्वम् ॥

नन्वेवमपि पदान्तरवैयर्थ्यम् । एकेनैवेतरान्वितस्वार्थोपस्थापनाद्विशेषणविशेष्यविपरिवृत्तिमात्रेणावैयर्थ्ये दण्डी पुरुषः पुरुषस्य दण्ड इत्यत्राप्येकस्यवैयर्थ्यं न स्यादिति चेन्न[2] । मीमांसकमते धवखदिराविति द्वन्द्वे धवशब्दलक्षितसाहित्यनिरूपकद्वितीयस्य[3]विशेषसमर्पणेन खदिरशब्दस्येवेहापि

---

यत्वमित्यह आह—न हीति । पुत्रादिशब्देऽपि तथात्वापत्तेरिति भावः । एवमपीति । अपर्यायत्वेऽपीत्यर्थः । कारकान्विता[4]क्रिया क्रियान्वितं कारकमिति क्रियाकारकयो[5]र्भानार्थं पदद्वयमर्थवदित्यत आह—विशेषणेति । विपरिवृत्तिर्व्यत्यासः । एकस्येति । वा[6]क्यस्येत्यर्थः । विशेषान्वयप्रतिपत्त्य[7]ङ्गतयोपयोगाच्चेति दृष्टान्तोक्तिपूर्वक[8]माह—मीमांसकमत इति । तन्मते हि धवखदिराविति द्वन्द्वे धवादा[9]वेवैककस्मिन्विभक्त्यर्थद्वित्वस्यान[10]न्वयेन सहितयोर्द्वयोरेव तदन्वयेन द्वित्वान्वयार्थं धवपदमेव सहितो[11]भयलक्षकमित्यभ्युपगमात्तदा खदिरपदावैयर्थ्याय धवपदलक्षितधवसाहित्याश्रयसामान्यस्य खदिरत्वरूपविशेषसमर्पकत्वस्वीका-

---

[1] यममात्रे—सु. रा. ग. क. [2] न इतिनास्ति—सु. रा. [3] य वि—सु. रा. यावि—क. [4] तमानयनमानयनान्वितकारकामिति. इत्यस्ति—नं. उ. [5] त्तिर्नानार्थपद—नं. उ. [6] तस्येत्य—नं. [7] र्थं पदान्तरसमभिव्याहारोपयोग इति दृष्टा—प. [8] र्वमा—नं. [9] एवकारो नास्ति—नं उ. प. [10]. स्यानन्वये सहितयो—नं. प. ये सति तयो—उ. [11] तोपल—नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पदापे[1]क्ष्यत[2]त्तद्विशेषोपस्थापनेन सार्थक्यात्। प्रयो-
जनान्तरेण सार्थकेऽपि[3] पदे सामग्रीव[4]शागतार्थिक-
पुनरुक्तेरदोषत्वात् ॥

न चैवमपि क्रियापदेनानयनरूपे क्रियाविशे-
षेऽभिहिते घटपदेन तदन्वितघटाभिधानं, एवं
घटपदेन घटरूपे कारकविशेषेऽभिहिते क्रियापदेन
तदन्वितक्रियाभिधानमित्यन्योन्याश्रय इति वाच्य-

---

रादित्यस्याग्रे द्वन्द्वसमासप्रस्तावे वक्ष्यमाणत्वादिति भावः। सुधोक्तमाह—
तत्तद्विशेषेति ॥

नन्वेवमपि पुनरुक्तिरूपबाधकमपरिहार्यमित्यतः "आर्थिकी तु
पुनरुक्तिरदूषणम्। यश्चार्थादर्थो न स चोदनार्थे" इति न्यायादिति
सुधोक्तमेव व्यञ्जयन्नाह—प्रयोजनेति। [5]समभिव्याहाररूपसामग्री-
वशादित्यर्थः। बाधकान्तरमाशङ्कते—न चैवमिति। अन्योन्येति।
यावत्पूर्वपदं स्वार्थं नाभिधत्ते तावदुत्तरपदस्य पूर्वपदार्थान्वितस्वार्थाभि-
धानं नास्ति। यावच्चोत्तरपदं स्वार्थं नाभिधत्ते तावत्पूर्वपदस्योत्तरपदार्था-
न्वितस्वार्थप्रतिपादनं न भवतीति स्वस्वार्थाभिधानेऽन्योन्या[6]भिधानापे-
क्षाऽवश्यंभावेनान्योन्याश्रयान्न किमपि पदं कमप्यर्थमभिदध्यादित्यर्थः।
"वयं तु ब्रूमः स्यादिदं विशेषान्विताभिधानवादिनां, दूषण"मित्यादिना-

---

[1] न्तरोपि तत्त-सु. रा. न्तरे च-क. [2] मीमांसकेत्यारभ्य नास्ति-नं.
ज. [3] के च-सु. रा. नं. क्येपि-क. [4] शादार्थि-सु. रा. [5] सामग्रीति
इत्यधिकम्-ए. [6] न्यापे-नं. न्यार्थाभिधाना-उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

म् । विशेषान्वितभिधानमते[1]ऽस्यान्योन्याश्रयस्य[2] संभवेऽपि सामान्य[3]तोऽन्वितभिधानमिति मन्मते पदानां प्रत्येकमेव योग्येतरसामान्यान्वितस्वार्थाभिधाने सामर्थ्येन पदा[4]न्तरनिरपेक्षतयाऽन्योन्याश्रयाऽभावात् ॥

अन्योन्याश्रयार्थमननुभूय [5]मानविशेषान्विताभिधानकल्पने गौरवात् ॥

न चैवमपि कारकपदजन्या क्रियासामान्यान्वितरूपविशिष्टधीः क्रियासामान्यान्वयरूपविशेषणधीसाध्या इह [6]तद्धीहेतुरन्यो नास्तीति क्रिया-

सुधोक्त[7]माह—विशेषेति । [8]योग्यं यदितरत्सामान्यं तदन्वितेत्यर्थः । पदान्तरेति । तस्य विशेषोपस्थितावेवोपयोगोक्तेरिति भावः ॥

'गौरवं कल्पनेऽन्यथा' इति प्रागुक्तमूलारूढमेतदिति दर्शयितुमाह—अन्योन्येति । अन्योन्याश्रयमस्मात्प्रतिवक्तुमभिहितान्वयवादिना नैयायिकेन विशेषान्विताभिधानकल्पन इत्यर्थः । गौरवादित्युपलक्षणम् । छलोत्तरत्वापातादित्यपि ध्येयम् । सामान्यान्वितस्वार्थाभिधानपक्षेऽप्युदयनाद्युक्तमन्योन्याश्रयमाशङ्कते—न चैवमपीति । कारकपदजन्येति धीरित्यस्य विशेषणम् । विशिष्टेति । अन्वयविशेषणक[9]कारकविशेष्य[10]कधीरित्यर्थः । ततः किमित्यत आह—इह चेति । क्रियाकारकादिप्रयोगस्थळ इत्यर्थः । तद्धीति । विशेषणधीहेतुरित्यर्थः ।

[1] अस्येति नास्ति -सु. रा. ग. [2] यस—सु. रा. [3] न्यान्विता—सु. रा. नं. ग. [4] दार्थान्त—रा. [5] य विशे—सु. रा. [6] च इत्यधिकम्—ग. [7] क्तमेवा—ए. [8] योग्येतरसामान्येति—इत्यधिकम्—ए. [9] ण कार—नं. [10] ष्यधी—नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पदेन[1] तद्धीः, एवं क्रियापदजन्या कारकसामान्या-
न्वितरूपविशिष्टधीरपि कारकसामान्यान्वयरूप-
विशेषणधीसाध्या तद्धीश्च कारकपदैर्नैवेति पुनर-
प्यन्योन्याश्रय इति वाच्यम्। मन्मते[2] प्रत्यक्षाया-
अपि विशिष्टधियो विशेषणज्ञानासाध्यत्वात्। त्व-
न्मतेऽपि ॥

त्रिशुक्लः कृशवृत्तिश्च घृणालुस्सकलेन्द्रियः ॥
वियुक्तो योनिदोषेभ्यो[3] ब्राह्मणः पात्रमुच्यते ॥

इत्यादिवचनैर्विशिष्टाभिधायक[4]पात्रश्रोत्रियस्व-
र्गकारणादिपदैरिव जात्याकृतिविशिष्टाभिधायि-

---

अन्योन्याश्रयेति। क्रियाकारकपदयोः स्वस्वार्थबोधनेऽन्योन्यार्थाभि-
धानसापेक्षत्वादन्योन्याश्रय इत्यर्थः। प्रत्यक्षाया अपीति। किमुत
[5]शाब्दादिस्थळ इत्यपेरर्थः। यथा चैतत्तथोक्तं निर्विकल्पकभङ्ग इति
भावः। त्रिशुक्ल इति। याज[6]नाध्यापनविशिष्टप्रतिग्रहरूपशुक्लत्रयवा-
नित्यर्थः। सकलेन्द्रिय इति। न त्वन्धपङ्ग्वादिरित्यर्थः। योनिदोषभ्यो
विमुक्त इत्यनेन बीजक्षेत्रशुद्धिरुच्यते। इत्यादीत्यादिपदेन "श्रोत्रियं
छन्दोऽधी(य)त' इति,

'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्'[7] ॥

इति, अनन्यथासिद्धनियतपूर्ववृत्तिकारणमित्यादिवचनग्रहः। विशि-
ष्टेति। त्रिशुक्लत्वादिविशिष्टाभिधायि पात्रपदं, छन्दोध्ययनकर्तृत्वविशिष्टा-

---

1 एवेत्यधिकम्–ग. 2 अपि इत्यधिकम्–नं 3 भ्यां–नं. 4 यिपा–नं. ग. क. यिभिः–ज. 5 श–नं. 6 काध्ययनवि–नं. उ. 7 न चेत्यारभ्यनास्ति–नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

घटादिपदैरिव च विशेषणोपस्थितिं विनै कारकादिपदैः क्रियासामान्याद्यन्विताभिधानानुभवात् ॥

अनुभवविरुद्धस्य[1] कल्पने गौरवात् । [2] अन्वयविशेषसिद्धिस्तु पदान्तरसमभिव्याहारात् ॥

नन्वेवं चेत्किमनया सामान्यान्विते शक्त्या, स्वार्थमात्रे[3] शक्तैः पदैराकाङ्क्षादिमत्पदान्तरसमभिव्याहारादेव विशेषान्वयसिद्धेरिति चेन्न[4] ।

---

भिधायि श्रोत्रियपदं, दुःखासंभिन्नत्वादिविशिष्टसुखाभिधायि स्वर्गपदमन्यनथासिद्धत्वादिविशिष्टाभिधायि कारणपदमित्येवं ध्येयम् । तत्र हि विशेषणोपस्थापक[5] पदान्तरस्याभावात्पदस्मारितस्यैव पदार्थेऽन्वयप्रतियोगित्वात्तत्र विशेषणोपस्थितेरभावेऽपि यथा विशिष्ट[6]बोधस्तथेहापीत्यर्थः । व्यक्त्याकृतिजातयः पदार्थ[7] इति न्यायमतत्वाज्जात्याकृतिविशिष्टेत्युक्तिः ॥

'गौरवं कल्पनेऽन्यथे' ति मूलारूढतां दर्शयति—अनुभवेति । "सामान्यान्विते शक्तावुपेतायां विशेषान्वयबोधायोग[8] इत्यतो विशेषान्वयप्रतिपत्त्यर्थं च पदान्तरसमभिव्याहारोपयोग' इति सुधोक्तमाह—अन्वयविशेषेति । एतेन विशेषप्रतिपत्तिरिति शशिधराद्युक्तं प्रत्युक्तम् ॥

मण्याद्युक्तमाशङ्कते—नन्विति ॥

---

1 'च' इत्यधिकम्–नं. ग. 2 'न चैवमपि' इत्यारभ्य इयत्पर्यन्तं नास्ति–सु. रा. 3 मात्रपदं नास्ति–सु. रा. 4 न इति नास्ति–सु. रा. 5 क पदार्थान्तराभावा–नं. पदार्थान्तरस्या–उ. 6 ष्टस्त–नं. 7 'इति' इति नास्ति–नं. 8 गादित्यतो–नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सङ्गतिग्रहणकाले सामान्यान्विते श[1]क्तेर्गृहीतत्वेन गोव्यक्ति[2]वत्त्वन्मते जात्याकृतिविशिष्टगोव्यक्तिवच्च सामान्यान्वित[3]स्यापि पदान्तरसमभिव्याहाराकाङ्क्षादिनिरपेक्षेणैव गोप्रातिपदिकेनोक्त्या सामान्यान्विते शक्तेस्त्यागायोगात् । अन्यथा जातावेव शक्तिर्व्यक्ते[4]स्त्वाकाङ्क्षा[5]दिवशाद्धीरिति स्यात् । प्रत्युत पदान्तरार्थे क्रियाविशेषे आकाङ्क्षार्थमेव कारकपदस्य क्रियासामान्यान्विते शक्तिरावश्यकी । अतएव विशेषान्वये शक्त्यभावात्तस्य शाब्दत्वं न स्यादिति निरस्तम् । या शक्तिः पदान्तरसमभिव्याहाराकाङ्क्षादिनिरपेक्षा सामा-

---

अन्वयस्यान्यतः प्राप्तेरन्यथाऽनुपपत्तितः ।
अनन्यलभ्यमात्रार्थे शक्तान्येव पदानि नः ॥

इति प्राचीनोक्तेरिति भावः । अन्विते शक्तेर्गृहीतत्वेनेति । एतच्च पूर्वत्रैवोपपादितमिति भावः । व्यक्तौ शक्तिरिति मतेनाह — [6]शक्तिवदिति । व्यक्तेरिवेत्यर्थः । जात्यादिविशिष्टव्यक्तौ [7]सेति मतेनाह — जात्याकृतीति । समभिव्याहारश्चाकाङ्क्षादि च तन्निरपेक्षेणैवेत्यर्थः । तत्सापेक्षत्वे सत्येवान्वयस्या[8]न्यलभ्यत्वं स्यान्नचैवमित्यर्थः । न केवलं [9]प्रतिबन्दीमात्रमित्याह — प्रत्युतेति । एतदपि पूर्वभङ्ग एव 'किंच घटमित्यनेने' त्यादिनोपपादितमिति भावः । अत एवेति ।

---

[1] क्ते गृही–सु. रा. [2] क्तित्वव–क. [3] न्वयस्या–सु. रा. [4] क्त्यादे–सु. रा. नं. ग. [5] आदिपदं न–सु. रा. [6] व्यक्तिवदिति–उ. ए. [7] शक्तिरितिमते–ए. [8] स्याल–नं. [9] व्यक्तीत्यधिकम्–उ. ए.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न्यान्वयवो[1]धिका तस्या एवान्य[2]सापेक्षाया विशेपान्वयबोधकत्वात् ॥

एतदेवाभिप्रेत्योक्तं पद्धतौ 'प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थाभिधानशक्ती[3]नि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेपतोऽप्यन्वितान् स्वार्थानभिदधती' ति। पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं येपामित्यर्थः। न तु पदान्तरसन्निधानेनाहितशक्त्यन्तरमाधेय[4]शक्तिर्येपामित्यर्थः। शक्तिद्वयाङ्गीकारे गौरवात्। पदान्तरसमभिव्याहारो हि सामान्यस्य विशेपपर्यवसान एव हेतुः। न पुनरविद्यमानशक्त्या[5]धान इति सुधाविरोधाच्च ॥

---

सामान्यान्वये शक्तिस्वीकारादेवेत्यर्थः। एतदेवेति। सामान्यान्वयशक्तिरेवान्वयविशेपबोधकेत्येतदेवेत्यर्थः। कथमिदमुक्तार्थसंवादीत्यतोर्थमाह—पदान्तरेति। कुत एवमर्थान्तरकल्पनेत्यत आह—शक्तिद्वयेत्यादि ॥

यद्यपि सुधायां जिज्ञासाधिकरणे 'शक्तिश्चैवान्वित' इति श्लोकव्याख्यावसरे पदानामौत्सर्गिकी सामान्यान्वये शक्तिः, पदा[6]न्तर सन्निधानाच्चागन्तुकी विशेपविपया शक्तिः, पदान्तरे च प्रदाधानशक्तिरिति शक्तित्रयं कल्प्यमित्युक्तम्। तथाऽपि सहजशक्त्याधेयशक्त्यपेक्षया शक्तिद्वयेत्युक्तमित्यदोपः। प्रामाणिकत्वाद्गौरवं न दोषायेत्यत आह—पदान्तरेति। सुधेति। 'शक्तिश्चैवान्विते' इति श्लोकव्या-

---

[1] धजनिका-रा. सु. [2] अन्यपदं नास्ति-सु. रा. [3] क्तानि पदानि-नं. सु रा. [4] याशक्ति-सु. रा. [5] क्त्यधीन-सु. रा. [6] दार्थान्त-नं. प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[1]केचित्तु—"न पुनरविद्यमानशक्त्या[2]धान" इति सुधैव पदान्तर[3]समभिव्याहारात्पूर्वमन्वयसामान्ये [4]शक्तिर्नेत्येतन्निषेधपरेति न विरोध इत्याहुः ॥

नन्वेवमप्यानयनान्वितो घटो घटान्वितमानयनमित्यन्वयरूपस्य विशेष्यरूपस्यार्थस्य च भेदेन तद्भेदनिबन्धनो वाक्यभेदः स्यादिति चे[5]न्न। [6]तथाऽपि चैत्रो घटमानयतीत्यत्र घटप्रातिपदिकस्य जात्यादिविशिष्टव्यक्तिवाचित्वाज्जात्याकृत्यन्वितो घटः प्रकृतिप्रत्ययार्थयोः पूर्वमन्वयाद्घटान्वितं कर्मत्वं, कर्मान्वितं चानयनं, आनयनान्विता च वर्तमाना कृतिः, कृत्यन्वितश्चैत्र इत्य-

---

ख्यानसुधेत्यर्थः। बाधकान्तरमाशङ्कते—नन्वेवमपीति। तद्भेदेति। अर्थभेदनिबन्धनः। अर्थैकत्वादेकं वाक्यमिति जैमिन्युक्तेरिति भावः। परमुखेन समाधिं वाचयितुं प्रतिबन्दीमाह—तथापीति। जात्याकृत्यन्वितो घट इत्यादि प्रथमान्तस्य इत्यन्वयरूपस्येत्यनेनान्वयः। पूर्वमिति। क्रियान्वयात्पूर्वमित्यर्थः। पूर्वमन्वये सिद्धमर्थमाह—घटान्वितं कर्मत्वमिति। आनयतीत्यत्र प्रकृतिप्रत्यययोरन्वयमाह—आनयनान्विताचेति। प्रत्ययस्यैव लट्त्वाख्यातत्वरूपेण प्रतिपाद्यार्थयोरन्वयमाह—वर्तमानेति। कृतिरिति। चैत्रपदसमभिव्याहारलभ्यार्थमाह—कृतीति॥

---

[1] केचित्त्विति नास्ति—सु. रा. [2] क्त्यधीन—सु. रा. [3] रात्पूर्वमन्व—सु. रा. [4] अपीत्यधिकम्—सु. रा. [5] न इति नास्ति—नं. सु. रा. ज. ग. [6] तथापि—नं. सु. रा. ज. ग.



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न्वयरूपस्य विशेष्यरूपस्य चार्थस्य भेदेन वाक्य-
भेदः स्यात् ॥

इयांस्तु भेदः। मन्मते प्रकृतिप्रत्ययार्थयोर-
न्वयः शक्यः, तव त्वशक्यो[1]ऽपि महावाक्यार्थ[2]-
भूतान्वयवत्सहकारिवशाच्छाब्द इति ॥

ननु पदार्थस्थानीयानामुक्तानामन्वयानां भेदेऽ-
पि तद्बोधमात्रेण नैराकाङ्क्ष्याभावेन घटकर्मकान-
यनानुकूल[3]वर्तमानयत्नवांश्चैत्र इति [4] वाक्यार्थभूता-
न्वस्याभेदेनैकवाक्यत्वमिति चेत्समं ममापि ॥

---

ननु न्यायमते अन्वयस्याशक्यत्वाद्वाक्यभेदो न दोषस्तव तु श[5]क्यत्वाद्दोष इत्यत एतद्वैषम्यमप्रयोजकम्। शाब्दत्वस्य त्वयाऽप्यङ्गीकारादित्याह—इयांस्त्विति। परेणैव समाधिं वाचयति—नन्विति। समं ममापीति। वाक्यार्थभूतस्य पटानयनान्वयस्यैकत्वेनैकवाक्यत्वसंभवादित्यर्थः ॥

एतेन क्रियाकारकपदयोः प्रत्येकमितरान्वितस्वार्थबोधकत्वे वाक्यार्थद्वयधीप्रसङ्गादिति मण्युक्तं, कारकान्विता क्रिया क्रियाऽन्वितं च कारकमिति धीप्रसङ्गेन वाक्यभेदः स्यादिति शशधरोक्तं च प्रत्युक्तम्। क्रियाकारकान्वयरूपवाक्यार्थस्यैकत्वेनैकवाक्यत्वोपपत्तेः। क्रियान्वितो घटो घटान्विता क्रियेति बोधस्य सर्वसाक्षित्वेनादोषापत्तेरिति ॥

---

[1] क्योपि–सु. रा. [2] र्थभूत–नं. ग. क. [3] वर्तमानपदं नास्ति–रा.
[4] महा इत्यधिकम्–सु. रा. [5] वाक्य–नं. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नन्वन्वितस्य घटस्य घटपदार्थत्वे घटमानये-त्युक्तेऽन्वितस्यैव घटस्य पुनरानयनाद्यन्वयधीः स्यादिति चेन्न। तव जात्याकृतिभ्यामिव मम योग्येन [1]कर्मत्वादिना धर्मेणान्वितस्यैव घटस्यानयनाद्यन्वयप्रतीता[2]विष्टापत्तेः। घटप्रातिपदिकार्थस्य प्रत्ययार्थीभूतकर्मत्वान्वयात्पूर्वं क्रियासामान्यान्वययोग्यत्वे पूर्वं क्रियासामान्यान्वयधी[3]-रिष्टैव, अयोग्यत्वे तु तत एव न पूर्व[4]-मन्वयधीः। अन्वयांशे अनयनाद्य[5]नन्वयस्तु तव जात्याकृत्यंश इव एकपदोपात्तत्वे[6]न प्रथमा-

अन्विताभिधानवादे घटमानयेत्यादौ अन्वितान्वयापत्तिरूपबाधकमाशङ्कते—नन्विति। किमत्र कर्मत्वादिरूपयत्किंचिद्योग्येतरान्वितस्य क्रियाऽन्वयश्चोद्यतेऽथ कर्मत्वाद्यन्वयात्पूर्वमेव क्रियासामान्यान्वयः, कर्मत्वान्वयात्पश्चादानयनादिक्रियाविशेषा[7]न्वित इति। आद्य आह—तवेति। जात्याद्यन्वितस्य यथा क्रियाऽन्वयः एकपदोपात्तत्वात्, जात्यादिव्यक्तीनां तथा कर्मत्वान्वितस्यैव क्रियाऽन्वय इत्यर्थः। द्वितीय आह—घटेति॥

नन्वन्वितान्वय[8]इत्यस्य लम्बकर्णमानयेत्यादाविव विशेषणीभूतान्वयरूपविशेषणे[9]प्यानयनान्वयः स्यादित्यर्थः। विशेषणान्वयिनोऽन्वितरूपविशिष्टान्वयायोगात्। विशिष्टस्य च पदार्थत्वादित्यत आह—अन्वयांश इति। यथा जात्याकृतिविशिष्टव्यक्तिरूपे पदार्थे आनय

[1] घटत्वादिनाध–नं. ज. [2]दध–सु. रा. [2]ष्टेप्राप्ते–नं. सु. रा. ग. [3] रपीष्टैव–नं. ज. ग क. [4] र्वंतदन्वय–सु. रा. ग. [5] द्यन्वय- सु. रा. ग. [6] त्वे च–नं. त्वेनैव–सु. रा. [7] षान्वय इति–उ. प. [8] इति इति नास्ति–नं. प. [9] णस्याप्या–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न्वितकर्मत्वांश इव चाकाङ्क्षाद्यभावाद्युक्तः ॥

ननु तथाऽपि घटपदजनिते जनक[1]ज्ञाने आनयनान्वितो घट इति घटं प्रत्युपसर्जनतया भातस्यानयनस्य कथं जन्यज्ञाने घटकर्मकानयनमिति प्राधान्येन घटं प्रति भानम् । गुणप्रधानभावविपरिवृत्तौ [2]विरोधेन जन्यजनकभावस्यैवायोगात् । मम तु घटः कर्मत्वमानयनं कृतिरिति जनकज्ञानेऽपि घटस्यानयनं प्रति प्राधान्येनाभानान्न

---

नादिक्रियान्वयेऽपि न जात्याद्यंशे तदन्वयः, यथा वा कर्मत्वविशिष्टस्यानयनान्वयेऽपि न कर्मत्वांशेऽन्वयस्तथैवेत्यर्थः । जन्यजनकज्ञानयोर्गुणप्रधानविपरिवृत्तिरूपबाधकमाशङ्कते—ननु तथाऽपीति । आनयनान्वि[3]तो घट इति ज्ञाने सत्येव घटान्वितमानयनमिति ज्ञानं[4](घट)मानयेत्यादिवाक्ये जायत इति वाच्यम् । घटपदस्य पूर्वं [5]अयोगात् । तत्र च पूर्वज्ञानं जनकमुत्तरज्ञानं जन्यमित्यपि वाच्यम् । [6]उत्तरज्ञानेऽस्य विशेषणत्वेन तज्ज्ञानस्य विशेषणज्ञानत्वात् । एवं च जनकज्ञानेऽन्वयप्रतियोगितया विशेषणत्वेन भातमानयनं घटश्च विशेष्यत्वेन भातः तत्कथमुत्तरज्ञाने घटोऽन्वयप्रतियोगितया विशेषणत्वेनानयनं विशेष्यत्वेन भायादित्यर्थः । विपरिवृत्तौ विनियमे सतीत्यर्थः । मम त्विति । अभिहितान्वयवादिनस्त्वित्यर्थः । गुणप्रधानविपरिवृत्तौ जन्यजनकभावो

---

[1]के ज्ञाने—नं. ज. क. [2]विरोधेनेति नास्ति—सु. रा. [3]न्वितघ—नं. उ. ए. [4]घटपदं न—नं. [5]प्रयो—नं. उ. ए. [6]घटस्य विशेषणत्वेन ज्ञातस्य विशेषणे ज्ञानत्वात्—नं. ज्ञानस्य विशेषणे ज्ञानत्वात्—उ. ए.इत्यस्ति.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विपरिवृत्तिरिति चेन्न। पुरुषस्य दण्ड इति ज्ञानस्य विशेषणज्ञानतया जनकत्वेऽपि तज्जन्ये दण्डी पुरुष इति ज्ञानेऽपि विपरिवृत्तिदर्शनात् ॥

ननु ज्ञानस्य यद्विषयत्वेन जनकत्वं तन्मध्ये यद्यस्य विशेषणं [1]तत्तत्र फलीभूते ज्ञाने तस्य विशेष्यं नेति नियमः, पुरुषस्य दण्ड इति ज्ञानं[2] च न पुरुषविषयतया जनकं, किं तु दण्डविषयतया, तत्र च दण्डं प्रति दण्डत्वं विशेषणं, तस्य च न विपरिवृत्तिरिति चेन्न[3]। भूतले घटाभाव इति ज्ञानेन घटाभाववद्भूतलमिति ज्ञानदर्शनात्।

---

नेत्येतत्परामर्शवादान्ते मण्युक्तरीत्या व्यभिचारीत्याह—पुरुषस्येति। व्यभिचारोद्धारं विवक्षामुखेनाशङ्कते—नन्विति। तस्य च न परिवृत्तिरीति। दण्डीत्यत्र पुरुषं प्रति दण्डस्य विशेषणत्वेऽपि द[4]ण्डापेक्षया दण्डत्वस्य विशेषणत्वा[5]नपायादिति भावः। अयमपि नियमो नेत्याह—भूतल इति। अभावनिर्विकल्पकानभ्युपगमेनाभाववद्भूतलमिति विशिष्टज्ञानं प्रत्यभावरूपविशेषणज्ञानस्य हेतुत्वात्तदर्थं भूतलेऽभाव इति विशेष्यतयाभावज्ञानानन्तरमेवाभावविशिष्टज्ञानमिति प्रामाण्यवादादौ तत्र तत्र मण्यादावुक्तत्वादिति भावः। अस्त्वेवं तावतोक्तस्य कथं व्यभि-

---

[1] तत्फलीभू—सु. रा. ग.　[2] ने च—सु. रा.　[3] न इति नास्ति—सु. रा.
[4] पिण्डापे—ड.　[5] त्वस्यान—ड. नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्राधिकरणज्ञानसाध्याभावज्ञाने भूतलज्ञानस्यापि हेतुत्वात् । न च परोक्षज्ञाने अयं नियमः । अप्रयोजकत्वात् । पर्वते वह्निव्याप्यो[1] धूम इति परामर्शेनापि पर्वतो वह्निमानित्यनुमितिदर्शनाच्च ॥

चार इत्यत आह—तत्रेति । तस्यैव विवरणमधिकरणेत्यादि । अभावज्ञान इति । पटाभाववद्भूतलमित्येवंरूपेऽभावविशिष्टज्ञान इत्यर्थः । अधिकरणज्ञानसाध्येति विशेषणं प्रागुक्तनियमभङ्गोपपादनायोक्तम् । भूतले घटाभावज्ञानं जनकं तच्च भूतलघटाभावोभयविषयकत्वेनैवाभाववद्भूतलमिति ज्ञाने हेतुरिति वाच्यम् । विशेषणज्ञानत्वेन हेतुत्वार्थमभावविषयकत्वस्याधिकरणज्ञानत्वेन हेतुत्वार्थं भूतलविषयकत्वस्यावश्यकत्वात् । एवं च जनकज्ञानस्य यद्विषयत्वेन हेतुत्वं तन्मध्ये एव विशेषणविशेष्यतया प्रतीतयोर्भूतलाभावयोर्जन्यज्ञाने विशेष्यविशेषणभावदर्शनमस्तीति कथं न नियमभङ्ग इति । न च परोक्षेति । इदं चापरोक्षज्ञानमिति भावः । अप्रयोजकत्वादिति । एतेन अभावबुद्ध्यन्यबुद्धावेवायं नियम इत्यपि प्रत्युक्तम् । परोक्षादाविव सर्वत्रोपपत्तौ गुणप्रधानभावविपरिवृत्तौ न जन्यजनकभाव इति नियमग्राहकप्रमाणाभावादितिभावः । अत एव शाब्दबोध एवायं नियम इत्यपि प्रत्युक्तम् । अप्रयोजकत्वादिति । पर्वत इति । जनकज्ञाने विशेषणत्वेन भातस्यापि पर्वतस्य जन्यानुमितौ विशेष्यत्वदर्शनेन परोक्षज्ञानेऽयं नियम इत्यपि नेत्यर्थः ॥

उपपादितं सर्वं बुद्ध्यारोहाय संग्रहेणानुवदन्नुपसंहरति—

[1] व्याप्तो धू–नं. क,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मात् पर्यायत्वापत्तिः, वैयर्थापत्तिः, पुनरुक्त्यापत्तिः, अन्योन्याश्रयद्वयापत्तिः, विशेषान्वयप्रतिबन्दी, वाक्यभेदापत्तिः, अन्वितस्यैव पुनरन्वयापातः, अन्वयांशस्याप्यानयनाद्यन्वयापत्तिः, जन्यजनकज्ञानयोर्गुणप्रधानभावस्य विपरिवृत्तिरिति बाधकदशकमपि न युक्तमिति ॥

तस्मात्पदान्यन्विते शक्तान्येव ॥

अन्विताभिधाने उदयनाद्युक्तबाधकदशकोद्धारः ॥ १७ ॥

---

तस्मादिति । बाधकानां समाहितत्वादित्यर्थः । नन्वेवमपीत्यादिनोक्तमाह — वैयर्थ्येति । आर्थिकपुनरुक्तेरदोषत्वादित्युक्तमाह—पुनरिति । न चैवमपि क्रियापदेनेति. न चैवमपि कारकपदेति चोक्तमाह—अन्योन्याश्रयद्वयेति । नन्वेवं चेत्यादिनोक्तमाह—विशेषान्वयेति । नन्वेमपीत्यादिनोक्तमाह—वाक्यभेदेति । नन्वन्वितस्येत्यादिनोक्तमाह—अन्वितस्यैवेति । अन्वयांश इत्यादिनोक्तमाह—अन्वयांशस्येति । ननु तथाऽपीत्यादिनोक्तमाह—जन्येति ॥

भङ्गद्वयार्थमुपसंहरति—तस्मादिति । साधकभावाद्बाधकाभावाच्चेत्यर्थः ॥

अन्विताभिधाने बाधकदशकोद्धारः ॥ १७ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ अन्विताभिधाने युक्तिदशकम् ॥ १८ ॥

अथ मतम्—

अस्त्येवान्वये शक्तिः, किं तु सा स्वरूपसत्येव हेतुः, न तु ज्ञाता। पदार्थे शक्तिज्ञानादेवान्वय बोधोपपत्तेः। न च वैपरीत्यं शङ्क्यम्। अन्वयस्य पदार्थनिरूप्यत्वेन नागृहीतविशेषणान्यायेन तत्रैव शक्तिग्रहस्य हेतुत्वात्। व्यवहारेण लिङ्गे[1]-

---

### अथ अन्विताभिधाने युक्तिदशकम् ॥ १८ ॥

यत्तु मणौ पदशक्तिवादपूर्वपक्षे प्राभाकरमतानुवादप्रस्तावे—जातिव्यक्तिज्ञानजनकत्वादुभयत्रापि शब्दशक्तिः जात्यंशे सा ज्ञाता, व्यक्त्यंशे तु स्वरूपसती हेतुः लाघवादिति कुब्जशक्तिवादस्त्वया-नैयायिकेनाप्यन्वये कुब्जशक्तिस्वीकारादिति दृष्टान्तमुखेनान्वये कुब्ज-शक्तिरुपाक्षिप्ता तां तन्मताभिमतोपपादनपूर्वमनुवदति—अथ मतमित्यादिना। कुत इत्यतोऽन्यतो[2]लभ्यत्वान्न तत्र ज्ञातोपयुज्यत इत्याह—पदार्थ इति। वैपरीत्यमिति। अन्वये ज्ञाता पदार्थे स्वरूपसतीति वैपरीत्यमित्यर्थः। नागृहीतेति। "नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते" इति न्यायेन प्रथमोपस्थितपदार्थरूपविशेषणांश एव शक्तिग्रहस्य हेतुत्वादित्यर्थः। व्यवहारलिङ्गकान्वितशक्तिग्रहविरोध इत्यत आह—व्यवहारेणेति॥

---

[1] लिङ्गेनेति नास्ति—सु. रा.  [2] न्यलभ्य—नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नान्विते शक्तिग्रहेऽपि गौरवान्यलभ्यत्वाभ्यामन्वयांशमपहाय पदार्थमात्रविषयत्वेनैव शक्तिग्रहस्य शाब्दबोध[1] हेतुत्वकल्पनात् ॥

न चैवं पदार्थे ज्ञाता शक्तिरुपयोगिन्यन्वये त्वज्ञातेति शक्तिद्वित्वे गौरवमिति वाच्यम् । गुरुमते जातिविशिष्टव्यक्तिविषयायाः शक्तेरेकत्वेऽपि जात्यंशमात्रे ज्ञातोपयोगित्ववदिहाप्यन्वितविषयायाः शक्तेरेकत्वेऽपि पदार्थांशमात्रे [2] ज्ञातोपयोगित्वस्योपपत्तेः । अत एव कुब्जशक्तिवाद इति ॥

उच्यते ॥

अस्मिन्नपि पक्षेऽन्विते प्राथमिकी व्युत्पत्तिरित्यादि सिद्धान्तसाधकं युक्तिषट्कं सुस्थिरमेव ॥

---

ननूभयत्र शक्तेरेकत्वे ज्ञातत्वाज्ञातत्वयोर्विरोधेन शक्तिभेदे गौरवमिति शङ्कते—न चेति । शक्त्यैक्येऽप्यवच्छेदकभेदादविरोध इति सदृष्टान्तमाह—गुरुमत[3] इति । जात्यंश इति । नागृहीतविशेषणान्यायेनेति भावः । ज्ञातोपयोगित्ववदिति । जातिविशिष्टव्यक्तिज्ञानहेतुत्वं यथातथेत्यर्थः । ज्ञाताया उपयोगित्वं ज्ञातोपयोगित्वं तद्वत्, 'तदशिष्यं [4] प्रमाणत्वा'' दितिवदयं निर्देशः साधुः । एवमग्रेऽपि । अत एवेति । अंशभेदेनाज्ञातत्वादेवेत्यर्थः । सिद्धान्तसाधकमिति । प्रागन्विते शक्तिरित्यत्रोक्तसाधकषट्कमेवान्वयेऽपि शक्तिग्रहो हेतुरिति पक्षेऽपि समानामित्यर्थः ॥

---

[1] धेहे—सु. रा. [2] चेत् इत्यधिकम्-रा. सु. 'उच्यते' इति पर्यन्तं नास्ति—सु. रा. [3] तामिति—नं. ए. [4] संज्ञा इत्यधिकम्—ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न चान्वये शक्तेः सत्त्वमात्रेण तस्य शाब्दत्वं तस्याः प्रत्यासत्तित्वं च युक्तमिति वाच्यम् । शक्तिभ्रमेणाऽपि शाब्दयोर्भ्रमप्रमयोर्दर्शनेन शक्तिज्ञानस्यैव शाब्दत्वे तन्त्रत्वात् । प्रत्यासत्तित्वाच्च ॥

किं च धूमोस्तीति[1] वाक्ये धूमशब्दस्य वह्नौ लक्षणारूपवृत्तिज्ञाने सत्येव शाब्दधीरन्यथातु-

---

ननु [2]यत् प्रागन्वयस्याशक्यत्वे तद्धियोशाब्दत्वमुक्तं, यच्च शब्दरूपकरणस्यान्वयांशे प्रत्यासन्नत्वं स्यादित्युक्तं तद्द्वयमप्यन्वयांशे शक्तिग्रहस्य न हेतुत्वसाधकं, अन्यथैव तत्सिद्धेरिति शङ्कते—न चान्वय इति । [3]भ्रमेणापीति । स्वरूपसत्त्या एव शक्तेः शाब्दधीहेतुत्वे प्रत्यासत्तित्वे च तद्भ्रमेण श[4]ब्दभ्रमो न स्यात् । दृश्यते चायमतः तज्ज्ञानमेव तत्र हेतुः । ज्ञातैव च सा तत्र प्रत्यासत्तिरित्यर्थः । क्वचिच्छाब्दप्रमाभ्रमयोर्दर्शनेनेति पाठः, स तु गाव्याद्यसाधुशब्दशक्तिग्रहे प्रमाया अपि दृष्टेस्तदभिप्रायः । केचित्तु यादृच्छिकप्रमाग्रह इत्याहुः ॥

एवं प्रागुक्तसाधकषट्कमध्ये[5]युक्तत्वेन [6]भ्रान्तं साधकद्वयमुपपाद्येदानीं युक्तिं च चतुष्टयमधिकं विवक्षुः अन्यत्र क्लृप्तत्वाच्छाक्तिस्थळेऽपि तज्ज्ञान[7]मन्वयांशेप्यावश्यकमित्याह—किंचेति । शाब्दधीविषयः स्वविषयशक्तिज्ञानविषयः तज्जन्यज्ञानविषयत्वात् । न चासिद्धिः । पदार्थांशे शक्तिज्ञानस्य परेणापि हेतुत्वोपगमात् । न च दृष्टान्ताभावः । [8]परोक्षानुमानस्थळे जन्यज्ञानविषयसंबन्धस्य जनकज्ञानेपि विषयत्वनिय-

---

[1] त्यादि–सु. रा. [2] यत् इति नास्ति–नं. उ. प. [3] शक्ति इत्यधिकम्–उ. प. [4] शाब्द–नं. उ. प. [5] ध्येप्युक्त–नं. उ. [6] भातं–नं. उ. 'भ्रान्तं' इत्येतत् रेखयाताडितम्–प. [7] ज्ञानं–नं. [8] न चेत्यादि नास्ति–नं. उ. प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मितिरित्यन्वयांशे वृत्त्यज्ञाने कथमन्वयस्य शाब्दत्वम् ॥

अपि च [1]परोक्षज्ञाने फलीभूतज्ञानविषयस्य संबन्धस्य जनकीभूतज्ञानविषयत्वानियमेन शाब्दफलीभूतज्ञानविषयस्यान्वयस्य तज्ज[2]नकशक्तिज्ञान विषयत्वमावश्यकम्। भवति हि पक्षतदितरसाधारण्येन प्रवृत्तस्य वह्निधूमसामानाधिकरण्यविशेषरूपव्याप्तिज्ञानस्य पर्वतवह्निसंबन्धोऽपि सामान्येन विषयः ॥

किं च यद्यन्वयांशे शक्तिज्ञानं न हेतुस्तर्हि घटमानयतीत्यादिपदजातादिव, घटः कर्मत्वमानयनं-कृतिरित्यादिपदजातादपि कथं नान्वयधीः। पदस्य पदार्थे शक्तेस्तत्स्मृतेस्तत्साध्याया अनन्वितपदार्थस्मृतेः पदार्थेषु योग्यतादेश्च सत्त्वात् ॥

---

मादिति युक्त्यन्तरमाह—अपि चेति। सविकल्पकविषयसंबन्धस्य निर्विकल्पकाविषयत्वात्परोक्षेत्युक्तम्। नियमेनेत्येतदसिद्धमित्यतो व्यनक्ति—भवति हीति। सामानाधिकरण्यविशेषेति। अव्यभिचरितसामानाधिकरण्येत्यर्थः। सामान्येन विषय इति। अन्यथा पर्वतीयधूमदर्शनात्पर्वतीयवह्निज्ञानानुदयापत्तेरिति भावः। घटः कर्मत्वमित्यादावन्वयाप्रतीतिरप्यन्वयांशेऽपि शक्तिज्ञानस्य हेतुत्वे मानमित्याह—किं च यदीति। सामग्र्यभावान्नान्वयधीरित्यत आह—पदस्येति। तत्साध्यायाः शक्तिस्मृतिसाध्याया इत्यर्थः। अनन्वितेति। अन्वया-

---

[1] चाप—नं. [2] तदज्ञात शक्ति—नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च तत्राकाङ्क्षा नास्तीति वाच्यम् । अन्वयविशेषाकाङ्क्षादावहेतुभूतं सामान्याज्ञानं प्रत्यन्वयसामान्यशक्त्यज्ञानस्यैव तन्त्रत्वात् ॥

[1]न च तादृशं पदजातं शिलाशकलमङ्कुर इव क्रियाकारकभावेनान्वयबोधे स्वरूपायोग्यं, तेन कदाऽप्यन्वयबोधादर्शनादिति वाच्यम् । एवं हि घटः कर्मत्वमित्यादिवाक्यं श्रुतवतोऽभिज्ञस्य नाम विभक्तिधात्वाख्यातस्मरणादुत्पन्नान्वयबोधस्य प्रयोज्यवृद्धस्य व्यवहारं पश्यतो बालस्य घटः कर्मत्वमित्यादावेव व्युत्पन्नस्य ततोऽन्वयबोधो न स्यात् ॥

---

विषयकपदार्थस्मृतेरित्यर्थः । योग्यतादेरित्यादिपदेनाकाङ्क्षाऽऽसत्त्योर्ग्रहः । सामान्याज्ञानं अन्वयसामान्याज्ञानं प्रतीत्यर्थः । शक्त्यज्ञानस्येति । तथा च शक्तिज्ञानमाकाङ्क्षासद्भावार्थमवश्यमुपेयमिति भावः । योग्यता नेति शङ्कते—न चेति । शिलेति । शिलाशकलमङ्कुरे यथा न योग्यं तथेत्यर्थः । एवं हीति । स्वरूपायोग्यत्वइत्यर्थः । नामेति । घटेति नाम, द्वितीया विभक्तिः, आनयेत्यानयनधातुः, लुप्ताख्याताख्यतिङ्प्रत्ययरूपहि शब्दः एतेषां स्मरणादित्यर्थः । अन्वयेति । घटकर्मकानयनरूपान्वयबोधस्येत्यर्थः । इत्यादावेवेति । स्मारितनामविभक्त्या [2]व्यवहारहेतुत्वमजानतो घटः कर्मत्वमित्येतद्धटकर्मेत्यर्थे, आनयनं कृतिरित्येतदानयनं कुर्वित्यर्थे, शक्तमिति ज्ञानवत इत्यर्थः । ततः घटः कर्मत्वमित्यादिवाक्यादित्यर्थः । एतेनैवाकाङ्क्षा-

---

[1] नचेत्यादि नास्ति -नं. सु. रा. ज. क. [2] क्त्यादेर्व्य–प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च शक्तिभ्रमरूपसहकारिवशादन्वयधीः। स्वरूपायोग्यस्य सहकारिशतसमवधानेऽपि कार्याजनकत्वात्। तस्मात्स्वरूपयोग्यमेव तत् बालं प्रत्यन्वयांशे शक्तिज्ञानरूपसहकारिसहितत्वादन्वयबोधकम्। अन्यं तु प्रति तद्रहितत्वान्नेत्यन्वयांशे शक्तिज्ञान[1]सहकारिता सिद्धा ॥

किं च पदार्थांशे शक्तिज्ञानमपि पदार्थस्मृतिद्वारा शक्ति[2]धीहेतुरिति ते मतम्। न च तत्स्मृतौ शक्तिरूपसंबन्धस्य शक्तित्वेन ज्ञानमपेक्षितं, तदभावेऽपि हस्तिरूपसंबन्धिदर्शनजन्यं हस्तिपकस्मरणं प्रति संबन्धांशे ज्ञानस्य संबन्धत्वप्रकारकस्यैव हेतुत्वदर्शनात्। किं तु संबन्धत्वेनैव ज्ञानमपेक्षितम्। एवं चाकाशमस्तीतिवाक्यादाकाश[3]शब्दसमवायित्वेनाकाशस्मृतिमत आकाशशब्दे

भावोऽपि प्रत्युक्तः। [4]अयोग्येपि वाक्येऽन्वयधीरन्यहेतुकेत्याशङ्क्याह—न चेति। तदिति। घटः कर्मत्वमित्यादिवाक्यमित्यर्थः। ततश्च किं प्रकृत इत्यत आह—बालं प्रतीति। शक्तित्वेन शक्तिज्ञानस्या[5]नन्यथासिद्धत्वं चान्वयधीहेतुत्वे मानमित्याह—किं चेति। ते मतमिति। सिद्धान्ते शक्तिज्ञानवाक्यार्थज्ञानयोर्मध्ये पदार्थस्मृतेरनभ्युपगमादिति भावः। अस्त्वेवं ततः किमित्यत आह—एवं चेति। सम्बन्धत्वेन

[1] नस्य सह–नं. सु. रा. ग. [2] शब्दधी–नं. सु. रा. ज. ग. क.
[3] शस्य–सु. रा. [4] अयोग्येति। इत्यस्ति–नं. उ. [5] स्यान्यथा–नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्युत्पत्तिहीनस्यापि पुंस आकाशास्तित्वबोधः स्यात्। न चात्र नामविभक्त्याख्यातयुक्ते स्वरूपायोग्यत्वं शङ्कार्हम् ॥

अथ संबन्धत्वप्रकारकज्ञानेनैवाकाशस्य स्मरणे सिद्धेऽनुभवार्थं शक्तित्वेन ज्ञानमपेक्ष्यत[1] इति चेत्तर्ह्यन्वयानुभवार्थं तत्रैव शक्तिज्ञानापेक्षेति मदिष्टसिद्धिः ॥

एवं चान्विताभिधाने न केवलं पूर्वोक्तं पदकम्। किं तु वृत्तिज्ञाने सत्येव शाब्दधीः, परोक्षज्ञाने फलीभूतज्ञानविषयस्य संबन्धस्य जनकीभूतज्ञानविषयत्वनियमो घटः कर्मत्वमित्यादावन्वयाप्रतीतिः, पदार्थस्मृतेरन्यथाऽपि सिद्ध्याऽन्वयानु-

---

शक्तिज्ञानस्य पदार्थस्मृतिहेतुत्वे सतीत्यर्थः। आकाशास्तित्वबोधः स्यादिति। शक्तित्वेन शक्तिज्ञानरूपकारणं विना[2]न्यस्य पदार्थस्मृत्यादिरूपकारणस्य सर्वस्य सत्त्वादिति भावः। योग्यताविरहादन्वयबुद्ध्यभाव इत्यत आह—नचात्रेति। आकाशमस्तीति वाक्य[3]मित्यर्थः। तर्हीति। अनुभवा[4]र्थकत्वपक्षे केवलपदार्थे तदयोगेनान्वयसहित एवानुभवस्य वाच्यत्वेन तदर्थमेवान्वये शक्तिज्ञानमपेक्षितमित्युक्तं भवतीत्यर्थः। एवमुपपादितं सङ्ग्रहेणानुवदन्नुपसंहरति— एवं चेति। अन्वितेति।

---

[1] इति चेत् इति नास्ति–सु. रा. ज. ग. [2] नास्यपदा–नं. उ. [3] क्य इत्य–प. [4] र्थत्वप–नं. उ. प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भवार्थं तत्रैव शक्तिज्ञानापेक्षेति युक्तिचतुष्टयमपि ॥

अन्विताभिधाने युक्तिदशकम् ॥ १८ ॥

---

## अथ व्यक्तिप्रतिवन्द्या दुष्परिहरत्वम् ॥ १९ ॥

---

ननु–पद्कान्तर्गता व्यक्तिप्रतिवन्दी न युक्ता।
व्यक्तौ शक्तिज्ञानस्याहेतुत्वे जाताविव व्यक्तावपि

---

अंशद्वयेऽपि शक्तिज्ञानेनैव पदार्थतदन्वयाभिधान इत्यर्थः । स्पष्टोऽयं ग्रन्थः ॥

अन्विताभिधाने [1] प्रागुक्तेन सह युक्तिदशकम् ॥ १८ ॥

---

### अथ व्याक्तिप्रतिवन्द्या दुष्परिहरत्वम् ॥ १९ ॥

ननु—यदुक्तं शक्तिः पदार्थे ज्ञातोपयुज्यते, अन्वये तु स्वरूपसतीति कुब्जशक्तिपक्षे साधकषट्कं स्थिरमेवेति तत्रान्वयस्य शाब्दत्वं करणरूपशब्दस्य प्रत्यासन्नत्वं च शक्तिज्ञानं विना न युक्तमिति साधकद्वयस्योपपादनेऽपि शक्तिर्जाताविव व्यक्तावपि तद्विशिष्टव्यक्तिबोधे ज्ञातोपयुज्यते न तु व्यक्त्यंशे अज्ञातेति यथोच्यते तथाऽन्वयांशेऽपीति यत्साधकमभिहितं तदयुक्तम् । येन जातिव्यक्तिप्रतिवन्द्याऽन्वयांशेऽपि शक्तिर्ज्ञातोपयुक्ता शाब्दबोधे स्यादिति भावेन शङ्कते—नन्विति । पदशक्तिवादसिद्धान्ते मण्युक्तमाह—व्यक्ताविति । व्यक्त्यंशे या

---

[1] शक्तिज्ञानपूर्वकमेवान्विताभिधानमित्यत्र प्रागु—नं. उ. प.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[1]शक्तत्वेन ज्ञातत्वस्यैव प्रयोजकत्वसम्भवे शक्यत्वेन ज्ञातजातिसंबन्धिव्यक्तित्वरूपप्रयोजकान्तरकल्पने गौरवमिति चेत् सममन्वयेऽपि प्रयोजकान्तरकल्पनेऽनुव्याख्यानोक्तं गौरवम् ॥

ननु गोत्वे गोपदं शक्तमिति ज्ञानं प्रति विषयतया जातेरवच्छेदकत्वं नागृहीतविशेषणान्यायेन विशेषणीभूतव्यक्तिमादायैव युक्तम् । व्यक्तिं विना

---

शक्तिस्तज्ज्ञानस्य जातिविशिष्टव्यक्तिज्ञान[2]हेतुत्वे व्यक्त्यंशे शक्तेः स्वरूपसत्या एव हेतुत्वे गौरवमित्यन्वयः । कथमित्यत उक्तं जाताविवेत्यादि । ग[3]वादिशब्देन गोत्वादिज्ञाने जनयितव्ये जातेर्गोपदशक्यत्वेनज्ञातत्वं यथा प्रयोजकं तथा गोव्यक्तिज्ञाने जनयितव्येऽपि गोपदशक्य त्वेन ज्ञातत्वस्यैव प्रयोजकत्वसंभवे तत्त्यागेन गोपदादिशक्यत्वेन ज्ञाता या गोत्वादिजातिस्तत्संबन्धिव्यक्तित्वादिरूपप्रयोजकान्तरस्य कल्पनीयत्वादित्यर्थः । प्रयोजकान्तरेति । पदार्थ इवान्वयेऽपि शब्दशक्यत्वेन ज्ञातत्वरूपक्लृप्तप्रयोजकत्यागेन शक्यत्वेन ज्ञातपदार्थान्वयत्वरूपप्रयोजकान्तरकल्पने 'गौरवं कल्पनेऽन्यथे'ति साधकषट्कवादोदाहृतानुव्याख्यानोक्तगौरवमिति मूलारूढताप्रदर्शनायानुव्याख्यानेत्युक्तम् ॥

पदशक्तिवादसिद्धान्ते मण्युक्तदिशा शङ्कते—नन्विति । गोत्वे गोपदं शक्तमितिज्ञाने गोत्वं विशेष्यत्वेन विषयः । अत एव ज्ञाने व्यावर्तकापरपर्यायमवच्छेदकं जातौ च गोव्यक्ति[4]विशेषणम् । तया विना

---

[1] शक्यत्वे–रा. सु. ज. ग. [2] नाहे–ए. [3] गकारादि श नं. उ.
[4] क्तिविशेषणतया–नं. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जातेरनुपस्थितेः । अन्वये तु नैवम् । तं विनाऽपि पदार्थोपस्थितेरिति चेन्नैवम् । अन्वितविषयक-व्यवहाररूपलिङ्गजन्ये शक्तिग्राहके ज्ञाने नियमोपस्थितेरन्वयेऽपि सत्त्वात् । अन्यत्र नियमेन प्रतीतेस्तु नित्यादिपदजन्यज्ञाने गोत्वप्रतीतावपि गवादि[1]व्यक्तेरप्रतीत्या व्यक्तावप्यसत्त्वात् । एवं

---

जातेरप्रतीतेः । तथा च नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायेन गोत्वे गोपदं शक्तमिति ज्ञानं गोव्यक्तिं गोत्वं च विषयीकरोतीति तादृश-ज्ञानं प्रति जातिव्यक्त्योर्द्वयोरपि विषयतयावच्छेदकत्वं न्याय्यमिति जात्यंश इव व्यक्त्यंशेऽपि शक्तिज्ञानं जातिविशिष्टव्यक्तिज्ञाने हेतुरिति युक्तम् । अन्वये तु नैवम् । तद्व्यनक्ति—[2]तमिति । ज्ञान इति । इतरान्विते शक्तमित्येवंरूपज्ञानस्यैव वृद्धव्यवहारजन्यत्वस्य प्रागुपादा[3]-नात् । तादृशज्ञाने च पदार्थस्येवान्वयस्यापि नियमेनोपस्थित्या तं विना पदार्थोपस्थितेरित्यस्यासिद्धिरितिभावः ॥

ननु व्यवहाररूपलिङ्गजन्यप्राथमिकशक्तिज्ञानेऽन्वयस्य नियमे-नोपस्थितावपि व्याकरणोपमानकोशादिजन्यपाश्चात्यशक्तिज्ञाने अन्वय-प्रतीतेरसत्वमेवेत्यतो व्यक्तावपि तथेत्याह—अन्यत्रेति । गौर्नित्येत्यादौ व्यक्तेर्बाधेन जातेरेव प्रतीत्या व्यक्तिप्रतीतेरसत्त्वादित्यर्थः ॥

"गौरवं कल्पनेऽन्यथा" इति मूलारूढतां दर्शयति—एव-मिति । अपि च यद्धर्मवत्तया ज्ञात एव यत्र यस्य ज्ञानं स तत्रावच्छे-

---

[1] गवादि इति नास्ति—सु. रा. [2] तं विनापीति । अन्वितेति । इतरा—उ. [3] पपादितत्वात्—उ. दनात्—ए.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यक्त्यन्वययोस्साम्येऽपि वैरूप्यकल्पने गौरवम् ॥

एतेन जातिव्यक्त्योस्समानसंवित्संवेद्यतया व्यक्तिज्ञानत्वेन ज्ञात एव जातिज्ञाने शक्तिग्रहाद्व्यक्तेरप्यवच्छेदक[1]तया शक्यत्वं, न त्वन्वयस्येति निरस्तम्। शक्तिग्राहके ज्ञाने समानसंवित्संवेद्यत्वस्यान्वयेऽपि सत्त्वात्। अन्यत्र तदसत्त्वस्याकिञ्चित्करत्वादि[2]त्युक्तत्वात्। जातिव्यक्त्योः समानसंवित्संवेद्यत्वेऽपि तज्ज्ञानत्वयोस्तदभावाच्च ॥

---

दक इत्यादिमण्युक्तं हृदि कृत्वा वैषम्यान्तरमनूद्य निराह— एतेनेति। गोत्वाद्यर्थे गवादिपदं शक्तमित्येकं मतम्। गोत्वादिज्ञाने शक्तमित्यपरं मतम्। तन्मतावष्टम्भेन व्यक्तिज्ञानत्वेन ज्ञात एव, जातिज्ञान इत्यनुवादः। जातिव्यक्त्युभयविषयज्ञानस्यैकत्वात्। अस्मिन् पक्षे शक्तिपदं कारणत्वपरम्। अर्थे शक्तमिति पक्षे चेश्वरसङ्केतपरमिति ध्येयम्। परमते[3] इन्द्रियशक्तेरभावात्। उक्तत्वादिति। [4]प्राथमिकव्युत्पत्तितोऽन्यत्र व्याकरणादिव्युत्पत्तिस्थळे समानवित्तिवेद्य[5]त्वासत्त्वस्यान्यत्र नियमेन प्रतीते[6]स्त्वित्यादिपूर्ववाक्ये जातिव्यक्त्योरपि तदसत्त्वस्योक्त्याऽकिञ्चित्करत्वादित्युक्तप्रायत्वादित्यर्थः। तज्ज्ञानत्वयोरिति। जातिज्ञानत्वव्यक्तिज्ञानत्वयोरित्यर्थः। तथाच व्यक्तिज्ञानत्वे[7]न ज्ञात एव जातिज्ञान इत्ययुक्तमिति भावः ॥

---

[1] कायाः—सु. रा. [2] 'इत्युक्तत्वात्' इति नास्ति—सु. रा. [3] तेतीन्द्रिय—प. [4] अन्वयेपि सत्त्वादित्यनेनोक्तत्वादित्यर्थः। इत्यधिकम्—प. [5] द्यत्वस्या—नं. [6] तेरस्त्वि—उ. [7] त्वे ज्ञा—नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च जातिविशिष्टव्यक्तौ शक्त्यभावे तयोर्वि-[1]शिष्टा धीर्न स्यादिति वाच्यम्। त्वन्मते पदार्थ-योरिव जातिव्यक्त्योरपि प्रथमं पदादनन्वितयो-रेवोपस्थितावपि पश्चादाकाङ्क्षादिसहकारेण वैशि-ष्ट्यरूपान्वयधीसंभवात् ॥

न चैकपदोपस्थाप्य[2]योः परस्परमन्वयो न व्युत्पन्न इति वाच्यम्। जीर्णनैयायिकमते एक-लिङ्प्रत्ययोपात्तयोरपि कृतीष्टसाधनत्वयोः सर्वेषां मते एकलट्प्रत्ययोपात्तयोः कृतिवर्तमानत्वयो-रन्वयधीदर्शनात् ॥

---

ननु—जातवेव शक्तिरितिपक्षे जातिविशिष्टव्यक्तिबुद्ध्यनुपपत्त्या तत्र विशिष्टे शक्तिरस्तु। न त्वन्विते। अन्वयधियोऽन्यलभ्यत्वादिति भावेनाशङ्क्याह—न चेति। जातिविशिष्टव्यक्तिबुद्धेरपि तथैवान्य-लभ्यत्वान्न विशिष्टे शक्तिरस्त्वित्याह—त्वन्मत इति। गामानयेत्यादौ गवानयनादिरूपपदार्थयोरिवेत्यर्थः। अनन्वितयोरन्वयविनाकृतयोरित्यर्थः। वाक्ये पदद्वयोपस्थाप्यपदार्थयोस्तथाऽन्वयबोधयोगेऽपि न जातिव्यक्त्यो-रेकशब्दोपस्थाप्यत्वादिति शङ्कते—न चेति ॥

एकलिङिति। ननु[3]तत्र वाचकैक्येपि [4]लिङाख्यातत्वरूप-वाचकतावच्छेदकभेदोस्तीति चेन्न। तस्याप्रयोजकत्वादिति भावः ॥

---

1 वैशिष्ट्य—ग. ज. क.　　2 पितयोः—नं.　　3 यत्र—नं　　एकत्र—ए.
4 पुल्लिङ्गाख्यातत्व—नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च व्यक्तेरन्य[1]लभ्यत्वसंभवेऽपि विभक्त्यर्थीभूतसङ्ख्याकर्मत्वाद्यन्वयार्थं व्यक्तेः पदार्थत्वमुपेयम्, सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य व्युत्पन्नत्वादिति वाच्यम्। अन्वयस्य शब्दवृत्त्यविषयत्वेऽपि शाब्दत्ववद्व्यक्तेरपि प्रकृतिवृत्त्यविषयत्वेऽपि प्रकृत्यर्थत्वस्य संभवेन विभक्त्यर्थान्वयोपपत्तेः ॥

अन्यथा दण्डिनमानयेत्यादौ दाण्डिशब्दप्रतिपाद्ये दण्डविशिष्टपुरुषे कर्मत्वाद्यन्वयो न स्यात्। [2]तन्मते दण्डिशब्दस्य तत्र वृत्त्यभावात् ॥

ननु ज्ञातकरणे संबन्धो यावत्प्रतियोगिकत्वेन ज्ञात एव ज्ञानहेतुः, व्याप्तिरूपे संबन्धे तथादर्श-

---

ननु व्यक्तेरशब्दार्थत्वे शब्दार्थभूतैकत्वा[3]दिसंख्याद्यन्वयो न स्यादतस्तत्र शक्त्यैवोपस्थितिरपेक्षितेत्याशङ्कते—न चेति। अन्वय प्रतिबन्दीमाह—अन्वयस्येति। प्रकृति[4]वृत्तीति। प्रातिपदिकनिष्ठशक्त्यादिरूपवृत्त्यविषयत्वेऽपि शक्य[5]पदार्थान्वयत्वेनान्वयस्येव शक्य जातिसम्बन्धव्यक्तित्वेनोपस्थितस्य प्रातिपदिकरूपप्रकृतिशब्दार्थ[6]त्वं स्यादेवेत्यर्थः। प्रकारान्तरेण व्यक्त्यंशशक्तिज्ञानं जातिविशिष्टव्यक्तिधीहेतुरिति शङ्कते—नन्विति। ज्ञातं यत्करणं गोशब्दादिरूपं तत्संबन्धो जातिव्यक्त्यादिरूपयावत्प्रतियोगिकत्वेनेत्यर्थः। तथेति। व्याप्यव्यापक-

---

[1] रल–रा. [2] त्वन्म–सु. रा. ग. ज. क. [3] त्वसं–ङ. त्वात्सं–नं.
[4] वृत्तिपदं न–ङ. [5] क्य–ङ. क्तिप–नं. [6] र्थः–ङ. नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नादिति व्यक्त्यंशेऽपि शक्तिरूपसंबन्धज्ञानं हेतु-
रिति चेत्त[1]तुल्यमन्वयांशेऽपि । अन्यथा गौरवम् ॥

तस्माल्लाघवं, नागृहीतविशेषणन्यायः, एक-
[2]वित्तिवेद्यत्वं, वृत्त्यभावेऽपि शाब्दत्वासिद्धिः, सं-
बन्धज्ञानस्य यावत्संबन्धिविषयत्वनियमः, इति
युक्तिपञ्चकं व्यक्त्यन्वययोः समम् ॥

व्यक्तिप्रतिबन्धा दुष्परिहरत्वम् ॥ १९ ॥

---

रूपयावत्प्रतियोगिकत्वेन ज्ञाने सत्येवानुमितिहेतुत्वदर्शनादित्यर्थः । अन्यथेति । प्रकारान्तरेण यत्किंचित्प्रतियोगिकत्वेन ज्ञात इति कल्पन इत्यर्थः ॥

प्रागुपपादितं संग्रहेणानुवदन्नुपसंहरति— तस्मादिति । लाघवमिति । शक्त[3]त्वेन [4]जातत्वरूपैकप्रयोजककल्पनाख्यमित्यर्थः । ननु गोत्व इत्यादिनोक्तमाह—नागृहीतेति । एतेनेत्यादिनोक्तमाह—एकेति । न च व्यक्तेरित्यादिनोक्तमाह —वृत्तीति । ननु ज्ञानेत्यादिनोक्तमाह—सम्बन्धेति । सममिति । शक्तिविषयत्वे तदंशेपि शक्तिज्ञानं प्रयोजकमित्यत्रापीति योज्यम् ॥

व्यक्तिप्रतिबन्धा दुष्परिहरत्वम् ॥ १९ ॥

---

[1] तत् इति नास्ति—नं. सु. ग.　तत्कल्प्यमन्वयां—ज. क.　[2] वृत्ति—नं. विभाक्ति—ज.　[3] कथत्वे—नं. ए.　[4] ज्ञा—ए.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ मण्याद्यभिमतकुब्जशक्तिभङ्गः ॥ २० ॥

ननु तथाऽपि ज्ञातकरणे संबन्धः संसर्गिप्रति-योगिकतयैव ज्ञातो हेतुः। न तु संसर्गप्रतियोगि-[1]तयाऽपि, व्याप्तौ तथा दर्शनात्। न हि वह्नि-व्याप्तिर्वह्निप्रतियोगिकतयेव वह्निसंसर्गप्रतियोगि-कतया विज्ञायते। एवं च शक्तिः संसर्गीभूत-पदार्थप्रतियोगिकतयैव ज्ञाता हेतुः। न त्वन्वय-प्रतियोगिकतयेति चेन्मैवम्। व्याप्तिग्राहकमानेन

---

### अथ मण्याद्यभिमतकुब्जशक्तिभङ्गः ॥ २० ॥

प्रकारान्तरेणान्वयांशे शक्तिज्ञानं न शाब्दधीहेतुरित्या[2]क्षिप्य समाधत्ते—नन्नु तथापीति। व्यक्तिप्रतिवन्ध्या दुष्परिहरत्वेपीत्यर्थः। तथा दर्शनादित्युक्तं व्यनक्ति—नहीति। ततः किमित्यतः पक्षे योजयति—एवं चेति। ज्ञातकरणसम्बन्धस्य संसर्गप्रतियोगिकतयैव ज्ञातस्य हेतुत्वे सतीत्यर्थः। हेतुः, शाब्दधीहेतुरित्यर्थः। शब्दशक्तेरपि ज्ञातकरणसम्बन्धत्वादिति भावः। एतदुक्तंभवति—शब्दशक्तिः संसर्ग-प्रतियोगिकतयैव ज्ञाता ज्ञानहेतुः। ज्ञात[3]करणसम्बन्धत्वात्। लिङ्गसम्ब-न्धरूपव्याप्तिवदिति। जातिव्यक्त्योरुभयोरापि संसर्गितयोभयांशे ज्ञाता शब्दशक्तिः जातिविशिष्टव्यक्तिज्ञानहेतुश्चेदापि न तत्र व्यभिचार इति भावः। ज्ञातकरणसम्बन्धत्वाविशेषेऽपि यथाप्रमाणं हेतुत्वं कल्प्यमिति भावेन समाधिमाह—व्याप्तीति। व्यवहाररूपेणेति। मानेनेत्यन्वयः।

---

[1] गिकत—सु. रा. ग. ज. [2] ति शङ्कते—उ. नं. [3] नक—उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वह्निनैव सह व्याप्तिग्रहः, अन्वितविषयकव्यवहार-रूपेण शक्तिग्राहकमानेन त्वन्वयेनापि सह शक्ति-ग्रह इति वैषम्यात् ॥

अन्यथा संसर्गेण सह व्याप्तिः स्वरूपेणैव नास्तीति अन्वयेपि शक्तिः स्वरूपेणैव न स्यात्। व्याप्तिर्व्यापकतावच्छेदक[1]प्रतियोगिकतयाऽपि न ज्ञायत इति शक्तिरपि शक्यतावच्छेदकजातिप्रति-योगिकतयाऽपि न ज्ञातव्या, गौरवादित्यपि स्यात् ॥

---

संसर्गप्रतियोगिकतया व्याप्तिग्राहकमानाभावादेव तेन रूपेणा[2]ज्ञाताया अपि तस्या अनुमितिहेतुत्वेपीह शक्तौ संसर्गिप्रतियोगिकतयाऽपि प्रागुक्तदिशा ग्राहकमान[3]भावेन तेन रूपेण ज्ञाताया एव शाब्दधीहे-तुत्वोपपत्तेरित्यर्थः ॥

एतेन संसर्गप्रतियोगिकतया ग्राहकमानवैधुर्यमुपाधिः प्रागुक्ता-नुमानस्योक्तो भवति। स्वरूपेणैव नास्तीति। तेन सह व्याप्ति-ग्राहकमानाभावादिति भावः ॥

ननु तत्रापि यत्र धूमस्तत्र वह्निसंसर्ग इत्यस्त्येव व्याप्तिरिति वदन्तं प्रति व्याप्तिशरीरप्रविष्टसम्बन्धेन व्याप्त्यभावरूपदोषे सत्यपि जाति-प्रतिबन्दीमप्याह—व्याप्तिरिति। अन्यथेत्यनुषङ्गः। इत्यपि स्यादिति। तथा च पदशक्तिवादसिद्धान्ते जातिव्यक्त्युभयप्रतियोगिकतया ज्ञातैव हेतुरिति त्वदुपपादनविरोध इति भावः। अन्वयप्रतियोगिकतयाऽपि

---

[1] वह्नित्वेत्यधिकम्–नं. सु. रा. ग. ज. क. [2] णज्ञा–ए. नं. [3] नाभा–ए. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न चान्वयस्यापि प्रागुपस्थितौ पदार्थस्येवा-
न्वयस्यापि संसर्गः शाब्दबोधे भासेतेति वाच्यम्।
मन्मते शब्दस्य शक्तिज्ञानसीमकत्वेन तदविषय-
स्यान्वयप्रतियोगिकसंसर्गस्याभानसंभवात् ॥

न च त्वन्मतेऽप्ययं नियमः यः कारणीभूतधी-

शक्तेर्ज्ञानस्य शाब्दधीहेतुत्वे बाधकान्तरमाशङ्क्य निराह—न चेति। प्रागिति। शाब्दबोधात्पूर्वं पूर्वगृहीतशक्तिस्मृतिदशायामेवान्वयस्यापि स्मृतौ सत्यामित्यर्थः। उभयप्रतियोगिकतया शक्तेर्व्युत्पत्तिदशायां ग्रहणे सति शाब्दबोधात्पूर्वं शक्तिस्मृतिदशायामप्युभयप्रतियोगिक[1]त्वेन स्मृते-रावश्यकत्वेनान्वयस्याप्युपस्थित्याऽन्वयनिरूपितसंसर्गोऽपि शाब्दबोधे भायात्। [2]पदात्पदार्थस्य प्रागुपस्थित्या शाब्दबोधे तन्निरूपितसंसर्गवत्प्रागु-पस्थितेः कारणतया तज्जन्यज्ञाने कारणीभूतज्ञानविषयनिरूपितसंसर्गस्यापि भाननियमात्। तथा चानयनान्वयवान् घट इति धीप्रसङ्ग इति भावः। शक्तिज्ञानसीमकत्वेनेति। शक्तिज्ञानमर्यादाकत्वेनेत्यर्थः। यद्विषये शक्तिज्ञानं तद्विषय एव ज्ञानजनकत्वं शब्दस्य स्वभावः। शक्तिज्ञानं च पदार्थे[3]तदन्वये च प्रागासीदिति तयोरेव शाब्दबोधे भानं, न तु [4]संसर्गस्यापि। हेत्वभावादिति भावः॥

न्यायमते ज्ञानयोः कार्यकारणभाव एव पूर्वज्ञानविषयसंसर्गभाने हेतुः। घटत्वनिर्विकल्पजन्ये तत्सविकल्पके तथा दर्शनात्। दण्डज्ञान-जन्ये दण्डीति विशिष्टज्ञाने च दर्शनाच्चेत्यत आह—न च त्वन्मतेऽ-पीति। अयमिति। वक्ष्यमाणः किमयं नियमोपरोक्षज्ञानेऽथ परोक्ष-

[1] त्वे स्मृ–उ. [2] पदादिति नास्ति–उ. [3] तत् इति नास्ति–उ. [4] तत्सं–नं. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विषयः तत्संसर्गः कार्यभूतज्ञाने भासत इति । विशेषणज्ञानतया हेतुभूताया धारावाहिकप्रथमादिबुद्धेर्विषयो यः संसर्गः तत्प्रतियोगिकसंसर्गस्य द्वितीयादिबुद्धावभानात् ॥

न च परोक्षज्ञानेऽयं नियमः । अनुमितिहेतुभूतव्याप्तिज्ञानस्य यो विषयः पर्वतवह्निसंयोगस्तत्समवायस्यानुमितावभानात् ॥

नापि शाब्दज्ञानेऽयं नियमः । हेतुभूतस्य पदार्थज्ञानस्य विष[1]यो जातिव्यक्त्योर्वैशिष्ट्यरूपो यः संबन्धः तत्संसर्गस्य शाब्दप्रमायामभानात् ॥

---

ज्ञान[2]स्थळे । आद्य आह—विशेषणेति । हेतुभूतत्वे हेतुर्विशेषणज्ञानतयेति । यः संसर्ग इति । अयं घट इत्यादिधारावाहिकस्थळे घटपटत्व[3]संसर्ग इत्यर्थः । अभावादिति । अन्यथा ज्ञानानामविशेषानुभवविरोध इति भावः । अन्त्यमाशङ्कते—न चेति । तत्रापि किमनुमितिस्थळेऽथ शाब्दबोधस्थळे । आद्य आह—अनुमितीति । पर्वतवह्निसंयोग इति । [4]यो यो धूमवानसावसावग्निमानिति महानसादौ व्याप्तिग्रहदशायां सामान्यलक्षणप्रत्यासत्त्योपस्थितसमस्तधूमवह्निव्यक्तीनां व्याप्तिग्रहनियमेन पर्वतीयधूमस्यापि पर्वतीयवह्निना व्याप्तिग्रहणे पर्वतवह्निसंसर्गस्यापि सामान्याकारेण ज्ञानविषयत्वादिति भावः । अभानादिति । अन्यथा पर्वतो वह्निसंयोगवानित्येव धीः स्यान्न तु वह्निमानितीति भावः । अन्त्ये द्वितीयमाशङ्क्य निराह—नापीति । हेत्विति ।

---

[1] ययोर्जाति—सु. रा. यजाति—ग. [2] स्थळपदं न—उ. [3] आदिपदमधिकम्—उ. [4] यच्छब्दादःशब्दयोर्वीप्सा नास्ति—उ. ए.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एतेन यथा प्रत्यक्षे विशिष्टज्ञाने विशेष्येन्द्रियसन्निकर्षो विशेष्यभा[1]नसामग्री, विशेषणज्ञानं तु विशेषणभा[2]नसामग्री, [3]इति सामग्रीद्वयसन्निविष्टादसंसर्गाग्रहादेव संसर्गभानमेवं शाब्देऽपि विशिष्टज्ञाने प्रथमान्तादिपदजन्यपदार्थधीर्विशेष्यभानसामग्री, तदितरा तु धीर्विशेषणभा[4]नसामग्रीं[5]ति सामग्रीद्वयसन्निविष्टादसंसर्गाग्रहादेव संसर्गभानं, ततो नान्वयांशे शक्तिज्ञानापेक्षेति निरस्तम्।

---

वाक्यार्थज्ञानहेतुभूतस्येत्यर्थः । विशेष्यभानेति । घटादिरूपविशेष्यभानसामग्रीत्यर्थः । निर्विकल्पकादिरूपं घटत्वादिविशेषणज्ञानं तु घटत्वादिविशेषणभानसामग्री वैशिष्ट्यभानसामग्री तु[6] सामाग्रीद्वयसहिता [7]तदुभयासंसर्गाग्रहरूपैव, न त्वन्यास्ति यथा तथा शाब्दविशिष्टज्ञानेपीत्यर्थः । तदुपपादयति—प्रथमान्तादीति । घटोस्ति घटमानय घटेन जलमाहर ब्राह्मणाय गां देहीत्यादौ प्रथमान्तादिपदजन्येत्यर्थः। विशेष्येति। वाक्यार्थभूतसंसर्ग[8]प्रतियोगिरूपविशेष्येत्यर्थः। तदिति । [9]विशेष्यभूतपदार्थधीभिन्ना[10] क्रियादिपदार्थरूपविशेषणभानसामग्रीत्यर्थः । सन्निविष्टात्, स[11]हितात् । घटानयनादिपदार्था-

---

[1] ज्ञान—नं. [2] विशिष्टभान—ग. रा. णज्ञान—नं. [3] तेनसा—नं. ज. क. इति सामग्री इति नास्ति—सु. रा. ग [4] ज्ञान—नं. [5] ग्रीतेन—नं. इति इतिनास्ति—रा. ग. ज. [6] ग्रीभूतसा—उ. नं. [7] तत्तदु—उ. नं. [8] प्रतियोगिपदंन—उ. नं. प. [9] विशेष्यभूत इति नास्ति—उ. नं. [10] न्ना पदावळी ज्ञानशक्तिस्मरणादिरूपाधीः पदार्थरूप इत्येवमस्ति—उ. नं. प. [11] सन्निहिता—उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्वये शक्तिज्ञानाभावे बाधकानामुक्तत्वात् ॥

मन्मते प्रत्यक्षेऽपि विशेषणविशेष्याभ्यामिव तत्संसर्गेणापीन्द्रियप्रत्यासत्तेर्हेतुत्वेनेहाऽपि प्रत्यासत्तिस्थानीयस्य शक्तिज्ञानस्या[1]प्यन्वयांशेऽप्यपेक्षितत्वाच्च ॥

किं च प्रमाणान्तरेऽपि प्रत्यक्षमर्यादानुसरणस्यावश्यकत्वेऽनुमितावपि पक्षरूपविशेष्यज्ञानं कारणं न स्यात् । प्रत्यक्षे विशिष्टज्ञाने विशेष्यज्ञानस्याहेतुत्वात् । अनुमितिशाब्दज्ञाने प्रति लिङ्गशब्दयोर्ज्ञानं व्याप्तिशक्त्योर्ज्ञानं च हेतुर्न स्यात् । प्रत्यक्षं प्रतीन्द्रियतत्सन्निकर्षयोर्ज्ञानस्याहेतुत्वात् ।

---

संसर्गाग्रहणादित्यर्थः । एतेनेत्युक्तं व्यनक्ति—अन्वय इति । उक्तत्वादिति । अथ मतमित्यादिनान्वयांशेपि शक्तिज्ञानस्याहेतुत्वमाशङ्क्य बाधकानामुक्तत्वादित्यर्थः । तत्संसर्गेणापीति । यद्यपि सिद्धान्ते घटादौ तद्धर्माणां घटादिना न संसर्गः । अभेदोपगमात् । तथाऽपि दण्डीत्यादौ दण्डदेवदत्तसंयोगोपगमेन दण्डदेवदत्ताभ्यामिव तदुभयसंयोगेनापीन्द्रियस्य संयोगरूपप्रत्यासत्तेरङ्गीकारादिति भावः । प्रत्यासत्तीति शब्दस्यान्वयेन सह प्रत्यासत्तीत्यर्थः ॥

ननु न्यायमते प्रागुक्तसामग्रीद्वयसहितादसंसर्गाग्रहादेव प्रत्यक्षस्थल इव संसर्गाग्रहोपपत्तौ नाधिककल्पनावसर इत्यत आह—किं चेति ।

---

[1] अपि इति नास्ति—नं. मु. रा. ग. ज. क.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मादन्वयः पदशक्यो वृत्त्यन्तरं विना शाब्द-
त्वात्पदार्थवदिति ॥

मण्याद्यभिमतकुब्जशक्तिभङ्गः ॥ २० ॥

## अथ भट्टाभिमताभिहितान्वयभङ्गः ॥ २१ ॥

एतेन पदं पदार्थस्मृतिमात्रोपक्षीणं नान्वित-

---

शब्दादिरूपप्रमाणान्तरेऽपीत्यर्थः । तस्मादिति । अनेकसहकारिसाध-
कभावाद्विपक्षे बाधकाभावाच्चेत्यर्थः । अन्वय इति । शब्दार्थनिरूपितो-
न्वयः [1]शब्दशक्तिविषय इत्यर्थः । तेन प्रकृतिप्रत्ययार्थान्वयस्यापि
शक्यतासिद्धिः । गङ्गायां घोष इत्यादौ घोषतीराद्यन्वये व्यभिचारनिरा-
साय हेतौ विनेत्यन्तोक्तिः ॥

मण्याद्यभिमतकुब्जशक्तिभङ्गः ॥ २० ॥

### अथ भट्टाभिमताभिहितान्वयभङ्गः ॥ २१ ॥

ननु—यदुक्तं अन्वयः पदशक्यः वृत्त्यन्तरं विना शाब्दत्वात्प-
दार्थवदिति । तन्न । अनन्यलभ्यत्वस्योपाधित्वात् । पदशक्तिं विनाऽप्य-
न्वयबोधसंभवात् । न च पदान्वयव्यतिरेकानुविधानायोगः । तस्या-
न्यत्रोपक्षयादित्यत आह—एतेनेति । यद्वा शाब्दत्वादित्यासिद्धं अन्वय-
बोधस्य पदार्थकरणकत्वात् शब्दानुविधानस्यान्यत्रोपक्षयादिति मतान्तरं
चानूद्य निराह—एतेनेति । पदार्थ एवेत्येकवचनं जात्यभिप्रायम् ।

---

[1]यशक्तिविषय. उ. नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

बोधकं स्मृत[1]पदार्थ एव तु तद्बोधक इति भाट्ट-मतमपास्तम्। एवं हि शब्दस्य स्मारकमात्रत्वात्पदार्थस्यैवान्वयप्रमाकरणत्वमिति वाच्यम्। न च तद्युक्तम्॥

प्रसिद्धं शब्दं त्यक्त्वाऽप्रसिद्धस्य[2]पदार्थाख्य-प्रमाणान्तरस्य कल्पनेऽनुव्याख्यानोक्तगौरवात्। तस्यातीतानागतादिरूपत्वेन फलभूतमन्वयानुभवं व्यापारा[3]भिमतां पदार्थस्मृतिं च प्रति कारणत्व-स्यैवासंभवेन तद्विशेषस्य करणत्वस्य दूरापास्त-त्वाच्च। न च पदजन्या पदार्थस्मृतिरेव करणं[4]

'पदार्थास्तन्मतिर्वा स्यादिति' भाट्टोक्तेर्निर्व्यापारस्य कथं करणतेत्यत उक्तं स्मृत इति। स्मृति[5]रेवान्तरव्यापार इति भावः। तैरपि पदार्थानामन्वयबोधकत्वं क्वाप्यनुपलब्धं तावत्कल्पनीयमेवेति सुधोक्तिं हृदि कृत्वाऽऽह—एवं हीति॥

पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत।

इत्युक्तेः स्मारकमात्रत्वादित्युक्तम्। अनुव्याख्यानेति। 'गौरवं कल्पनऽन्यथे' त्यनुव्याख्यानोक्तेत्यर्थः। दोषान्तरं चाह—तस्येति। पदार्थस्येत्यर्थः। वृष्टिरासीद्वृष्टिर्भविष्यतीत्यतीतादिरूपत्वेनेत्यर्थः। कारणत्वासंभवदोषपरिहारमाशङ्क्याह—न चेति। करणमिति। अन्वयबोधं प्रतीत्यर्थः। एवमग्रेऽपि। पदानुविधानानुभवाविरोधायोक्तं—पदजन्येति।

[1] तः प—ज. तेःप—क. [2] द्धप—नं. सु. [3] रत्वा-नं. सु. रा. ज. क. [4] कार—नं. सु. रा. ग. [5] रवान्तर—प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रसिद्धत्यागादिदोष[1]द्वयात् । निर्व्यापारत्वाच्च । करणस्य[2] च सव्यापारत्वानियमात् । न च शक्तिः[3] स्मृतिरेवा[4]न्तरव्यापारः । तस्याः पदार्थस्मृत्यजन्यत्वात् । व्युत्पत्तिकाले शब्दस्यैव कारणत्वग्रहणाच्च । शब्देनायमर्थो ज्ञात इत्यनुभवे बाधकाभावाच्च । कारणत्वसंबन्धेनाकाशपदजनिताकाश-

प्रसिद्धेति । प्रसिद्धशब्दत्यागा[5]प्रसिद्धपदार्थस्मृतिरूपसप्तमप्रमाणकल्पनारूपदोषद्वयादित्यर्थः । मण्युक्तं दोषमाह—निर्व्यापारत्वाच्चेति । तस्या इति । शक्तिस्मृतेरित्यर्थः । तज्जन्यत्वे सति तज्जन्यजनकस्यैवेन्द्रियसन्निकर्षादौ व्यापारत्वदर्शनादिह च शक्तिस्मृतेः पदार्थस्मृतिपूर्वभावित्वेन तदजन्यत्वादिति भावः ॥

ननु क्रियाया अयोगव्यवच्छेदेन संबन्धित्वं करणत्वमस्तु । एवं च निर्व्यापारमपि स्मरणं करणं स्यात् । स्मरणव्यापारकं मन एववास्तु करणमित्यतो दोषान्तरमाह—व्युत्पत्तीति । शब्दस्यैव कारणत्वग्रहणाच्च न पदार्थस्मृतिरन्वयबोधं प्रति कारणमित्यनुषङ्गः । प्रथमगृहीतमपि शब्दकारणत्वं त्यज्यताम् । न च शब्देनायमर्थो ज्ञायत इत्यनुभवविरोधान्न त्यागो युक्त इति वाच्यम् । तस्य भ्रमत्वोपपत्तेरित्यत आह—शब्देनेति । पदार्थस्मृतेरेव स्मृतपदार्थान्वयबोधहेतुत्वेऽतिप्रसङ्गं चाह—कारणत्वेति । शब्दगुणकमाकाशमित्यादावाकाशे आकाशपदशक्तिग्रहहीनस्याप्याकाशस्य शब्दमात्रं प्रति कारणत्वादाकाशमिति पदं[6] प्रति

[1] षोद—नं. [2] च इति नास्ति—नं. सु. रा. ग. [3] क्तिस्मृ—नं. सु. रा. ग. [4] वावान्त—नं. ज. क. [5] गोऽप्र—उ. [6] शब्दं प्रति—उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्मृतितः आकाशान्वयबोधप्रसङ्गाच्च[1] । घटः कर्मत्वमानयनं कृतिरित्यादिपदजनितपदार्थस्मृतितोऽप्यन्वयबोधप्रसङ्गाच्च ॥

न च पदविशेषजनिता पदार्थस्मृतिरन्वयबोधाङ्गम् । तथात्वे प्रथमोपस्थितपदविशेषस्यैव हेतुत्वावश्यंभावात् ॥

न च—पदं विनाऽपि पदार्थज्ञानमात्रात् काव्यादिमूलान्वयबोधदर्शनाद्रूपादिश्रवणानन्तरं श्वेताश्वो[2] धावतीति धीदर्शनाच्च, पदार्थज्ञानमेव कारणमिति वाच्यम् । योगजसाक्षात्कारे योगजधर्मसह-

---

कारणत्वसंबन्धेनाकाशस्मृतिमतो आकाशशब्दगुणकत्वाद्यन्वयबोधः स्यादित्यर्थः । पदार्थस्मृतेः करणत्वे मण्युक्तं दोषान्तरं चाह—घट इति पदविशेषेति । घटमानयेत्यादिद्वितीयाविभक्त्यन्तपदविशेषेत्यर्थः । चिन्तावशोपनीतपदार्थानामन्वयबोधात्काव्यादिरिति मण्युक्तं चोद्यमनुवदति—न च पदमिति ॥

पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ॥

इत्युक्तन्यायेनास्त्येव पदार्थानामन्वयबोधकत्वमिति सुधोक्तचोद्यं संक्षिप्याह—हेषेति । करणमन्वयबोधं प्रतीत्यर्थः । पदं विनाऽपीति कृतचोद्यस्य मण्युक्तमेव समाधिं स्पष्टमाह—योगजेति । उत्प्रेक्षानामोहजस्तर्कजं ज्ञानमित्याहुः ॥

---

[1] कारणत्वसंबन्धेनेत्यारभ्य नास्ति—सु. रा.　[2] तोऽश्वो—नं. ज. श्वेतोधा—ग. क.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कृतस्य मनस इव काव्यादिमूलसंसर्गानुभवे उत्प्रेक्षासहकृतस्य तत्तदर्थस्मृतिव्यापारकस्य मनस एव करणत्वात् ॥

अन्यथा गौरवात् ॥

अत एव नोत्प्रेक्षादेर्मानान्तरत्वापत्तिः। तस्या-लोक[1]वन्मनःसहकारित्वात् । श्वेतो[2] धावतीति धीस्तु, तवार्थापत्त्या, मम तु अयं कालागरु-वह्निमान् नीलसुरभिधूमवत्त्वादितिवदयं श्वेतो धाव-दश्वो हेषाखुरनिष्पेपवत्त्वादित्यनुमानेन। अन्यथाऽ-नुमानमात्रोच्छेदः स्यात् ॥

---

गौरवादिति । प्रसिद्धत्यागादिदोषद्वयगौरवादिति मूलारूढ-तोक्तिः। अत एवेत्युक्तं व्यनक्ति—तस्येति । अन्यथाऽऽलोकस्यापि पृथङ्मानत्वापत्तिरिति भावः । हेषादीत्यादिचोद्यस्यानुमानादर्थापत्तेर्वा तत्रान्वयप्रतीतेरिति सुधोक्तसमाधिं स्पष्टयति—तवेति । पक्षधराद्युक्त-दिशा प्रयोगं[3] व्यनक्ति—श्वेत इति । श्वेत इति पक्षः धावदश्व इति साध्यम्। अन्यथेति। तत्रापि पदार्थानामेवान्वयबोधकत्वे सर्वत्रानुमान-स्थले स्मृतव्याप्त्यादिपदार्थस्यैव साध्यान्वयानुभावकत्वसंभवादिति भावः। उक्तं च मणिकृताऽपि श्वेतोऽश्वो धावतीति धीस्तु लिङ्गजेति ॥

नन्वेवं वाक्ये पदार्थस्मरणमभ्युपेत्य तस्योक्तदिशा निर्व्यापार-त्वादिनाऽन्वयबोधं प्रत्यकरणत्वोक्तौ न्यायमत इव [4]वाक्ये पदार्थे स्मृति-

---

[1] का.दि–सु. रा. ग. ज. क. [2] अश्व इति पूरितम्–नं. सु. रा.
[3] जनं–उ. [4] पदार्थे वाक्यस्मृति –उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वस्तुतस्तु मन्मते वाक्यस्थपदज्ञा[1]नान्वयानु-भवयोर्मध्ये पदार्थस्मृतिरेव नास्ति । कदापि स्मरामीत्यनुव्यवसायाभावात् ॥

[2]कल्पने च गौरवात् । अवाक्यस्थ[3] पदं ताव-त्स्मारकमेवेतिचेत्किं तावता । न ह्यसहायस्य य-त्कार्यं तदेव ससहायस्याऽपि । तथात्वे हीन्द्रिय-सहितसंस्कारजन्या प्रत्यभिज्ञाऽपि स्मृतिः स्यात् ।

---

रङ्गीकृता स्यात् । तथा च पदनिचयश्रवणेत्यादिवक्ष्यमाणसुधावाक्य-विरोध इत्यत आह --वस्तुतस्त्विति । यद्वा पदकदम्बश्रवणसमन-न्तरं कुतश्चिन्मानसापराधादनुपजातपदार्थस्मृतेर्वाक्यार्थबोधानुदयादुपजा-तपदार्थस्मृतेस्तदुदयादन्वयव्यतिरेकाभ्यां पदस्मारितपदार्थानां वाक्यार्थ-बोधकत्वमुपेयमित्यतः शक्तिस्मरणभावाभावाभ्यामन्यथोपपत्तेरिति भावे नाह—वस्तुतस्त्विति । अन्यथेति । अननुव्यवसीयमानपदार्थ-स्मृतिकल्पने 'गौरवं कल्पनेऽन्यथे' त्यनुव्याख्यानोक्तगौरवादित्यर्थः ॥

ननु वाक्ये पदार्थान्स्मरामीत्यनुव्यवसायाभावेऽपि वाक्यस्थं पदं पदार्थस्मारकं पदत्वादेकैकशः श्रूयमाणवाक्यस्थपदवदित्यनुमानात्स्मारक-त्वसिद्धिरिति शङ्कते—अवाक्यस्थमिति । असहायपदत्वमुपाधिरिति भावेन सुधोक्तमेव समाधिमाह—किं तावतेत्यादिना । अस्तु को दोष इत्यत आह—तथात्व इति । असाहयस्य यत्कार्यं [4]तत्ससहायस्या-प्यङ्गीकार इत्यर्थः ॥

ननु प्रत्यभिज्ञायाः संस्कारजन्यत्वेऽपीन्द्रियप्रत्यासत्तित्वेनैव सं-

---

[1] तान्व—नं.  [2] अन्यथा गौर—सु. रा. ग.  [3] क्यप—सु. रा.
[4] त्सहा—नं.



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इन्द्रियलिङ्गाभ्यां सन्निकर्षव्याप्त्योरिव शब्देनापि शक्तेरनुभवरूपे [1]स्वफले जनयितव्य एव स्वविषयेण सह संबन्धत्वेनान[2]पेक्षितत्वाच्च ॥

अन्यथा व्याप्तिरपि वह्नेः स्मारिका स्यात् । व्युत्पत्तिकालेऽनुभवहेतुत्वेन गृहीतया शक्त्येदानीमप्यनुभव[3]स्यैव जनयितव्यत्वाच्च । हस्तिना हस्तिपकस्मृतेरिव पदेन पदार्थस्मृतेरपि व्युत्पत्ति-

---

स्कारजन्यता न तु संस्कारत्वेन तथात्वेन तज्जन्यस्यैव स्मृतित्वं शब्दे त्ववाक्यस्थळ इव वाक्यस्थळेऽपि शक्तित्वेन शक्तेः पदार्थोपस्थितिहेतुत्वात्स्मृतित्वमेव युक्तमित्यत आह—इन्द्रियेति । इन्द्रियलिङ्गाभ्यस्वविषये ज्ञाने जनयितव्ये यथाक्रमं सन्निकर्षव्याप्त्योर्यथा संबन्धत्वेनापेक्षितत्वं तथा वाक्य[4]स्मृतशब्देनापि स्वार्थगोचरानुभवे जनयितव्ये शक्तेः संबन्धत्वेनैवापेक्षितत्वेन स्मृतित्वानापत्तेरित्यर्थः ॥

ननु शब्द एव शक्तेः स्मारकत्वनियमो नान्यत्रेति मन्वानं प्रत्याह—व्युत्पत्तीति । वृद्धव्यवहारादिना शक्तिग्रहणकाल इत्यर्थः । न चैवं केवलपदस्यापि स्मारकत्वं न स्यादिति वाच्यम् । व्युत्पत्तिकाले[5]ससहायत्वेनैव श्रुतस्य शब्दस्यानुभावकशक्तिमत्वेन ग्रहणेन वाक्य एवानुभवजनकत्वोपपादनस्याभिमतत्वेनासहाये अनुभवसामग्र्यभावादेव स्मारकत्वोपपत्तेः ॥

ननु तु स्मारकत्वेनागृहीतायाः शक्तेरवाक्यस्थळे कथं स्मारकत्वमित्यतस्तत्र शक्तेर्न स्मारकत्वं किं तु शब्दज्ञानमेव शब्दार्थस्मारकमिति सदृष्टान्तमाह— हस्तिनेति । स्मृतेरपीति । संभवेनेत्यन्वयः । पदार्थ-

---

[1] पेस्य—नं. [2] नापे—ग. क. [3] वेन ज्ञाने—ज. क. [4] स्थ शब्दे—ए.
[5] लेस—नं. ए. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

काले सहानुभूतत्वरूपसंबन्धादेव [1]संभवेन स्मरणार्थं शक्तेरनपेक्षितत्वाच्च। संबन्धज्ञानस्य संबन्धिज्ञानपूर्वकत्वनिय[2]तिस्तु प्रत्यक्ष एव। न तु शब्दे। संयोगोस्तीत्यादि[3]शब्दात्संयोगिज्ञानं विनाऽपि संयोगानुभवात् ॥

न चैवं[4] पदार्थस्मृतिरूपावान्तरव्यापाराभावाच्छब्दस्य कथं प्रमाकरणत्वमिति वाच्यम्। [5]शक्ति-

स्मरणार्थं शक्तेरनपेक्षितत्वादित्यर्थः। स्मारकत्वेन साहचर्यनियमो नावश्यक इति सूचनाय हस्तिनेति दृष्टान्तोक्तिः। तथा चानन्यथासिद्धत्वादनुभव एव शक्तेरुपयोगः स्वीकार्य इति भावः ॥

नन्वन्वयरूपपदार्थसंबन्धस्य घटमानयेत्यादिवाक्यार्थरूपान्वयस्य पदार्थसंबन्धरूपत्वात्तत्र च पदार्थयोः संबन्धित्वात्संबन्धज्ञानस्य च संबन्धिज्ञानपूर्वकत्वस्य घटपटसंयोगादिप्रत्यक्षे दर्शनात्पूर्वं पदार्थज्ञानं पश्चादन्वयरूपसंबन्धज्ञानं वाच्यम्। तथा च कथं मध्ये पदार्थस्मृतिरेव नेत्युक्तिरित्यत आह—संबन्धेति। एतेन विशेषणज्ञानजन्यत्वाद्विशिष्टज्ञानस्येति पदार्थस्मृतिरावश्यकीति निरस्तम्। विशेषणज्ञानहेतुताया निरासात् ॥

यत्तु मणौ [6]पदार्थस्मरणं व्यापारः, आकाङ्क्षादिसहकारिवशात्स्मारितार्थान्वयानुभवः फलमित्युक्तं तद्धृदि कृत्वा शङ्कते—न चैवमिति। मध्ये पदार्थस्मृतेरभाव इत्यर्थः। [7]सङ्गति

[1] स्मरणेत्यधिकम्—ज. ग. क. रा. सु. [2] यम—ज. ग. क. रा. सु. [3] तिश—ज. [4] वमर्थ—ज. ग. क. रा. सु. [5] सङ्गतिस्मृतेरे—ग. रा. सु. [6] पदं करणमित्यधिकम्—नं. प. उ. [7] शक्तिस्मृ—नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्मृतेरेव व्यापारत्वात् । स्वीकृताहि त्वयाऽपि शब्द[1]ज्ञानार्थस्मृत्योर्मध्ये शक्तिस्मृतिः ॥

उक्तं हि सुधायाम् । पदनिचयश्रवणवाक्यार्थ-बोधा[2]वन्तरा पदार्थस्मृतीनामेवानभ्युपगमादिति॥

तस्मादनन्यलभ्यत्वात्सिद्धं शब्दस्यान्विताभि-धायित्वम् ॥

---

स्मृतेरेवेति । शब्दज्ञानस्य करणत्वा[3]त्सङ्गतिस्मृतेश्च शब्दज्ञानजन्यत्वा-च्छब्दज्ञानजन्यान्वयानुभवजनकत्वाच्च व्यापारत्वमिति भावः ॥

ननु शक्तिरन्वयांशे स्वरूपसती पदार्थांशे तु ज्ञातोपयुज्यत इति कुब्जशक्तिपक्षे पदज्ञानान्वयबोधयोर्मध्ये शक्तिज्ञानं नास्त्येवेति कथं तस्य व्यापारतेत्यत आह—स्वीकृता हीति । पदार्थस्मृत्यर्थं त्वयाऽप्यङ्गीकृतत्वादस्माभिश्चान्वयांशेऽपि शक्तिज्ञानमावश्यकमिति साधितत्वाच्च भवति शक्तिज्ञानमवान्तरव्यापार इति भावः । उक्तं हीति । पदज्ञान-वाक्यार्थबोधयोर्मध्ये पदार्थस्मृतिर्नेत्येतत् "गौरवं कल्पनेऽन्यथे" त्येतद्व्याख्यावसरे जिज्ञासाधिकरणसुधायामुक्तमित्यर्थः । बोधाविति द्वितीया द्विवचनम् । 'अन्तरान्तरेणयुक्त' इत्यन्तराशब्दयोगे द्वितीया विधानात् ॥

भङ्गार्थं साध्योक्तिपूर्वमुपसंहरति—तस्मादिति । तस्यार्थः अनन्यलभ्यत्वादिति । उपपादितदोपान्वुद्धयारोहार्थम् सङ्ग्रहेणानुवदति—

---

[1] शाब्द-नं. दीर्घो मार्जितः—मु. [2] धावान्तरपदा—रा. सु.
[3] च्छक्तिस्मृ—नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मात्पदार्थस्मृतेः [1]कारणत्वे प्रसिद्धत्यागः, अप्रसिद्धस्वीकारः, अवान्तरव्यापाराभावः, प्राथमिक[2]व्युत्पत्तिविरोधः, अनुभवाविरोधः, [3]कारणत्वेन संबन्धेनाकाशस्मृतितोप्यन्वयधीप्रसङ्गः, घटः कर्मत्वमित्यादिपदजनितस्मृतितोप्यन्वयधीप्रसङ्गः, पदार्थस्मृतौ प्रमाणाभावश्चेति, दोषा[4]ष्टकम् ॥

भाट्टाभिमताभिहितान्वयभङ्गः ॥ २१ ॥

---

तस्मादिति । पदार्थस्य तत्स्मरणस्यान्वयबोधकरणत्वस्वीकाराद्दोषा[5]ष्टकमित्यन्वयः । यद्वोक्तमध्ये कस्याप्यपरिहार्यत्वादित्यर्थः । यद्वा शब्दस्यान्विताभिधायित्वात्तदनभ्युपगमे दोषाष्टकमित्यर्थः । प्रसिद्धत्यागादिदोषद्वयादित्युक्तमाह—प्रसिद्धेति । निर्व्यापार[6]त्वाच्चेत्युक्तमाह—अवान्तरव्यापारेति । व्युत्पत्तीत्यनेनोक्तमाह—प्राथमिकेति । शब्दे(ने)त्यनेनोक्तमाह—अनुभवेति । कारणत्वे[7]त्यनेनोक्तमाह—कारणत्वेति । घटः कर्मत्वमित्यादिनोक्तमाह—घट इति । वस्तुतस्त्वित्यादिनोक्तमाह—पदार्थेति ॥

भाट्टाभिमताभिहितान्वयभङ्गः ॥ २१ ॥

---

1 कर-नं. दीर्घो लोपितः-ज. मु　2 केव्यु-नं. एकारो नाशितः-मु.　3 इदमापादानं नास्ति-ग.　4 दोषाः सप्तकम्-ग.　5 षसप्त-नं. अष्टकमिति शोधितं-ङ.　6 त्वाच्चे-नं.ए.　7 त्वेनेत्य-ङ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ अन्वस्य लक्ष्यत्वभङ्गः ॥ २२ ॥

एतेन—पदार्थमात्रे शक्तस्य पदस्य पदार्थे संबन्धिन्यन्व[1]ये लक्षणैवेति निरस्तम् । उक्तरीत्यान्वयेऽपि शक्तेः क्लृप्तौ[2] परम्परासंबन्धरूपलक्षणाङ्गीकारे[3]ऽनुव्याख्यानोक्तगौरवात् ॥

## अथ अन्वस्य लक्ष्यत्वभङ्गः ॥ २२ ॥

नन्वनन्यलभ्यत्वादित्यसिद्धम् । लक्षणयाऽपि तद्बोधसंभवादित्यत आह—एतेनेति । गौरवदोषेणेत्यर्थः । यथा प्रवाहे शक्तस्य गङ्गापदस्य तत्संबन्धिनि तीरे लक्षणा तथेति भावः । उक्तेति । ननु कथमन्विते शक्तिरित्यादिनोक्तरीत्येत्यर्थः । परम्परेति । शक्यार्थसब[4]न्धित्वरूपपरम्परेत्यर्थः । एकयैव शक्त्यैव[5] पदार्थतदन्वययोरभिधानसम्भवाल्लाघवं शक्तिपक्ष इति भावः ॥

ननु लक्षणापक्षे हस्तिना हस्तिपस्मृतेरि[6]वेत्यादिना पूर्वोक्तिदिशा शक्तिं विनाऽपि पदार्थस्मृतिसम्भवेन पदार्थेष्वपि शक्तिर्नोपेयेति लाघवमिति चेन्न । तथात्वे क्वाप्यभिधानवृत्तेरभावेन लक्षणामात्रोच्छेदापत्तेः । वाच्यार्थसम्बन्धपूर्वकत्वात्सर्वत्र लक्षणायाः । अत एव प्राक्पदार्थमात्रे शक्तस्येत्युक्तम् । या तु सुधाया "मन्वयो[7]लक्ष्यत इति चेत्तर्हि पदार्थेषु साहचर्यात्स्मारकत्वमात्रम् । अन्वये तु लक्षणेति पदानां न कुत्राप्य·

[1] न्विते—नं. ज. क. [2] क्लृप्ताविति नास्ति—नं. संभवे—ग. रा. सु. [3] रे गौर—नं. [4] न्धिरू—नं. उ. [5] एवकारो नास्ति—उ. [6] रेवेत्या—नं उ. [7] योपिल—नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किं चैवं "वेला तत्तीरनीरयो" रित्यनुशासनात्केवल[1]तीरे शक्तस्य वेलापदस्य केवलमात्सर्ये शक्तस्य मत्सरपदस्य [2]विशिष्टे लक्षणासंभवेन, तत्र शक्तिर्न स्यात्। एवं जातिमात्रे शक्तस्य गवादिपदस्य जात्याकृतिविशिष्टव्यक्तौ[3] च लक्षणासंभवेन जात्याकृतिविशिष्टव्यक्तौ शक्तिश्च न स्यात्। यदि च वेलादिपदस्य नीरादौ तद्विशिष्टतीरादौ च प्रयोगप्राचुर्यान्नीराद्यनुपपत्त्य[4]नुसंधानं विनैव विशिष्टप्रतीतेश्च न तत्र लक्षणा; तर्हि तत एवान्वय विशिष्टेपि न लक्षणा ॥

किं च वाच्यार्थसंबन्धितया धीस्थ एवार्थे लक्षणा।

---

भिधा[5]वृत्तिरिति स्या"दित्युक्तिः सा साहचर्यात् स्वार्थान् स्मारयन्त्यन्य[6]पराणि पदानीति पूर्वप्रकृतमतान्तराभिप्रायेति [7]ज्ञातव्यम् ॥

अतिप्रसङ्गं चाह—किं चैवमिति। एकैकत्र शक्तस्यान्यत्र तत्सम्बन्धिनि प्रयोगप्राचुर्यसत्त्वे लक्षणामुपेत्य शक्त्यपलापे सतीत्यर्थः। तत्तीरेति। नीरविशिष्टतीरेत्यर्थः। विशिष्टेति। नीरविशिष्टे[8] मात्सर्यविशिष्टे चेत्यर्थः। परमुखेनैव हेतुद्वयोक्तिपूर्वं समाधिं वाचयति—यदि चेति। तत एवेति। त्वदुक्तहेतुद्वयादेवेत्यर्थः। द्विविधं हि लक्षणाबीजम्। वाच्यार्थसम्बन्धित्वेन धीस्थत्वं, अन्वयानुपपत्तिश्चेत्येतद्विविधलक्षणाबीजाभावान्न लक्षणा युक्तेत्याह—किं चेति। अपि चेति च[9]।

---

[1] नीरे–ज. ग. क. रा. सु. [2] स्य चवि–नं. ग. चाविशिष्टेन–रा. सु.
[3] क्तयाल–सु. [4] त्तिप्रतिसं–नं. रा. सु. [5] न वृत्तिः स्या–नं. [6] न्वयप–नं. उ.
[7] ज्ञेयम्–प. नं. [8] मत्स–उ. [9] च इति नास्ति–प. नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न चान्वयविशेषो वाच्यार्थसंबन्धितया धीस्थः। अपि च प्रतीतान्वयानुपपत्त्यैव लक्षणेति लक्षणातः प्रागन्वये धीः स्वीकार्येति कथं लक्षणयाऽन्वयधीः ॥

तस्मादन्वयस्य लक्ष्यत्वे—वृथैव क्लृप्तशक्तित्यागोऽतिप्रसङ्गो [1]वाच्यार्थसंबन्धितयोपस्थितिरूपलक्षणाहेत्वभावः प्रतीतान्वयानुपपत्तिरूपलक्षणाबीजाभावश्चेति दोषचतुष्टयम् ॥

अन्वयस्य लक्ष्यत्वभङ्गः ॥ २२ ॥

## अथ प्राभाकरोक्तपदशक्तिभङ्गः ॥ २३ ॥

पदार्थस्तु व्यक्तिरेव । शक्तिग्राहकस्यानयनादि

---

न चान्वयविशेष इति । तस्यापूर्वत्वेन वाक्यैकबो[2]धस्य प्रागनुपस्थितेरिति भावः । शेषस्तु स्पष्टः ॥

अन्वयस्य लक्ष्यत्वभङ्गः ॥ २२ ॥

[3]इति प्रकरणसप्तकात्मकान्विताभिधानवादः ॥

अथ प्राभाकरोक्तपदशक्तिभङ्गः ॥ २३ ॥

नन्वन्विते पदार्थे पदानां शक्तिरित्युक्तम् । तत्र कः पदार्थः किं जातिरुत व्यक्तिरिति तत्राह—पदार्थस्त्वित्यादिना—प्रकरण-

---

[1] पदार्थसं–ज. क. [2] ध्यस्य–ए. उ. [3] एवं प्रकरणसप्तात्मको अन्विताभिधानवादः समाप्तः–ए. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यवहारस्य तत्रैव संभवात् । अन्यथा शब्दात्त-त्प्रतीतेरसंभवाच्च ॥

अत्र प्राभाकराः—

अनिर्धारितयत्किंचिद्व्यक्तेः शक्यत्वे का व्यक्तिश्शक्येत्यनध्यवसायेन गांदद्यादित्यादि वाक्यात्प्रवृत्तिर्न स्यात् । सर्वस्याः प्रत्येकं शक्यत्वे यत्र शक्तिग्रहस्तत्रैव शाब्दधीः स्यात् । अन्यत्र तु तदग्रहादपूर्वव्यक्तिधीर्न स्यात्[1] । सर्वत्वेन शक्यत्वे[2] गांद-

पञ्चकेन । पदस्य शक्यान्वयप्रतियोग्यर्थस्त्वित्यर्थः । व्यक्तय एव वाच्या इति पद्धत्युक्तेरिति भावः । अत्रैवकारः पराभ्युपगतानुगतजातिव्यावर्तको न तु घटत्वादितत्तदसाधारणधर्मनिरासकः । तस्यापि वाच्यत्वात् । यद्वा घट[3]त्वादेर्वाच्यत्वेऽपि वाच्यतावच्छेदकत्वेनैव न तु प्राधान्येनेति तदभिप्रायेणैवकारः । न तु तस्यावाच्यत्वेनेत्यग्रे व्यक्तम् । अन्यथेति । व्यक्तौ शक्तेरभाव इत्यर्थः । अत्रेति । व्यक्तेः शक्यत्वपक्षे दोषमाहुः प्राभाकरा इत्यर्थः । पदशक्तिवादपूर्वपक्षे मण्युक्तं निष्कृष्याह—अनिर्धारितेत्यादिना उच्यत इत्यन्तेन ॥

व्यक्तौ शक्तिरिति वदता वक्तव्यम् किमेकस्यां व्यक्तावथ सर्वासु व्यक्तिष्विति । अन्त्येपि किं प्रत्येकं तत्तद्व्यक्तिषु पृथक्पृथक्शक्तिरुत सर्वत्वेन रूपेण सर्वास्वपि व्यक्तिष्वेकैव । आद्ये दोषोनिर्धारितेति । द्वितीय आह—सर्वस्या इति । एकदा सर्वासामुपस्थित्ययोगेन प्रत्येकं सर्वासु शक्तिग्रहायोगेन क्वचिदेवेति वाच्यत्वादिति भावः । तृतीय आह—सर्वत्वेनेति । गामिति पदेन सर्वगोव्यक्त्युपस्थित्या सर्वा-

[1] अन्यत्र त्वित्यारभ्य नास्ति—रा. सु. [2] त्वेन च गां—रा. सु. [3] टादे—नं. उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्यादित्यादिशास्त्रमशक्यानुष्ठानार्थोपदेशकं स्यात्।
तस्माच्छक्यव्यक्त्यनुगमायाशक्यव्यक्तिव्यावृत्त-
ये च सर्वेकौदासीन्येन विशेषणेन वोपलक्षणेन
वा गोत्वेनावच्छिन्ना व्यक्तिः शक्येति शक्तिग्रहो
वाच्यः। तथा च स्वत एवान्यव्यावृत्तगोत्वस्य
प्रथमोपस्थितत्वाल्लघुत्वाच्च नागृहीतविशेषणन्या-
येन जातिरेव शक्या ॥

ननु व्यक्तौ शक्त्यभावे कथं शब्दात्तद्धीरिति
चेत्। सत्यम्। पदेन जातिविशिष्टव्यक्तिज्ञान-

---

सामपि दानकर्मत्वप्रतीतेरिति भावः ॥

एवं व्यक्तिपक्षे बाधकमुक्त्वा स्वपक्षमुपसंहारमुखेन सयुक्तिकमाह—तस्मादिति। केवलव्यक्तौ शक्तिपक्षस्यायोगादित्यर्थः। शक्येति। शक्यानां व्यक्तीनामनुगमाय सङ्ग्रहाय, अशक्यानामश्वादीनां व्यवच्छेदाय चेत्यर्थः। विशिष्टं शक्यमिति पक्ष आह—विशेषणेनवेति। गोत्वेनेत्यन्वयः। व्यक्तिमात्रमेव शक्यमिति पक्ष आह—उपलक्षणेनवेति। किं तत इत्यत आह—तथाचेति। गोत्वरूपधर्मेणैव गोव्यक्तीनामनुगतत्वान्यव्यावृत्तत्वयोः संपाद्यत्वे सतीत्यर्थः। स्वत एवेति। व्यक्तिवदनुगतधर्ममुखापेक्षां विनैवेत्यर्थः। अन्यशक्तात्पदादन्यज्ञानायोगाद्गोपदाद्गोव्यक्तिधीरनुभवसिद्धा न स्यादिति भावेन शङ्कते—नन्विति ॥

यत्तु मणौ प्राभाकरमतानुवादप्रस्तावे कुतस्तर्हि व्यक्तिधीरित्याशङ्क्य गोपदं हि नियमतो जातिव्यक्ती बोधयतीत्यादिना प्राभाकरमतमनूदितं तन्निष्कृष्याह—सत्यमित्यादिना। शक्तिज्ञानस्य सहका-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जननाद्विशिष्टे शक्तिरस्त्येव । किं त्वगृहीतशक्तिकस्य [1]बालस्यार्थाबोधात्कुत्र चिच्छक्तिज्ञानं सहकारि कल्पनीयम् । तत्र जात्यंशे शक्तिज्ञानस्यैव जातिशक्तिज्ञानत्वेन कारणता कल्प्यते । कार्यता तु जातिविशिष्ट[2]शाब्दज्ञानत्वेन । न तु जातिविशिष्टशक्तिज्ञानत्वेन कारणता । जात्यंशे शक्तिज्ञाने सति जातिविशिष्टे शक्तिज्ञानव्यतिरेकेण जातिविशिष्टव्यक्तिविषयकशाब्दबोधव्यतिरेकादर्शनात् ॥

यद्वा जातिशक्तिज्ञानत्वेनैव कारणता । जाति[3]शब्दज्ञानत्वेनैव कार्यता च । जातिभानसामग्री तु

---

रित्वे युक्तिरगृहीतेत्यादि । पक्षधरोक्तं निष्क[4]र्षमाह—तत्रेति । जात्यंशे शक्तिज्ञानस्यैव । न तु व्यक्त्यम्शे शक्तिज्ञानस्यापीत्येवकारार्थः ॥

नन्वन्यज्ञानेनान्योत्पत्तावातिप्रसङ्ग इत्यतस्तद्विशिष्टत्वं नियामकमिति भावेनाह—जातिविशिष्टेति । कुत इत्यतो विशिष्टशक्तिज्ञानत्वेन कारणताग्राहकमानाभावादित्याह—जात्यंश इति । अन्यज्ञानेनान्यज्ञानोत्पत्तावतिप्रसङ्गनिरासाय तद्विशिष्टत्वं नियामकमेकमुक्तम् । समानसंवित्संवेद्यत्वरूपनियामकान्तरं च । अथ वा जातिशक्तिज्ञानाज्जातिधर्मिभवन्ती व्यक्तिमपि बोधयतीत्यादिना मण्युक्त[5]माह—यद्वेति ।

---

[1] वाक्यस्यार्थां–नं. [2] "शक्तिज्ञानत्वेन," इति ततः 'जात्यंशे' इत्यादिर्नास्ति–नं. क. [3] शाब्द–नं. मु. रा. [4] कृप्या–नं. उ. [5] क्तं नियामकान्तरमा–नं. प. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जातेर्व्यक्तिघटितमूर्तित्वेन व्यक्तिमनादाय जातिबोधना[1]शक्ता तामादायैव जातिं बोधयति । [2]यथा बुद्धिमद्धेतुकानुमितित्वेन कार्यत्वे[3] बुद्धिमद्धेतुकव्याप्य[4]त्वेन च [5]कारणत्वे सिद्धे क्षित्यादौ कार्यत्वेन हेतुना जायमानानुमितिर्बुद्धिनित्यत्वमादाय पर्यवस्यति । एतदेव हि समानसंवित्संवेद्यत्वम्, यदन्यबुद्धित्वावच्छिन्नकार्यताप्रतियोगिककारणादन्यत्र बुद्धिर्भवतीति ॥

---

व्यक्तिघटितेति । गोत्वादेर्गवादिव्यक्तिनिष्ठधर्मविशेषरूपत्वादिति वाऽनेकव्यक्तिवृत्तित्वरूपत्वादिति वा तात्पर्यम् । स्वयं दृष्टान्तमाह—यथेति । क्षित्यादिकं बुद्धिमद्धेतुकं कार्यत्वात् घटवदितीश्वरानुमाने क्षित्यादिनिष्ठकार्यत्वहेतुना क्षित्यादेः [6]सिद्धयद्बुद्धिमज्जन्यत्वं नित्यबुद्धिमज्जन्यत्वं सिध्यति । बुद्धेर्नित्यत्वं विना क्षित्यादिनिष्ठकाय[7]त्वस्यायोगात् । लोके घटादिकार्ये च बुद्धिमद्धेतुकत्वगोचरानुमितित्वेन बुद्धिमज्जन्यत्वव्याप्यकार्यत्ववत्त्वेन कार्यकारणभावग्रहो न नित्यत्वगर्भितबुद्धिमद्धेतुकत्वानुमितित्वेनापि । तथाऽपि यथा क्षित्यादौ विशेषसिद्धिस्तथेत्यर्थः ॥

किमनेन नियामकमुक्तं स्यादित्यत आह—एतदेव हीति । एतदित्युक्तं व्यनक्ति—यदिति । जातिशाब्दज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणाज्जातिशक्तिज्ञानाज्जातिविशिष्टे बुद्धिरित्यर्थः । ईश्वरानु-

---

[1] शक्तत्वात्ता–नं. शक्तेस्ता–ज. शक्यत्वात्ता–रा. सु. [2] तथा–ग. क. [3] त्वेन बु–रा. सु. [4] प्यवत्त्वे–ग. नं. [5] कारणत्वे इति नास्ति–रा. सु. [6] शुद्धबुद्धिमज्जन्यत्वं सिद्धयति–नं सिद्ध–उ. [7] र्यस्या–नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उच्यते—

येन रूपेणोपस्थिते संबन्धिनि यस्य संबन्धो गृह्यते तेन रूपेणैकसंबन्धिप्रतीतिरपरसंबन्धिनं ज्ञापयतीत्यनुमित्यादौ क्लृप्त[1]कार्यकारणभावसा-

मानेऽपि बुद्धिमज्जन्यत्वानु[2]मितिं विशिष्टव्यक्तौ शब्दशक्तिमुपेत्यापि शक्तिज्ञानस्य जातिशक्तिज्ञानत्वेनैव जातिविशिष्टव्यक्तिज्ञानं प्रति कारणत्वं तत्र च तद्विशिष्टत्वं वा तदेकवित्तिवेद्यत्वं वाऽतिप्रसङ्गभञ्जकं नियामकद्वयम्, तदुभयमपि निराह—येन रूपेणेति । धूमत्वादिना रूपेणोपस्थिते धूमादौ संबन्धिनि यस्य संबन्धः यन्निरूपितः संबन्धो वह्निनिरूपितो व्याप्तिलक्षणः संबन्धो गृह्यते, तेन रूपेण धूमरूपैकसंबन्धिप्रतीतिः वह्निलक्षणमपरसंबन्धिनं ज्ञापयतीत्यनुमितिस्थळे हस्ति हस्तिपादिस्मृत्यादिस्थळे च क्लृप्तम् । तथैव शब्दस्थळेऽपि गोपदत्वेन रूपेण गोपदरूपे संबन्धिन्युपस्थिते गोत्वविशिष्टगोव्यक्तिनिरूपितः शक्तिलक्षणः संबन्धोगृहीत इति गोपदत्वेन रूपेण गोपदरूपैकसंबन्धिप्रतीतिरपरं गोरूपं जातिविशिष्टमर्थं ज्ञापयतीत्युपपद्यते, तथा च गोपदज्ञानत्वेनैव गोरूपार्थज्ञानत्वेन च कार्यकारणभावसंभवे जातिविशिष्टव्यक्तिज्ञाने जातिशक्तिज्ञानत्वेन कारणभूतजातिशक्तिज्ञानरूपसामग्र्यन्तरकल्पने गौरवमित्यर्थः । स्वार्थे व्यक्तावित्युक्त्या—

शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ।
अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा ॥

[1] संका—नं. ग. क. रा. सु. [2] तित्वावच्छिन्नकार्यताप्रतियोगिककारणाद्बुद्धिमद्धेतुकत्वव्याप्यकत्वान्नित्यबुद्धिमद्धेतुकत्वेनानुमितिर्भवतीति यदेतदेवेत्यर्थः । यदुक्तं जातिविशिष्ट—नं. प. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मान्यमतिक्रम्य सामग्र्यन्तरकल्पना न युक्ता। सामान्ये बाधकाभावेऽपि स्वार्थे व्यक्तौ सामग्र्यन्तरकल्पनेऽनुव्याख्यानोक्तगौरवात् ॥

किं चैवं व्यक्त्यंशे शक्तिज्ञानत्वेन कारणता, जातिविशिष्टव्यक्तिविषयकशाब्दज्ञानत्वेन कार्य-

---

इतिश्लोकस्य जात्यन्विते स्वार्थे व्यक्तौ शक्तिरनुभूयते शब्दानां अतो जात्यन्वितव्य[1]क्त्यभिधायित्वं, जात्यन्वितव्यक्तिप्रत्यायकत्वम्। अन्यथा सामग्र्यन्तरकल्पन इत्यर्थोऽभिप्रेतः ॥

नन्वन्यलभ्येपि [2]व्यक्तिज्ञाने व्यक्तिशक्तिज्ञानत्वेनापि कारणत्व-कल्पने गौरवं तुल्यमेवेत्यत आह—किं चैवमिति। लाघवादन्यतरांश-शक्तिज्ञानस्यैव हेतुत्व इत्येवंशब्दार्थः ॥

ननु जातेर्व्यक्तिघटितमूर्तित्वाज्जातिभानं व्यक्तिभानं विना न युक्तम्। न तु व्यक्तिभानं जातिं विनेति। वैषम्यमिति चेत्तर्हि जाति-व्यक्त्योरेकवित्तिवेद्यत्वभङ्गः स्यात्। अन्यबुद्धित्वावच्छिन्नकार्यताप्रति-योगिकक्कारणादन्यत्र बुद्धिर्भवतीत्यस्यैवैकवित्तिवेद्यत्वशब्दार्थत्वात् ॥

ननु व्यक्तौ जातेर्विशेषणत्वान्नागृहीतविशेषणन्यायेन जातिशक्ति-ज्ञानत्वेनैव हेतुत्वमिति चेन्न। व्यक्तेरपि जातौ विशेषणत्वात्क्रमिकोप-स्थितिस्थळ एव नागृहीतेतिन्यायावतारेण तुल्यवित्तिवेद्यजातिव्यक्ति-स्थळे तदनवताराच्च ॥

दोषान्तरमाह—एवमिति। अन्वयांशेपि शक्तिज्ञानहेतुत्वस्य प्राभाकरैः स्वीकाराद्भवतीदमनिष्टमितिभावः। नागृहीतेति न्याय-

---

[1] शक्य–प. व्यक्तिप्रत्यायकत्वम्–नं. उ. [2] शक्य–प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तेति विपरीतं किं न स्यात्। एवं पदार्थशक्तिज्ञानत्वेन कारणता, योग्येतरान्वितपदार्थविषयकशाब्दज्ञानत्वेन कार्यतेत्यापत्त्याऽन्विते शक्तिज्ञानस्य कारणता न स्यात् ॥

किं च मुण्डिते गोत्वे न शक्तिग्रहः, यत्किंचिच्छक्यमिति ज्ञानेनाश्वत्वादिव्यावृत्तगोत्वस्य शक्यत्वासिद्धेः। किं तु व्यक्त्या विशेषिते गोत्वे शक्तिग्रह इति नागृहीतविशेषणन्यायो विपरीतः ॥

न च गोत्वस्य स्वत एव [1]विलक्षणत्वात्स्वतः सिद्धेनेतरव्यावृत्तत्वेन ज्ञाते गोत्वे शक्तिग्रह इति वाच्यम्। गोत्वं शक्यमिति ज्ञानेपीतरव्यावृत्तेरनुल्लेखात्। उल्लेखे वा सैव प्रवृत्तिनिमित्तं स्यात्। न च गोत्वत्वेन ज्ञाने गोत्वे शक्तिग्रहः। गवेतरावृत्तित्वे सति गोवृत्तित्वादन्यस्य[2] गोत्वत्वस्याभावेन गोत्वत्वे व्यक्तेर्द्धिरनुप्रवेशात् ॥

---

मभ्युपेत्यापि दोषान्तरमाह—किं च मुण्डित इति। व्यक्त्यविशेषिते [3]गोत्व इत्यर्थः। स्वत एवान्यव्यावृत्तेति प्रागुक्तमाशङ्क्य निराह—न चेति। अनुल्लेखादिति। अश्वत्वादिव्यावृत्तं गोत्वमित्याकाराभावादिति भावः। सैवेति। इतरव्यावृत्तिरेव गोपदप्रवृत्तिनिमित्तं स्यादित्यर्थः। नागृहीतविशेषणन्यायात्। नन्वितरव्यावृत्तत्वविशिष्टं गोत्वमिति

---

[1] विश्वेत्यधिकम्—ग. रा. सु. [2] स्याभावेन—ज. [3] तगो—नं. ड.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किं चैवं त्वदभिमता[1] गङ्गाशब्दादेस्तीरादौ लक्षणा मण्डपं भोजयेत्यादौ मण्डपशब्दस्य गृहविशेषसंबन्धिनि पुरुषे रूढिपूर्विका लक्षणा च न स्यात्। तत्रापि तीरत्वपुरुषत्वे एव लक्ष्ये, तीरपुरुषौ तु लक्षणां विना नागृहीतविशेषणन्यायेन वा एकवित्तिवेद्यतया वा प्रतीयेते इत्येव स्यात्॥

किं च व्यक्तेरशक्यत्वे तत्र विभक्त्य[2]र्थान्वयो न स्यात्॥

न च व्यक्तेरशक्यत्वेप्येकवित्तिवेद्यतया प्रकृतिप्रातिपाद्यत्वाद्विभक्त्यर्थान्वय इति वाच्यम्। तथात्वे हि पूर्वात्वापरत्वादेरप्येकवित्तिवेद्यतयैवान्योन्यं वि-

भावः। त्वदभिमतेति। लक्षणेत्यन्वयः। रूढिपूर्वकेति। मण्डपशब्दस्य गृहविशेषे रूढत्वात्तत्पूर्विकेत्यर्थः। परोक्तं नियामकद्वयं लक्षणास्थलेऽप्याह—नागृहीतेति। विभक्त्यर्थेति। घटमानयेत्यादौ कर्मत्वादिरूपविभक्त्यर्थान्वय इत्यर्थः। सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाद्व्यक्तेश्चाशक्यत्वेन घटादिप्रातिपदिकार्थत्वाभावात्॥

ननु प्रकृतितात्पर्यविषयेऽर्थे विभक्त्यर्थान्वय इति चेन्न। लक्षणोच्छेदापत्तेः। गौरवाच्चेति भावः। यद्यपि प्राग्विशिष्टे शक्तिरस्त्येवेत्युक्त्या व्यक्तेरपि शक्यत्वमस्ति। तथापि तदंशे शक्तिज्ञानस्याहेतुत्वेऽशक्यत्वप्रायत्वादित[3] वा, जातावेव शक्तिः व्यक्तिधीस्त्वेकवित्तिवेद्यत्वेन भविष्यतीति मतेन वा[4]स्यावताराददोषः। तथात्वे हीति। एकवित्ति-

[1] तगं—रा सु नं. [2] क्त्यन्वयो—ज. क. [3] तिनजा—नं—'न' इति रेखया दूषितम्—ए. [4] वास्य दोषस्या—ड. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भक्त्यर्थान्वयसंभवेन पूर्वापरप्रातिपदिकयोरपरपूर्व-
प्रातिपदिकार्थविषया विपरीतलक्षणा न स्यात् ॥

अपि च पूर्वमानयेति मुख्यप्रयोगेऽपरस्यापि
विभक्त्यर्थान्वयः तदधीनः क्रियान्वयश्च [1]न
स्यात् ॥

अपि च जातिमात्रस्य पदार्थत्वे गोपदाज्जाति-
विशिष्टव्यक्तिधीर्न स्यात् । न च समानसंवित्सं-
वेद्यतयैव तद्धीः । [2]तद्वैशिष्ट्यांशे तदभावात् ।

---

वेद्यत्वमात्रेण विभक्त्यर्थान्वये सति यत्र विपरीतलक्षणयाऽपराभिप्रायेण
पूर्वमानयेति पूर्वपदं प्रयुङ्क्तं तत्र पूर्वप्रातिपदिकस्यापरपदार्थलक्षणा न
स्यात् । लक्षणां विनैव द्वितीयाविभक्त्यर्थकर्मत्वस्य पूर्वपदार्थेनैकवित्ति-
वेद्ये परपदार्थे अन्वयसंभवेनापरमानयेत्यर्थोपपत्तेः । एवमेवापरमानये-
त्यत्राप्युक्तदिशा पूर्वमानयेत्यर्थोपपत्तेः । पूर्वापरशब्दार्थयोश्चान्योन्यसा-
पेक्षत्वेनैकवित्तिवेद्यत्वादित्यर्थः । न चेष्टापत्तिः । सर्वतान्त्रिकलौकिक-
विरोधात् । अभ्युपेत्यापि बाधकमाह—अपि चेति । लक्ष्याभिप्रायं
विनैव यत्र पूर्वमानयेति मुख्यार्थप्रयोगस्तत्र स्थळे पूर्वप्रातिपदिकात्परत्र
श्रुतिविभक्त्यर्थकर्मत्वान्वयोऽपरपदार्थे स्यात् । पूर्वपदार्थेनैकवित्तिवेद्यत्वस्य
त्वदुक्तविभक्त्यर्थान्वयप्रयोजकस्य सत्त्वात् ॥

अस्तु को दोष इत्यत आह—तदधीन इति । तथा च पूर्व-
मानयेत्युक्ते अपरस्यानयनप्रसङ्गोऽपरमानयेत्युक्ते पूर्वस्यानयनप्रसङ्ग इत्यर्थः ।

---

[1]न इति नास्ति—ग. क. रा. सु.　　[2]तदिति नास्ति—नं. ज. क.
रा. सु.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[1]तत्रापि तथात्वे निर्विकल्पकोच्छेदः स्यात् ॥

किंचोक्तन्यायेन व्यक्तिविशेषणकगोत्वे शक्तिर्ज्ञातेति तज्जन्या शाब्द[2]धीरपि व्यक्तिविशेषितगोत्वविशेषणकव्यक्तिविषया स्यात्। न च तथाऽनुभवः । गौरित्यनेन गोत्वविशेषणकव्यक्तेरेव प्रतीतेः ॥

तस्माज्जात्यंश एव [3]शक्तिज्ञानस्य हेतुत्वे सामग्र्यन्तरकल्पनापत्तिः, व्यक्त्यंश एव शक्तिज्ञानं हेतुरिति वैपरी[4]त्यापत्तिः, अन्वयप्रतिवन्दी, गोत्वे शक्तिग्रहदशायां व्यक्तेर्द्विरनुप्रवेशापत्तिः, गवादिपदानां जातावेव शक्तौ गङ्गादिशब्दानां तीरत्वादावेव लक्षणाप्रसङ्गः, एकवित्तिवेद्यत्वमात्रेण विभक्त्यर्थान्वये पूर्वमानयेत्यादौ परादेरपि तत्प्रसङ्गः,

---

निर्विकल्पकेति । जातिविषयकानिर्विकल्पकज्ञानस्यैकवित्तिवेद्यतया व्यक्तिविषयकत्वमिव वैशिष्ट्यस्यापि जातिवित्तिवेद्यत्वे वैशिष्ट्यविषयकत्वस्याप्यापत्त्या वैशिष्ट्याविषयकनिर्विकल्पकोच्छेदः स्यादित्यर्थः । एतच्च निर्विकल्पकास्तित्वमतेनोक्तम् ॥

तदभावमते तु दोषान्तरमाह—किं चोक्तेति । मुण्डिते गोत्वे न शक्तिग्रह इत्यादिनोक्तन्यायेनेत्यर्थः । तज्जन्या शक्तिजन्येत्यर्थः । अस्त्वित्यत आह—न च तथेति । प्रागुक्तं सङ्ग्रहेणानुवदन्नुपसंहरति—तस्मादिति।

---

[1] तस्यापि -ज. क. [2] शाब्दीधी—ज. ग. क. [3] व्यक्ति—ज. क.
[4] त्यप्रसङ्गः—नं. ग. रा. सु.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जातिवैशिष्ट्यांशप्रतीत्यनुपपत्तिः, गोशब्देन व्यक्ति-विशेषितगोत्वविशेषणकव्यक्तिधीप्रसङ्गश्चेत्यर्थौ —दोषाः ॥

प्राभाकरोक्तपदशक्तिभङ्गः ॥ २३ ॥

## अथ भाट्टोक्तव्यक्तिलक्षणाभङ्गः ॥ २४ ॥

भाट्टास्तु—आनन्त्यव्यभिचाराभ्यां व्यक्तौ शक्तिग्रहासंभवाज्जातिरेव शक्या, जातिविशिष्टा-

---

स्पष्टो ग्रन्थः ॥

प्राभाकरोक्तपदशक्तिभङ्गः ॥ २३ ॥

अथ भाट्टोक्तव्यक्तिलक्षणाभङ्गः ॥ २४ ॥

लक्षणाया आक्षेपतो वा व्यक्तिधीसंभवादनन्यलभ्यजातावेव शक्ति-रिति मतमप्यनूद्य निराह—भाट्टास्त्विति । आनन्त्येति । व्यक्तौ शक्तिरिति पक्षे प्रतिव्यक्ति शक्तिग्रहो न संभवति । तासामानन्त्यात् । एकस्यां व्यक्तौ शक्तिग्रहे च शब्दश्रवणतो व्यक्त्यन्तरस्याप्युपस्थिति-दर्शनेन तत्र शक्तिग्रहो व्यभिचारि । तेन विनापि तदुपस्थितेः । अतो-व्यक्तौ शक्तिग्रहायोगात्सर्वानुगतायामेकस्यामेव गोत्वादिजातौ गोप-दादिशक्तिग्रह इत्यर्थः । कथं तर्हि व्यक्तिधीः शब्दाज्जायेतेत्यतः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यक्तिस्तु लक्ष्या। एवं च व्याक्तेस्तीरवत्प्रकृतिवृ-
त्तिविषयत्वाद्विभक्त्यर्थान्वयो युक्तः। यद्वा व्यक्ति-
[1]स्त्वाक्षेपलभ्येति न तत्र वृत्तिः कल्प्येत्याहुः।
तदपि न। उक्तरीत्या[2] स्वार्थे व्यक्तौ शक्तिसंभवे-

पक्षद्वयमाह—लक्ष्येति। आक्षेपलभ्येति च। आक्षेपज्ञेयेत्यर्थः॥

यद्यपि मणौ भट्टमते तु व्यक्तिस्त्वाक्षेपलभ्येत्युक्त्वाऽऽक्षेपपक्ष एव दोषानुक्त्वा—

जातावस्तित्वनास्तित्वे न हि कश्चिद्विवक्ष्यति।
नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे॥

इति मण्डनश्लोकं संमतित्वेनोक्त्वा लक्षणापक्षं मण्डनमतत्वेनोपन्यस्य खण्डितवान्। तथाऽपि मण्डनस्य भट्टशिष्यत्वाद्भाट्टास्तु लक्ष्येत्याहुरित्युक्तम्। आकृत्यधिकरणे च वार्तिकमते व्यक्तिलक्षणापक्षस्य स्फुटत्वाच्च॥

उक्तं च शास्त्रदीपिकायामपि—

ल[3]क्षणा वाऽभ्युपेतव्या जातेस्तेनाभिधेयता।

इति। लक्ष्येति पक्षे प्रागुक्तदोषो नेत्याह—एवं चेति। प्रकृतिवृत्तीति। प्रातिपदिकनिष्ठलक्षणारूपवृत्तिविषयत्वादित्यर्थः। आक्षेपेति। व्यक्तेर्जात्यविनाभूतत्वाच्छब्दाज्जातिबुद्ध्यनन्तरं क्रमेण व्याप्त्याद्यनुसन्धानेन व्यक्तिबुद्धिरित्यर्थः। जातिव्यक्त्योरेकवित्तिवेद्यत्वं त्वसिद्धमिति भावः। अनुव्याख्यानस्थत्रिपाद्यास्तात्पर्यार्थमाह—स्वार्थ इति। उक्तरीत्येति पाठे पूर्वभंगोक्तरीत्येत्यर्थः॥

"गौरवं कल्पनेऽन्यथा" इति चतुर्थपादस्थान्यथाशब्दस्या-

[1] क्तिरा–नं. ग. रा. सु. [2] उक्तरीत्येति नास्ति–ग. [3] क्ष्यता वा–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

परम्परासंबन्धरूपलक्षणाङ्गीकारेऽनुव्याख्यानोक्त - गौरवात् । वाक्यस्थसर्वपदानां लक्षकत्वेन लक्ष-कस्याननुभावकत्वपक्षे व्यक्तेरनुभवायोगाच्च ॥

किं च गङ्गात्वादिरूपात्स्वार्थादन्येन तीरत्वादिना रूपेणोपस्थित एव तीरादौ गङ्गादिपदस्य ल-क्षणा दृष्टा । न चात्र व्यक्तिर्जातिं विना रूपान्तरे-णोपस्थिता । गौरिति प्रतीत्या जातिव्यक्त्योरेवोल्ले-खात् । काकेभ्यो दधि रक्ष्यतामित्यादावपि काक-त्वादन्येन दध्युपघातकत्वादिनोपस्थित एव लक्षणा ॥

किं च गां पश्य गौस्तिष्ठतीत्यादौ सत्यपि

---

र्थमाह —परम्परेति । शब्दसम्बन्धिजातिसम्बन्धरूपपरम्परासम्बन्धरूपे-त्यर्थः । मूलारूढताद्योतनायानुव्याख्यानोक्तेत्युक्तम् । सुधायामेवमाद्य-र्थाव्युत्पादनं शिष्यैरेवोह्यतामितिभावेन ग्रन्थगौरवभयादेव । न तु ग्रन्थ-कृताऽनभिमतत्वात् । "ग्रन्थोऽयमपि बह्वर्थ" इति मूलकारैरेवोक्ते-रतो न विरोधः शङ्क्यः । लक्ष्यकत्वेनेत्यस्य व्यक्तेरनुभवायोगाच्चेत्यन्वयः । कुत इत्यतो लाक्षणिकं पदं नानुभावकमिति यन्मतं तत्पक्ष इति ॥

लक्षणाबीजाभावान्न लक्षणेतिभावेन मण्युक्तदोषं चाह—किंचेति । अन्येन रूपेणोपस्थित एव लक्षणेत्यस्य व्यभिचारमाशङ्क्या[1]ह—काकेभ्य-इति । न केवलमन्येन रूपेणोपस्थितिरूप[2]बीजाऽभावो मुख्यार्थानुपपत्ति प्रतिसन्धानरूपमपि लक्षणाबीजं नास्तीत्याह—किं च गामिति । प्रमि-

---

[1] क्ष्य निराह—उ.　　[2] लक्षणा इत्यधिकम्—नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जातेरन्वययोग्यत्वेऽनुपपत्त्यनुसन्धानं विनैव जाति-
विशिष्टव्यक्तिप्रतीतेर्न तत्र लक्षणा, प्रत्युत
गौर्नित्या गौर्जातिरित्यादौ व्यक्त्यन्वयानुपपत्त्यैव
जातिधीरिति तत्रैव लक्षणा ॥

किं च यस्यां व्यक्तावानयनादिव्यवहारेण
शक्तिग्रहः एवं गौर्नष्टा गौर्दीर्घा गौः शुक्ला गौः
सास्नादिमती गौरनेका गौर्गच्छति गामानय
गां बधानेत्यदौ प्रयोगप्रतीत्योः प्राचुर्यं च, तस्यां
व्यक्तौ लक्षणा तद्विपरीतायां जातौ शक्तिरिति
साध्वीयं व्यवस्था । न हि जातौ नाशाद्यस्ति ॥

किं चानित्यत्वनित्यत्वानुमानयोर्घटे दृष्टा-
न्तिते घटशब्दमुख्यार्थस्य घटत्वस्य नित्यत्वा-

---

तत्यागाप्रमितस्वीकाररूपदोषौ चाह—किं च यस्यामिति । तस्यामित्य-
नेनान्वयः । गवानयनादिवृद्धव्यवहारेण हि प्राथमिकशक्तिग्रह इत्युक्तं
प्राक् । स च व्यवहार आनयनादियोग्यव्यक्तावेवैतस्यां लक्षणा चेत् कथं
न प्रमितत्यागः । तद्रहिते जातौ शक्तिग्रहश्चेत् कथं नाप्रमितस्वीकार
इत्यर्थः । एवमिति । यथा व्यक्तौ शक्तिग्रहस्तथा प्रयोगप्रतीत्योः
प्राचुर्यं च यस्यां व्यक्तौ तस्यां लक्षणेति योजना । साध्वीयमिति ।
काकुस्वरेणासाधुत्वमुच्यते । गौर्नष्टेत्यादिधीर्जातिविषयाऽस्त्वित्यत आह—
न हीति । किं चानित्यत्वेति । शब्दोऽनित्यः कृतकत्वात् घटव-
दित्यनुमाने घटपदमुख्यार्थस्य घटत्वस्यैव दृष्टान्तत्वापत्त्या साध्यवै-
कल्य[1]दोषः स्यात् । तथा पृथिवी नित्या गन्धवत्त्वादित्यनुमाने च साध्य-

[1] ल्य स्या—उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्क्रमेण साध्यवैकल्यतद्भावौ स्याताम् । तस्माद्व्यक्तौ मुख्यवृत्तिसंभवेऽपि लक्षणाश्रयणं, व्यक्तेरनुभवानुपपत्तिः, मुख्यार्थादन्येन रूपेणोपस्थितिरूपलक्षणाबीजाभावः, जातावनुपपत्त्यनुसन्धानं विनैव व्यक्तिधीः, प्रत्युत व्यक्तावनुपपत्त्यनुसन्धाने सत्येव जातिधीः, प्रमितत्यागाप्रमितस्वीकारौ, अनित्यत्वा[1]नुमाने घटवदिति दृष्टान्तोक्त्यनुपपत्तिः । नित्यत्वानुमान एव दृष्टान्तोक्तिप्रसङ्गश्चेति दोषनवकम् ॥

भाट्टोक्तव्यक्तिलक्षणाभङ्गः ॥ २४ ॥

—•⋅◆⋅•—

## अथ भाट्टोक्तव्यक्त्याक्षेपभङ्गः ॥ २५ ॥

आक्षेपपक्षेऽपि व्यवहारादिना गृहीतशक्तेर्व्यक्तेः

---

वैकल्याभावः स्यात् । न चेष्टपत्तिः । सर्वतान्त्रिकविरोधादिति भावः । प्रागुक्तदोषान् बुद्ध्यारोहाय संक्षिप्यानुवदन्नुपसंहरति––तस्मादिति ॥

भाट्टोक्तव्यक्तिलक्षणाभङ्गः ॥ २४ ॥

—•⋅◆⋅•—

भाट्टोक्तव्यक्त्याक्षेपभङ्गः ॥ २५ ॥

यद्वेत्यादिनोक्ताक्षेपपक्षं च निराह––आक्षेपेति । व्यवहारव्या-

---

[1] आदिपदमाधिकम्––नं. ज. क. हरिद्रया दूषितम्––मु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शब्दात्साक्षाद्धीसंभवेन शब्दबोधितजात्या व्यक्त्याक्षेपेऽनुव्याख्यानोक्त[1]गौरवं तदवस्थमेव । किं च धूमाक्षिप्तवह्नेरिव व्यक्तेरशाब्दत्वेन विभक्त्यर्थान्वयो न स्यात् ॥

करणोपमानकोशादिनेत्यर्थः । गृहीतशक्तेरिति बहुव्रीहिः । शक्तिश्चैवेत्यादित्रिपादीतात्पर्यार्थोक्तिः संभव इत्यन्तेन । गौरवं कल्पनेऽन्यथेत्यत्रत्यान्यथाशब्दोक्तिः शब्दबोधितेत्यादि । मण्युक्तं दोषमाह—किं चेति । न स्यादिति । विभक्तीनां प्रकृतिरूपशब्दार्थान्वितस्वार्थबोधकत्वात् । व्यक्तेराक्षेप्यत्वे शब्दार्थत्वाभावात्[2] । तथा [3]चानयनादिक्रियान्वयो[4]ऽपि न स्यात् । अन्यथा पूर्वमानयेत्यादौ पूर्वपदादिनाऽऽक्षिप्तापरपदार्थेऽपि विभक्त्यर्थान्वयः स्यात् । तथा च गामानयेत्यादावाक्षिप्तगोव्यक्तेरिवापरपदार्थस्यानयनप्रसङ्गः । न च पूर्वादिपदार्थस्थळे समानवित्तिवेद्यत्वमेव न त्वाक्षेप्याक्षपकभाव इति शङ्क्यम् । जातिव्यक्त्योरपि तथात्वादिति ॥

ननु — जातेरानयनानुपपत्तेर्व्यक्तेरानयनबलाच्च शब्दादाक्षिप्तस्यापि कथं चिच्छाब्द[5]मुपेत्य विभक्त्यर्थान्वयो वाच्य इति चेन्न । शब्दशक्यत्वेन व्यक्तेरपि शब्दार्थत्वेनैव विभक्त्यर्थान्वयोपपत्तेः । शब्दतात्पर्यविषयत्वमात्रेण शाब्दत्वे लक्षणोच्छेद इति भावः । अस्तु वा शाब्दत्वं कथंचित् तथापि व्यक्तेरशक्यत्वपक्षे गोत्वादिजातिर्व्यक्त्याश्रिता जातित्वादित्येवं रूपेण हि जात्या व्यक्त्याक्षेपो वाच्यः । तत्र च

1 क्तं गौ—नं. सु. रा. 2 व्यक्तेरित्यादि नास्ति— नं. उ. 3 था आ— नं. उ. 4 अपि इति नास्ति—नं. उ. 5 ब्दत्वमु—प. उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

किं च जातिर्व्यक्त्याश्रितत्वाक्षेपे जातिरूप पक्षविशेषणीभूताश्रितत्वोपसर्जनीभूताया व्यक्तेः शाब्दत्वेऽप्युपसर्जनत्वाद्राजपुरुषमानयेत्यत्र राज्ञ-इवानयना[1]न्वयो न स्यात् ॥

अपि च वह्न्यविवक्षया प्रयुक्तेन धूमपदेन वह्नेरिव गौरस्तीत्यादौ व्यक्त्यविवक्षया प्रयुक्तेन गो[2]पदेन व्यक्तिधीर्न स्यात् । आक्षेपे बीजस्यानुपपत्तेरभावात् ॥

---

क्रियान्वयो व्यक्तेर्दुर्लभ इत्याह—किंच जातिरिति । इत्याक्षेपे । एवं प्रकारेण व्यक्ति[3]प्रतीतौ सत्याम् । गोत्वादिजातिरूपपक्षे विशेषणीभूतं यदाश्रितत्वं तत्र निरूपकतया उपसर्जनीभूताया इत्यर्थः । पूर्वत्र ह्याक्षेपाद्व्यक्तिबुद्धिमुपेत्य सुवर्थान्वयस्तथा क्रियान्वयश्च न युक्त इत्युक्तम् । अधुना व्यक्तिधीरेवाक्षेपपक्षे न युक्तेत्याह—अपि चेति । वह्निविवक्षया धूममात्रविषयोक्ते यथा न वह्निधीस्तथा गौरस्ति गां पश्येत्यादौ जातिमात्रविवक्षया प्रयुक्तेन व्यक्तिधीर्न स्यात् । व्यक्तितात्पर्यानुपपत्त्या वा अन्वयानुपपत्त्या वा आक्षेपो व्यक्तेर्वाच्यः । सा तु नास्ति । जातिमात्र एव तात्पर्यात् । अस्तित्वादियोग्यक्रियान्वयसंभवाच्चेति भावः । न केवलं व्यक्तिप्रतीत्यनुपपत्तिः । अपि त्वाक्षेप्यानुपपत्तिश्च । तत्किं गोत्वादिना धर्मेण विशिष्टाक्षिप्यते व्यक्तिः, उत धर्मान्तरेण, अथ सर्वधर्मराहितव्यक्तिस्वरूपमात्रं गोत्वादिजात्याक्षेप्यम् । न त्रयमपि युक्तम् ।

---

[1] नायन्व–नं. ज. ग. क. रा. सु.  [2] शब्देन–ज. क.  [3] क्तेः प्र–ए. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किं च गोत्वेन न तावद्गोत्वा[1]दिविशिष्टा व्यक्तिराक्षेप्या। गोत्वस्याक्षेपकत्वेनाक्षेप्यशरीरे प्रवेशायोगात्। नाप्यन्यविशिष्टा व्यक्तिराक्षेप्या। गौरीति ज्ञाने जातिव्यक्त्योरे[2]वोल्लेखात्। अत एव न मुण्डितमश्वादिसाधारणव्यक्तिमात्रमाक्षेप्यम्। गौरित्युल्लेखायोगात्॥

किं च गोत्वमपि न स्वरूपमात्रेण वुद्धमाक्षेप-

---

आद्ये आक्षेपकत्वायोगः अन्त्ययोरनुभवविरोध इति भावेनाह— **किं च गोत्वेनेति**॥

**प्रवेशायोगादिति**। ननु—लिङ्गोपहितलैङ्गिकभानपक्षे लिङ्गस्यानुमितिविषयत्ववदाक्षेपकस्याप्यस्त्वाक्षेप्यशरीरप्राविष्टत्वमिति चेन्न। तस्यैव प्रामाण्यवादे दूषितत्वात्। वैषम्याच्च। लिङ्गेन विनाऽपि वह्नित्वादिना धर्मेण तत्र लैङ्गिकस्योपस्थितिसंभवेऽपि सामग्रीवलाल्लिङ्गस्यापि तत्र भानम्। नह्येवं प्रकृते। गोत्वादिरूपलिङ्गेन विना व्यापकतावच्छेदकधर्माभावात्। अत एवाक्षेप्यशरीर इत्युक्तमितिभावः॥

**अन्येति**। गोत्वान्यसास्नादिमत्त्वादिरूपधर्मविशिष्टेत्यर्थः। मुण्डितं [3]सास्नादिमत्त्वादिधर्मराहितमित्यर्थः। **गौरित्युल्लेखेति**। अश्वादिव्यावर्तकगोत्वविशिष्टत्वेनैव गोपदादिना गोव्यक्तिप्रतीतेः मुण्डितव्यक्तिप्रतीतिरनुभवविरुद्धेतिभावः। एतेन व्यक्तित्वेनाक्षप्यधीरित्यपि प्रत्युक्तम्। आक्षेप[4]कत्वानुपपत्तिं चाह—**किं च गोत्वमपीति**। स्वरूप[5]-

---

[1] त्वेवि—ग. ज. क. रा. सु. [2] रेवाक्षेपात्—ज. क. [3] 'गोत्व' इत्यधिकम्—ए. उ. [4] पकानु—ए. उ. [5] पेण व्या—ए. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कम् । अतिप्रसङ्गात् । किं तु व्याप्यतावच्छेदकावच्छिन्नत्वेन बुद्धम् । न च व्यक्तिं विना तदवच्छेदकमस्तीति व्यक्तेः प्रागेव बुद्धतया कथमाक्षेप्यत्वम् । अन्यथा गौरिति[1]प्रत्यक्षज्ञानस्यापि जातिरेव विषयो व्यक्तिस्त्वाक्षेप्येति स्यात् । तस्माद्व्यक्तेः शब्दादेव धीसंभवे आक्षेप[2]कल्पनम्, आ[3]क्षिप्तस्य विभक्त्यर्थान्वयानुपपत्तिः, उपसर्जनीभूताया व्यक्तेः क्रियान्वयानुपपत्तिः, गौरस्तीत्यादावाक्षेपबीजाभावेन व्यक्तिप्रतीत्यनुपपत्तिः, आक्षेप्यानुपपत्तिः, आक्षेपकानुपपत्तिश्चेति दोषषट्कम् ॥

भाट्टोक्तव्यक्त्याक्षेपभङ्गः ॥ २५ ॥

---

मात्रेण व्याप्यतावच्छेदक[4]विना कृतरूपेण । अतिप्रसङ्गादिति । प्रमेयत्वादिरूपेण ज्ञानेऽपि गवादिव्यक्तिविशेषाक्षेपप्रसङ्गादित्यर्थः । व्यक्तिं विनेति । गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्तित्वरूपत्वाद्गोत्वत्वरूपव्याप्यतावच्छेदकस्येति कथमाक्षेप्यत्वं सिद्धसाधनतापत्तेरिति भावः । प्रागुक्तसर्वपक्षेषु विपक्षे बाधकमाह—अन्यथेति । शब्दशक्त्यैव व्यक्तिधीसंभवेऽपि आक्षेपादेव व्यक्तिबुद्ध्याद्यङ्गीकार इत्यर्थः । उक्तं संक्षिप्यानुवदन्नुपसंहरति—तस्मादिति । परेण जातेरेव शब्दार्थत्वेन स्वीकाराद्दोषषट्कमित्यर्थः ॥

भा[5]ट्टोक्तव्यक्त्याक्षेपभङ्गः ॥ २५ ॥

---

[1] प्रत्यक्षपदं न—नं. [2] पकक—नं [3] क्षेपक—नं. [4] कं वि—प. नं [5] भ—प. नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ नैयायिकोक्तपदशक्तिभङ्गः ॥ २६ ॥

नैयायिकास्तु—जात्याकृतिविशिष्टा व्यक्तिः पदार्थः । जात्याकृतिव्यक्तयः पदार्थ इति सूत्रे एक चनात् । यत्र गौर्नित्येत्यादौ जातिमात्र परत्वं, तत्रैकदेशे लक्षणा । पिष्ट[1]मय्यो गाव

### अथ मण्याद्युक्तपदशक्तिभङ्गः ॥ २६ ॥

एवं पदार्थस्तु व्यक्तिरेवेति प्रतिज्ञातार्थसिद्धये प्राभाकरभाट्टमतं निरस्य न्यायमतमपि निरसितुं पदशक्तिवादान्ते जातिर्विशेषवदवयव-संयोगरूपाकृतिरपि पदशक्या, गोपदाज्जात्याकृतिविशिष्टस्यैवानुभवादि-त्यादिना मण्याद्युक्तमनुवदति—**नैयायिकास्त्विति** । वैशिष्ट्यस्यापि शक्यत्वसूचनायोक्तं, विशिष्टा व्यक्तिरिति । मण्युक्तामेव सम्मतिमाह— इति सूत्र इति । गौतमसूत्र इत्यर्थः । अन्यथा जात्यादेः प्रत्येकं शक्यत्वे पदार्था इति बहुवचनोक्तिः स्यात् । तेन ज्ञायते विशिष्ट-व्यक्तावेकैव शक्तिरितीति भावः । **तत्रेति** । जातिरूपैकदेश इत्यर्थः । यद्यपि मणौ जात्याकृतिव्यक्तीनां प्रत्येकमात्रपरत्वे लक्षणैवेत्युक्तम् । तथाऽपि गौ[2]रुपपन्नेत्यादौ व्यक्तेः स्वातन्त्र्येणोपस्थितेः गोत्वस्यावच्छे-दकतयाप्यन्वयेन लक्षणानापत्तेः जातिमात्रपरत्वमित्येवानुवादो न[3] तु जात्यादिमात्रपरत्वमित्यनुवादः कृतः । आकृतेरपि [4]शक्यत्वे पिष्टमय्यो गाव इत्यादौ अमुख्यत्वं गोपदादेर्न स्यादित्यत आह— **पिष्टेति** ।

[1] एकम–ज. क. [2] रुत्पन्ने–ए. नं. उ. [3] न स्यात्–उ. नं. [4] वा-च्यत्वे–ए. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दुःखशब्दस्य [1]शक्तिग्रहो, यथा च वक्तृनिष्ठां देवदत्तादिविषयां ज्ञातामेकां बुद्धिमुपधानीकृत्य वक्तृनिष्ठबुद्धिविषयेषु देवदत्तत्वाद्यनेकप्रकारावच्छिन्नेष्वनेकेषु [2]देवदत्तादिषु सर्वनाम्नः तच्छब्दस्य शक्तिग्रहः; तथोपदेशव्यवहारादिपूर्वकशक्तिग्रहविषयव्यक्तिनिष्ठं ज्ञातमुभयसंबद्धमेकं सादृश्यमुपधानीकृत्यानेकगोत्वालिङ्गितास्वनेकगोव्यक्तिषु गोशब्दस्य शक्तिग्रहोस्तु ॥

उक्तं हि बाधनालक्षणं दुःखमिति न्यायसूत्र-

---

जनकोभयेत्यर्थः। वक्रिति। चैत्रादिरूपवक्तृनिष्ठां देवदत्तयज्ञदत्तविष्णुमित्रादिविषयाम्। तच्छब्दस्येति। ते गता आगता इत्यादिव्यवहारार्थं हि तच्छब्दस्य शक्तिग्रहः, स च सर्वनामसंज्ञकशब्दत्वाद्बुद्धिस्थवाचकः, बुद्धिश्च ज्ञातैव सत्युपयुज्यत इति भावः। दृष्टान्तानुक्त्वा दार्ष्टान्तिकमाह—तथेति। अयं गौरित्युपदेशः, गामानयेत्यादिवृद्धव्यवहारः उपमानकोशादिरादिपदार्थः। उभयेति। पुरोवर्तितदितररूपोभयेत्यर्थः। धर्मित्वेन पुरोवर्तिना। प्रतियोगित्वेन तदितरैः संबद्धत्त्वादिति भावः। प्रतियोगिनामनेकत्वेऽपि तन्निरूपितपुरोवर्तिनिष्ठस्यैकत्वादिति भावः। उपधानीकृत्य तटस्थेन निमित्तीकृत्य। व्यक्तय एवेति पद्धत्यविरोधायोक्तम्—अनेकेति। एकत्वनिरासार्थत्वोक्तेरेवकारस्येति भावः। "यथा च न्यायमत" इत्यत्र सम्मतिमाह—उक्तं हीति। तत्त्वबोधे ग्रन्थविशेषे।

---

[1] संकेतग्र—ग. रा. सु. [2] 'शरीरादिषु' इत्यारभ्य नास्ति—नं. ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्त्वबोधे वर्धमानेन दुःखसम्बन्धनिरूपकत्वं दुःख-त्वमिति ॥

न च सर्वनाम्नि वक्तृगतबु[1]द्धिरिवातीतादिज्ञा-नात्प्राक्तत्प्रतियोगिकसादृश्यज्ञानं न संभवतीति वाच्यम्। भूयो व्यवहारादिदर्शनदशायां प्रति-योगिभूत[2]वर्तमानपिण्डान्तरस्य ज्ञातत्वेन तत्संभ-वात्। तस्यैव चातीतादिप्रतियोगिकत्वात्। अतीतादिप्रतियोगिक[3]त्वेन ज्ञानस्य चानपेक्षित-त्वात् ॥

यद्वाऽऽदौ स्वरूपसत्सादृश्यमुक्तरीत्याऽतीतादि-कमुपस्थाप्य पश्चात्सामग्रीसत्त्वेनातीतादिप्रतियो-गिकत्वेनापि ज्ञातमुपलक्षणं भविष्यति ॥

---

दुःखसम्बन्धेति। जन्यत्वेन वा जनकत्वेन वा यथाकथंचिद्दुःखसं-बन्धनिरूपकत्वमित्यर्थः। तच्च दुःखे तज्जनके चास्तीति भावः। वाक्ति-त्युक्तदृष्टान्तवैषम्यमाशङ्क्य निराह—न चेति। बुद्धेर्यथा ज्ञानं संभ-वति न तथा सादृश्यज्ञानं संभवतीत्यर्थः। अतीतादेरज्ञानेऽपि पुरो-वर्त्येकपिण्डे चक्षुःसन्निकृष्टे पिण्डान्तरप्रतियोगिकसादृश्यज्ञाने सति सर्व-प्रतियोगिकसादृश्यं ज्ञातमेव, तस्यैव सर्वप्रतियोगिकत्वादिति भावे-नाह—भूय इति। आदिपदेन भूय उपदेशो ग्राह्यः ॥

ननु तत्प्रतियोगिकत्वेनाज्ञाने सत्येतत्सादृश्यप्रतियोगिनः सर्वे गोपदवाच्या इति ज्ञानं कथमित्यत आह—यद्वेति। उक्तेति।

---

[1] द्धिरिवा—नं. ज.   [2] वर्तमानपदं न—नं. ज.   [3] कत्वज्ञा—नं. ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतदप्युक्तं—

"इति व्युत्पत्तिरपि हि सादृश्येनै[1]गम्यते"। इति ॥

सादृश्येन ज्ञातेन। पद्धतौ च सादृश्यमुपधानमित्युक्तम्। अत्रोपधानमित्युक्त्या सादृश्यं सर्वनाम्नि तत्पदे वक्तृगतबुद्धिरिव ज्ञातमप्युपलक्षणत्वान्न शक्तिग्रहविषय इति सूचितम्। अत्र च सादृश्यं स्वरूपसदे[2]वोपस्थापकमितिमते तदुपस्थापितैः [3]परस्परं सदृशैरनेकैर्गोत्वैः [4]शक्तिग्रहनियमः, पुरोवर्तिपिण्डगतं ज्ञातं गोत्वमुपस्थापकमिति मते तदुपस्थापितैः तत्सदृशैरनेकैर्गोत्वैस्तन्नियमः,[5] ज्ञातं सादृश्यमेवोपस्थापकमिति मते

[6] आद्यपक्षोक्तरीत्यर्थः। सुधायामस्फुटत्वादाह—एतदपीति। यद्वा यथेत्यादि[7]नोक्तपक्षात्पक्षान्तरमपीत्यर्थः। बुद्धिस्थपरामर्शित्वोपपादनायाह—सर्वनाम्नीति। सर्वादीनि सर्वनामानीत्यनेन सर्वनामसंज्ञके त[8]दितिपदे वक्तृगतबुद्धिस्थस्य विषयत्वेऽपि न बुद्धिर्विषयो यथा तथा सादृश्यमपि न शक्तिविषयतया गृह्यत इत्यर्थः। प्रागुक्तपक्षद्वयं निष्कृष्य दर्शयति—अत्र चेति। तस्यैव विवरणं इति मत इति। मत इति[9] च। यद्वा शक्तिग्रहविषय इत्यर्थः। उपस्थापकमिति। स्वप्रतियोगिनामतीतादिसर्वपदार्थानामिति योज्यम् ॥

[1] नाव–रा. सु. [2] वज्ञातं वो–नं. ज. रा. सु. चाज्ञातं वो–ग. [3] तैः सत्सद–नं तत्स–ज. [4] त्वैस्तान्नि–नं. ज. [5] म इति भेदः–एवं च–ग. रा. सु. [6] यद्वा यथेत्यादिपक्षात्पूर्वमुक्तपक्षरीत्येत्यर्थः–उ. नं. ए. [7] दिपक्षान्तर–उ. नं. ए. [8] तत्तदिति–उ. नं. [9] तिशक्तिग्र–उ. ति वा श–नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

साक्षात्संबन्धवता तेनैकेनैव सादृश्येनोपस्थापितै-
र्गोत्वैस्तान्नियम इति भेदः[1]। एवं च तवेव ममापि-
मते धूमजातीयस्य वह्निजातीयराहितेऽवृत्तिर्धूमस्य-
वह्निव्याप्तिः, घटजातीयस्योत्पत्तौ दण्डजातीयस्य
नियमो दण्डस्य घटकारणत्वं, लक्षणजातयिस्य
लक्ष्यजातीयेऽवृत्तिरव्याप्तिः, अलक्ष्यजातीये वृत्ति-
रतिव्याप्तिरित्यादिव्यवस्था युक्ता ॥

इयांस्तु भेदः। तव साजात्यमेकजात्याश्रयत्वं
मम तु साजात्यमेकजातिसदृशजात्याश्रयत्वं वा,
एकस्या एव व्यक्तेर्व्यक्त्यन्तरानिष्ठसादृश्य[2]प्रति-
योगित्वरूपो व्यक्त्यन्तरसंबन्धो वा, धर्मित्वेन

---

एवमनुगत जातेरभावेऽपि सर्वत्र शक्तिग्रहं सादृश्येनैवोपपाद्य-
दानीमेवं सर्वधूमाग्निसंग्राहकयोरित्यादिना पूर्वमाक्षिप्तं व्याप्तिग्रहादिकं च
समाधत्ते—एवं चेति । सादृश्येनैव सर्वोपस्थितिसंभवे सतीत्यर्थः ।
जातीयत्वं च परमते तद्भिन्नत्वे सति तन्निष्ठजातिमत्त्वम् । सिद्धान्ते तु
तदभावात्कथं तवेव ममापीत्युक्तिरित्यत आह—इयांस्तु भेद इति ।
एकस्या एवेति। एकगोपिण्डनिष्ठगोत्वरूपैकधर्मस्यैवानेकगोपिण्डान्तर-
निष्ठानि यान्येतद्गोपिण्डनिरूपितसादृश्यानि तत्प्रयोजकत्वरूपः गोपिण्ड-
संबन्धः साजात्यम् । एवं प्रत्येकं गोपिण्डेष्वस्तीति सर्वेषामन्योन्यसा-
जात्यमित्यर्थः । धर्मित्वेनेति । अन्योन्यसदृशत्वमेवान्योन्यजातीयत्व-
मित्यर्थः । नचैवं गवयस्यापि गोजातीयत्वप्रसङ्गः शङ्क्यः । अन्तरङ्ग-

---

[1] "पुरोवर्ति" इत्यारभ्य न—नं. ज.　　[2] प्रयोजकत्वरूपो-ग. रा. छु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतियोगित्वेन वा निरूपकतयैकसादृश्यसंबन्धो वेति। केचित्तु सादृश्यजन्यैकधीविषयत्वं साजात्य-मित्याहुः। चतुर्णामपि पक्षाणामनुव्याख्यानोक्तं सादृश्यमेव [1]जीवातुः। एवं तत्रैव ममापि द्रव्यत्वस्य

सादृश्यस्य विवक्षितत्वादिति भावः। सादृश्यजन्यैकधीति। तच्च गोपिण्डादिमात्र एवास्तीति भावः। एकधीविषयत्वाज्ञानेऽपि साजात्य-ज्ञानात्प्रागुक्तमेव साजात्यं युक्तमित्यत्र पक्षेऽरुचिर्वीजं ध्येयम्। पक्षाणा-मिति। साजात्यनिर्वचनपक्षाणामित्यर्थः॥

यद्वा धर्मिप्रतियोगितया पुरोवर्त्यतीतादिसकलगोव्यक्तिसंबद्धं पुरोवर्तिनिष्ठं सादृश्यं स्वरूपसदेव स्वप्रयोजकनाना[2]गोत्वविशिष्टसर्व-गोव्यक्त्युपस्थापकं सत्सर्वत्र शक्तिग्राहकमिति; पुरोवर्तिनिष्ठं ज्ञातं गोत्वमेव प्रत्यासत्तीभूय धर्मिप्रतियोगितया स्वस्वेतरनानागोत्वसंबन्धेन सादृश्येन हेतुनानेकगोत्वावच्छिन्नसर्वगोव्यक्त्युपस्थापकं सत्सर्वत्र शक्तिग्राहतमिति; तथा धर्मिप्रतियोगितया सर्वगोव्यक्तिसंबन्धं सादृश्यं ज्ञातमेव सर्वगोव्यक्त्युपस्थापकं सत्स्वयमुपलक्षणतया नानागोत्वावच्छिन्न-सर्वगोव्यक्तिषु शक्तिग्राहकमिति; तथोक्तरूपव्यक्तिसादृश्यं स्वरूपसदेवा-खिलव्यक्तीरुपस्थाप्य पश्चादतीतादिप्रतियोगिकत्वेन ज्ञातं सत्स्वयमुप-लक्षणीभूय नानागोत्वावच्छिन्नं सर्वगोव्यक्तिषु शक्तिग्राहकमिति च; प्रागुक्तचतुर्णामपि पक्षाणामित्यर्थः॥

जी[3]वातुरिति। जीवनौषधमित्यर्थः। "जीवातुर्जीवनौषधमि" त्यभिधानात्। प्रागादिपदोपात्तसामान्यविशेषव्यवस्थां च समाधत्ते—एव-

[1] जीवनं—नं. वोपजीवनं—रा. सु. [2] कं न गोत्व—नं. कं नान्योन्यत्व विशि—ए. [3] वनमिति—नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सर्वपृथिवीजातीयसंबन्धित्वे सति तदधिकाबादि-संबन्धित्वरूपं सामान्यत्वं, पृथिवीत्वस्य तु द्रव्य-जातीयसंबन्धित्वे सति किंचिद्द्रव्यजातीयाबाद्य-संबन्धित्वरूपं विशेषत्वं च युक्तमिति, न सामान्य-विशेषन्यायभङ्गोऽपि। किं तु द्रव्यत्वस्य सर्व-पृथिव्यबादिना संबन्धस्तव समवायः मम तूक्त-रीत्या [1]पृथिव्यादिप्रतियोगिकसादृश्यं[2] प्रति प्रयो-जकत्वम्, एवं पृथिवीत्वस्य किंचिद्द्र[3]व्यासंबन्ध-स्तवाबाद्यसमवायो मम त्वबादिप्रतियोगिकसादृ-श्या[4] प्रयोजकत्वमिति भेदः। उक्तश्च समवाय-पक्षेऽतिप्रसङ्गः। घटादिशब्द एकार्थोऽक्षादिशब्दस्तु

---

मिति। न्यायभङ्गोऽपीति। एतेन "न हिंस्यात्सर्वा भूतानि, अग्निषोमीयं पशुमालभेत" इत्यादौ उत्सर्गापवादन्यायभङ्गोऽपि नेत्यपि समाहितं बोध्यम्। कथं तर्ह्यननुगतजातिपक्षाद्भेद इति पृच्छति—किं त्विति। समाधत्ते—द्रव्यत्वस्येति। उक्तेति। धर्मित्वेन प्रतियोगित्वेनेत्यादिनोक्तरीत्येत्यर्थः। सर्वेति। सर्वपृथिवीप्रतियोगिकसादृश्यमबादावबादिप्रतियोगिकसादृश्यं पृथिव्यामित्येवंरूपेण सादृश्यप्रयोजकत्वं द्रव्यत्वादेः सर्वपृथिव्यबादिसंब-न्धित्वमित्यर्थः। पृथिव्यबादेरन्योन्यसादृश्यस्य स्वस्वनिष्ठद्रव्यत्वप्रयुक्त-त्वादिति भावः। युक्ता चास्मदुक्तरीतिरेवेति भावेनाह—उक्तश्चेति। "किं च समवायाभेदवादिनस्तवापि मत" इत्यादिना पूर्वस्मिन्नेव वादे उक्त इत्यर्थः। एकानेकार्थत्वव्यवस्थां च समाधत्ते—घटादीति।

---

[1] सर्वेत्यधिकम्—नं. ज. ग. रा. सु. [2] श्यप्रयो—नं. ग. रा. सु.
[3] व्यसं—नं. ज. [4] श्यप्र—नं. ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नानार्थ इति व्यवस्था तूपस्थापितानां प्रवृत्तिनिमित्तानां सादृश्यवैसादृश्याभ्यां वा उपस्थापकानां सादृश्यानां जातीनां वा सादृश्यवैसादृश्याभ्यां वा युक्ता। न चानवस्था। क्वचिद्-

---

उपस्थापि[1]तानामिति। शब्देनेति शेषः। घटादिशब्देनोपस्थापितानां घटत्वानामनेकत्वेऽपि सर्वेषां सदृशत्वाद्घटादिशब्दस्यैकार्थत्वम्; अक्षादिशब्दोपस्थापितानां तु विदेवनाक्षत्वविभीतकाक्षत्वरथचक्राक्षत्वादीनां विसदृशत्वादनेकार्थकत्वमित्यर्थः। सादृश्यं वा गोत्वादिकं वा तीरादिपदार्थोपस्थापकमितिपूर्वोक्तमतद्वयानुरोधेनाह—सादृश्यानां जातीनां वेति॥

नन्विदमयुक्तम्। सादृश्यानामपि सादृश्यान्तरोपगमे सति सादृश्यानां तन्निष्ठसादृश्यस्य च सादृश्यान्तरमुपेयं उभयनिष्ठसादृश्यस्य-चाधिकरणभूताभ्यां सादृश्यान्तरमुपेयमित्यनवस्थाऽऽपत्तेरित्याशङ्क्य निराह—नचेति। क्वचिदिति। प्रमेयत्वाभिधेयत्वादौ प्रमेयत्वादेः केवलान्वयित्वेन स्वनिष्ठप्रमेयत्वादिकं प्रति धर्मिण एव घटादिधर्मत्ववन्मृद्घटयोः समवाय इत्यत्र संबन्धित्वेन प्रतीतस्यापि समवायस्य मृद्घटाभ्यां स्वस्य च विशेषणविशेष्यभावेन जायमानविशिष्टप्रत्ययं प्रति नियामकसंम्बन्धस्यान्यस्याभावेन तत्रापि समवायस्यैव संबन्धत्ववद्घटनिष्ठपटभेदस्य [2]घटभेदस्य च घटेन भेदे सत्यनवस्थाऽऽपत्त्या स्वस्य स्वेनैव तद्भिन्नस्य घटनिष्ठभेदत्ववत्सादृश्यानां स्वेनैवान्योन्यसादृश्यो[3]पपत्तेरित्यर्थः। प्रमेयत्वादावपि प्रमेयत्वान्तरं समवाये समवायान्तरं भेदे भेदान्तरमिति तत्राप्यनवस्था स्यादेवेति भावः।

---

[1] पितेति—ड. नं. ए. [2] घटभेदस्य चेति नास्ति—ड. ए. नं. [3] श्यव-त्वोप—नं ए.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

र्मिण एव धर्मत्ववत्संबन्धिन एव संबन्धत्ववद्भिन्न-
स्यैव भेदत्ववच्च सदृशस्यैव सादृश्यत्वोपपत्तेः ।
न च सामान्यान्येवेति न्यायेन जातिरेव
सादृश्यम् । सादृश्यस्य सप्रतियोगिकत्वादुत्कर्षा-
पकर्षवत्वाज्जात्यादौ वर्तनाच्च । जातेस्तु तद-
भावात् ॥

तस्मादनुगतजात्यभावेऽपि सादृश्येनैव शक्ति-
व्याप्त्यादिग्रहणं युक्तम् ॥

---

नन्वथापि जातीनां सादृश्यवैसादृश्याभ्यामित्ययुक्तमिति भावेन शङ्कते—**न चेति** ॥

सामान्यान्येव भूयांसि गुणावयवकर्मणाम् ।
भिन्नप्रधानसामान्यव्यक्तिसादृश्यमुच्यते ॥

इत्युक्तेरिति भावः । न च सामान्यं प्रतियोगिनिरूप्यं तन्निरूप्यं च सादृश्यमिति स्फुटमनयोर्भेद इति सुधोक्तमाह—**सप्रतियोगिकत्वादिति** । तदुपलक्षणं मत्वाऽऽह—**उत्कर्षेति** । अयमनेनात्यन्तसदृशः अयं च किंचित्सदृश इति प्रतीतेरिति भावः । **जात्यादाविति** । जातिविशेषसमवायाभावेष्वपि सादृश्यस्य सत्त्वान्न जातिरेव सादृश्यमित्यर्थः । अस्ति च गोत्वघटत्वादिर्जा[1]तित्वनित्यत्वादिना सदृश इत्यादि व्यवहार इति भावः । **तदिति** । सप्रतियोगिकत्वोत्कर्षादिमत्त्वजात्यादिवर्तमाना[2]नामभावादित्यर्थः । स्वोक्तव्युत्पत्तिग्रहोपायचतुष्टये सुधाविरोधमाशङ्क्य तत्स्पष्टं निष्कृष्यानुवदन् पक्षान्तरत्वेन समाधि-

---

[1] दिजाति--उ. नं. ए.  [2] नाभा–नं. नत्वा–उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सुधायां त्वयं गौरित्युपदेशो व्याप्तिग्राहकः, तस्य [1]चायं चैतत्सदृशाश्च सर्वे गोशब्दवाच्या इत्येवं परत्वादवगतव्याप्तिश्च पिण्डान्तरं दृष्ट्वाऽनुमिमीते अयं गोशब्दवाच्यः तत्सदृशत्वादिति ॥

न च दृष्टान्ताभावः, पुरोवर्तिगोपिण्डे स्वप्रतियोगिकसादृश्याभावादिति शङ्क्यम् । आप्तवाक्येन व्याप्त्यवगमे दृष्टान्तानपेक्षणात् । तथा च पृथिव्याः पृथिवीशब्दवाच्यत्वे गन्धवत्त्वमिव गोर्गोशब्दवाच्यत्वेऽनुव्याख्यानोक्तं सादृश्यं लिङ्गमिति पक्षान्तरमुक्तम् ॥

अत एव पद्धतौ—"वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षं कथमतीताद्यास्पदां व्याप्तिं गृह्णीयादितिचेन्न । सहकारिसामर्थ्येन कारणानां शक्त्यन्तराविर्भावस्य बहुळमुपलम्भा"दित्यनेनास्मदुक्तं पक्षमुक्त्वा किं च प्रतीतस्य धूमस्याग्निना संबन्धे

---

माह—सुधायां त्विति । इति व्युत्पत्तिरित्यादिश्लोकव्याख्यावसरे सुधायामित्यर्थः । तर्हि स्वोक्तपक्षे किं ज्ञापकमित्यत आह—अत एवेति । अस्मदुक्तमिति । सादृश्यं चक्षुःसहकारितया स्वनिरूपकसर्वोपस्थापकं सर्वक्रोडीकारकं चेत्युक्तपक्षमित्यर्थः । पक्षान्तरमुक्तमित्यनेन पद्धतिवाक्ययोः परस्परं सुधावाक्येन च विरोधः परिहृतो ज्ञेयः ॥

ननु—न भवदुक्तपक्षः पद्धतिवाक्यानुगुणः । तत्र वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षमित्युक्तप्रत्यक्षपदस्य साक्षिप्रत्यक्षपरत्वात् ॥

---

[1] तस्य च इति नास्ति—नं. ज.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वाभाविकतया निश्चिते यद्यन्यत्रापि धूमः स्यात्तर्हि तस्याप्ये[1]वमित्येवं व्याप्तिग्रहो भवतीत्यनेन सुधोक्तं पक्षान्तरमुक्तम् । अत्र च वर्तमानसन्निकृष्टमात्रग्राहीति सहकारिसामर्थ्येनेति चोक्तत्वात्, भूयोदर्शनादिहेतु[2]धूमत्वादिना विशिष्टव्यक्तिग्राहकश्चक्षुरादिरेवाभिप्रेतः । न तु साक्षी । उक्तं च—

"अतीतवर्तमानत्वग्राहिणी सा च दृश्यते" ।

इत्यनुव्याख्याने चाक्षुपादिप्रत्यभिज्ञाया अपि सहकारिसामर्थ्येनातीतादिविपयत्वम् । ग्रन्थान्तरे

---

अतः सर्वपदार्थाश्च सामान्यात्साक्षिगोचराः ।
सर्वमित्येव विज्ञानं सर्वेषां कथमन्यथा ॥

इति भक्तिपादीयानुव्याख्यानश्लोकव्याख्यानसुधायामतीतानागतवर्तमानं सर्वमपि लिङ्गमनेन साध्येन व्याप्तमितिज्ञानापेक्षं खल्वनुमानम् । न चैतज्ज्ञानं[3] साक्षिणा विना संभवतीत्यादिना व्याप्तिग्रहे साक्षिण एवोपायत्वोक्तेः । भवद्भिश्च चाक्षुषप्रत्यक्षस्योपायत्वोक्तेरित्यतः पद्धतिवाक्यार्थं तावदाह—अत्रेति । उक्तं चेति । "अतः सर्वपदार्थाश्चे" त्येतस्मादुपरितनश्लोकव्याख्यावसरे— "अतीतवर्तमानत्वविशिष्टार्थविषया सा प्रत्यभिज्ञेत्यर्थः । दृश्यते साक्षिणा सोयमिति प्रत्यभिज्ञाकारोनुभूयते । चक्षुरादिनैव जायत इति भाव इति" ग्रन्थेनोक्तमित्यर्थः । साक्ष्युक्तेर्गतिमाह—ग्रन्थान्तरेति । सुधायामेव "अतः सर्वपदार्थाश्च" इत्यादि

---

[1]प्येवं-नं. ज. ग. रा सु.　　[2] धूमत्वगोत्वा–नं. ज. ग. रा. सु.

[3] वेताद्. साक्षि–प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्याप्तिग्रहे साक्ष्युक्तिश्च सामान्येन साक्षिज्ञान-
स्यापि सत्त्वात् । सुधायां पद्धत्युक्तप्रथमपक्षानुक्तिश्च
पद्धतावेवोक्तत्वात् । न च सुधा शक्तिग्रहमात्र-
विषया । पद्धतिस्तु व्याप्तिग्रहमात्रविषयेति शङ्क्य-
म् । पद्धत्युक्तस्य प्रकारद्वयस्य न्यायसाम्येन
शक्तिग्रहेऽपि संभवात् । सुधायाम"प्येतेन कार्य-
कारणभावावधारणादिकमपि समाहितमि"त्यनेन
वाक्येन शक्तिग्रहे उक्तस्य प्रकारस्य व्याप्त्यादि-
ग्रहेऽतिदेशाच्च ॥

अत एव--

"आगमोपि हि सामान्यदृष्टे प्रत्यक्षतः पुनः ।
विशेषं गमयेदेव कथं शक्तिग्रहोऽन्यथा ॥

---

पूर्वश्लोकव्याख्यानप्रदेश इत्यर्थः । अत एवेति । पद्धत्युक्तप्रकारद्वयस्य शक्तिग्रहे संभवादेवेत्यर्थः । आगमोपीत्यादिश्लोकः अतीतवर्तमानत्वग्राहिणीति श्लोकात्किंचिद्व्यवहितपूर्वतनग्रन्थस्थः । सन्न्यायरत्नावळीनामानुव्याख्यानस्य चिरन्तनटीका ॥

यद्यपि तत्रातीतानागतपदार्थेषु सामान्याकारेण साक्षिप्रतीतेषु पदानां वाचकत्वशक्तिर्गृहीतेत्येव पाठात् सा[1]क्ष्येवातीताद्युप[2]स्थितारिति भाति । तथाऽपि सामान्येन साक्षिज्ञानस्यापि सत्त्वात्साक्षीत्युक्तिः । तावता सहकारिसामर्थ्येन चाक्षुषोपस्थिते[3]र्न निरासः । अत एव तत्रापि सामान्याकारेणेत्युक्तिरिति भावेन सामान्याकारेण साक्षिप्रतीतेष्वित्यंश-प्रहाणेनावशिष्टवाक्योदाहरणमित्यदोषः ॥

---

[1] क्षिण्येवाती-ए. [2] स्थापक-नं. [3] तेर्निरा-ए. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अतीतानागतार्थेषु"—

इत्यनुव्याख्यानव्याख्यावसरे सन्नचायरत्नावल्या मतीतानागतपदार्थेषु वाचकत्वशक्तिर्गृहीतेत्याद्युक्तम् ॥

यत्तु—सुधायामतीतानागतार्थेष्वित्यनुव्याख्यानस्यानागतादिविषयलडादिशब्दविषयत्वेन व्याख्यानं, तत्पद्धत्युक्तद्वितीयपक्षाश्रयणेन गवादिशब्देष्वन्यथोपपत्तिशङ्कायामपि न लडादिशब्देष्विति दर्शयितुम् ॥

अनुगतजात्यभावेऽपि शक्तिव्याप्त्यादिग्रहणसमर्थनम् ॥ २९ ॥

ननु—सुधायामतीते लुङन्तस्यानागते लृडन्तस्य शक्तिग्रहोक्तिपरत्वेनैवातीतेतिश्लोको व्याख्यातः, न सर्वशब्दशक्तिग्रहोक्तिपरत्वेन। अतः कथं तत्संमतिरुच्यत इत्यत आह—यत्त्विति । द्वितीयपक्षे सादृश्यनिरूपकत्वेन सर्वोपस्थितेरभावात्साक्षिणैवातीताद्युपस्थितेर्वक्तव्यत्वाल्लुङ्लडादिशब्दव्युत्पत्त्यर्थमतीतादिविषयोपस्थापकतया साक्षी स्वीकार्य इत्यभिप्रायेणेत्यर्थः। आद्यपक्षे तु सन्नचायरत्नावल्युक्तदिशा भवत्येवोक्तार्थे संमतिरिति भावः । किमर्थमेवं तत्र सुधायां व्याख्यातमित्यत आह—गवादीति । गोत्वादिसामान्यप्रत्यासत्त्यादिनाप्यतीताद्युपस्थितिसम्भवेन नावश्यमनेक गोपिण्डे गोपदशक्तिग्रहोपयोगितयातीतादिगोपिण्डोपस्थितये साक्षीस्वीकार्य इत्यन्यथोपपत्तिशङ्कायामपि लङ्लडादिशब्दव्युत्पत्तावतीताद्युपस्थितेरावश्यकत्वेनावश्यं साक्षी स्वीकार्य इति दर्शयितुमित्यर्थः ॥

इत्यनुगतजात्यभावेऽपि शक्तिव्याप्त्यादिग्रहसमर्थनम् ॥ २९ ॥



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ स्वर्णघटत्वादिप्रतिबन्दी ॥ ३० ॥

किं च त्वन्मतेऽपि–सुवर्णघटादौ तेजस्त्वादिना सङ्करापत्त्या घटत्वादिजातिः पृथिवीत्वादिव्याप्या नानैव । तारत्वादिजातिरपि कत्वा[1]दिजात्या चैत्रजत्वजात्या सङ्करापत्त्या गत्वादिव्याप्या नानैव । उद्भूतत्वजातिरपि नीलत्वादिना सङ्करापत्त्या

## अथ स्वर्णघटत्वादिप्रतिबन्दी ॥ ३० ॥

परसम्मत्याऽप्यननुगतधर्मेण शक्तिग्रहमुपपादयितुमुपोद्धातमाह— किं च त्वन्मत इति । नानैवे[2]त्येतैरन्वयः । सङ्करेति । परस्परपरिहारेण वर्तमानयोरेकत्र समावेशः सङ्करः । इह च तेजस्त्वपरिहारेण मृद्घटे सतो घटत्वस्य घटत्वपरिहारेणालोकादौ सतस्तेजस्त्वस्य स्वर्णघटे समावेशात्स्वर्णस्य च परमते तेजस्त्वादतः साङ्कर्यदोषनिरासाय नानैवोपेया । तथा च तेजस्त्वादिव्याप्यस्य घटत्वस्य तेजस्त्वादिपरिहारेणान्यत्रावर्तमानत्वान्न साङ्कर्यम् । स्वर्णघटादौ घटत्वादिजातिर्नेति मतेनाह— तारत्वेति । तारत्वकत्वयोस्तारगकारे मन्दककारे च सतोस्तारककारे समावेशात्साङ्कर्यम् । चैत्रजत्वेति । चैत्रजन्यतावच्छेदकजात्येत्यर्थः । तारत्वचैत्रजन्यतावच्छेदकजात्योः मैत्रीयतारककारे चैत्रकृतकटादौ च सतोश्चैत्रजन्यतारककारे समावेशात्साङ्कर्यं स्यात्तन्निरासाय नानैव वाच्या । एवमुद्भूतत्वनीलत्वयोः शुक्लरूपानुद्भूतनीलरूपयोः सतोरुद्भूत-

[1] त्व चैत्रत्वादिजात्यासं–नं. ज.   कत्वचैत्रजत्वादिजात्यासं–ग. रा. सु.
[2] त्यन्तै–ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शुक्लत्वादिव्याप्या नानैव । एवं च यथा—तत्र घटत्वादीनां नानात्वेऽपि घटादिशब्दव्युत्पत्तिः, घटस्य कपालं प्रतिव्याप्यता, जलाहरणादिकारणता, घटाकारानुगतप्रत्ययश्च; तथा गोत्वानां नानात्वेऽपि व्युत्पत्त्यादिकं किं न स्यात् ॥

न च घटत्वं संस्थानरूपावयवसंयोगवृत्तीति न सङ्कर इति वाच्यम्। अन्यतरकर्मादिप्रयोज्य-

---

नीलरूपे घटादिनिष्ठे समावेशेन साङ्कर्यनिरासाय नानैव वाच्येत्यर्थः । अस्तु किं तत इत्यत आह--एवं चेति । नानात्वे सतीत्यर्थः । घटादिशब्दव्युत्पत्तिरिति । मृद्घटादौ स्वर्णघटादौ चेत्यर्थः । व्याप्यतेति । यो घटः स कपालाश्रित इति व्याप्यतेत्यर्थः । मृद्घटादौ स्वर्णघटादौ चेति चतुर्ष्वपि सम्बध्यते । आदिपदेन तारादिशब्दव्युत्पत्तिग्रहः ॥

ननु—घटत्वं पृथिव्यात्मकेषु घटेष्वेकमेव । स्वर्णघटेष्वपि सर्वत्रैकमेव । गोत्वादि तु त्वन्मते बहु । एवं च घटत्वबहुत्वाभावान्न दोष इति चेन्न । अननुगतत्वे समानेऽस्य वैषम्यस्याप्रयोजकत्वात् । तारत्वादीनां बहुत्वेन तारादिशब्दव्युत्पत्त्याद्यभावापातस्यापरिहाराच्च । एकदेशिमतेन शङ्कते—न च घटत्वमिति । न सङ्कर इति । तेजस्त्वादिनैकत्राधिकरणे समावेशाभावादिति भावः । अन्यतरेति । संयोगो हि न्यायमतेऽन्यतरकर्मजोभयकर्मजसंयोगजभेदेन त्रिविध इति कारणत्वत्रयजन्यतावच्छेदकजातयोऽपि संयोगे तृणारणिमणिन्यायेन तिस्रोऽङ्गीकार्याः। तथा चान्यतरकर्मप्रयोज्या जातिर्घटत्वप्रहाणेन श्येनस्थाणुसंयोगेस्ति । घटत्वमपि तत्प्रहाणेन कपालद्वयकर्मजन्यसंयोगेस्ति । उभयमप्यन्यतरकपालकर्मजन्यकपालान्तरसंयोगेस्तीति साङ्कर्यम् । एवमुभयकर्मप्रयोज्य-



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जात्या सङ्करापातात्। स्थूलो घटश्चलतीति घटत्वस्य परिमाणकर्मादिसामानाधिकरण्यप्रतीतेश्च ॥

यदि च तारत्वादीनां सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकशब्दवृत्तिजातित्वेनानुगमस्तर्हीहापि गोत्वानामनुगतसादृश्यसंबन्धित्वेनानुगमोस्तु ॥

अपि च त्वन्मते यथा ज्ञेयत्वाभिधेयत्वमूर्तत्वकार्यत्वस्वरूपत्वजातित्वादीनामननुगमेपि ज्ञेयाभिदेयादिशब्दव्युत्पत्तिस्तत्तदुचितव्याप्त्यादि[1] श्च, तथाऽत्रापि किं न स्यात् ॥

न च ज्ञेयत्वादीन्यप्यनुगतानि। जातित्वापत्तेः। न चेष्टापत्तिः। सामान्यादावपि वृत्तेः ॥

---

जात्यादिनाऽपि साङ्कर्यं ध्येयम्। द्रव्यनिष्ठत्वावगाहिप्रत्यक्षबाधं चाह—स्थूल इति। यदपि तारत्वं नानेति तारादिशब्दव्युत्पत्त्यादिर्न स्यादित्यादिपदप्रयोगेनाभिमतं[2] तत्रानुगतिमाशङ्क्याह—यदि चेति। सजातीयेति। व्याख्यातमेतच्छब्दनित्यत्ववादे। अनुगतेति। प्रागुक्तदिशानुगतं धर्मिप्रतियोगितया सर्वत्र विद्यमानं सादृश्यसंबन्धित्वमित्यर्थः॥

ननु सादृश्यान्यपि नानासंबन्धित्वान्यपि तथैव, शब्दानुगममात्रस्यातिप्रसञ्जकत्वादिति भावेनाह—अपि चेति। मूर्तत्वमियत्तावच्छिन्नपरिमाणवत्त्वम्। कार्यत्वम् कृतिविषयत्वम्। तत्तदुचितेति। यज्ज्ञेयं तत्सत्, यदभिधेयं तत्प्रमेयमित्यादि तत्तदुचितेत्यर्थः। अत्रापीति। गोत्वानामननुगमेऽपि गवादिशब्दव्युत्पत्त्यादीत्यर्थः। केवलान्वयिग्रन्थे

---

[1] दिग्रहश्च–रा. सु. [2] ता–नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु च—ज्ञेयत्वादीनि ज्ञानत्वाभिधात्वपरिमाणत्वकृतित्वादिजातिरूपाण्येव, औपाधिकधर्माणामुपाध्यनतिरेकात्, तानि च पम्परासंवन्धेन घटादावनुगतानीति चेत्। तर्हिहापि सादृश्यद्वार[1]कपरम्परासंवन्धेनैकमात्रवृत्तिगोत्वं वा नानाव्यक्तिसंवन्धि सादृश्यं वा तच्छब्दे वक्तृनिष्ठबुद्धिरिव गोमात्रानुगतमस्तु ॥

किं चात्यन्तव्यावृत्तैकस्वभावेष्वन्त्यविशेषु जातिरूपस्यौ[2]पाधिकधर्मरूपस्य वानुगतधर्मस्य स्वीकारे व्यावृत्तैकस्वभावात्मकस्वरूपहानिः स्यात्।

---

मण्याद्युक्तदिशा शङ्कते—-नन्विति। औपाधिकेति । ज्ञेयत्वादीनां ज्ञानाद्यनतिरेकाज्ज्ञानत्वादिरेव ज्ञेयत्वादीति भावः। परम्परेति । स्वसमवायिविषयत्वरूपसंवन्धेनेत्यर्थः । एकमात्रवृत्तिगोत्वमिति। पुरोवर्तियत्किञ्चिद्गोपिण्डानिष्ठं गोत्वं स्वप्रतियोगिकसादृश्याधारभूतगोत्वाश्रयत्वरूपपरम्परासंबन्धेन सर्वगोसंवन्धितयानुगतमिति गोशब्दव्युत्पत्त्यादिरस्तु। सादृश्यं वा स्वसंवन्ध्यनन्तगोव्यक्तिषु स्वसंवन्धित्वसंवन्धेनानुगतमितिव्युत्पत्त्याद्युपपत्तिः । वक्तृनिष्ठबुद्धिर्वक्तृबुद्धिविषयानेकार्थेषु स्वसंवन्धित्वेन सर्वानुगता सती सर्वनामसंज्ञकतत्पदस्य व्युत्पत्तौ निमित्तं भवति । सर्वनाम्नां बुद्धिस्थवाचकत्वप्रसिद्धेः । तथाऽत्रापीत्यर्थः । तार्किकाभिमतनित्यद्रव्यगतविशेषप्रतिबन्धाप्यननुगतधर्मपक्षे व्युत्पत्त्याद्युपपादयितुमाह—किं चात्यन्तेति । व्यावर्तकान्तराभावेऽपि व्यावृत्तेत्यर्थः ॥

---

[1] रापर–नं. ज. [2] स्य वा औ–नं. ग.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न हि साक्षात्संवन्धेन धर्मेणानुगमे व्यावृत्तैकस्वभावहानिर्न तु परम्परासंवन्धेनानुगम इति संभवति । तस्मात्तत्रानुगतेन सादृश्येनैव व्युत्पत्त्यादिकं वाच्यमित्यत्रापि[1] तथैवास्तु ॥

किं च त्वत्पक्षे जातिवदाकृतेरपि प्रवृत्तिनिमित्त[2]त्वादाकृतिरप्यनुगतैवास्तु ॥

तस्मात्सुवर्णघटत्वादिवज्ज्ञेयत्वाद्यौपाधिकधर्मवदन्त्यविशेषवदाकृतिवच्चाननुगतजातेरपि प्रवृत्तिनिमित्तत्वं युक्तम् ॥

स्वर्णघटत्वादिप्रतिवन्दी ॥ ३० ॥

---

नन्वौपाधिकधर्मरूपस्योपाध्यनतिरेकादित्युक्त्या परम्परासंम्वन्धेनौपाधिकधर्मघटकोपाधिनिष्ठजातिविशेषेण विशेषाणामनुगमे स्वरूपहानिर्नास्त्येव अनुगतौपाधिकधर्मस्वीकारे स्वरूपहानिः स्यादित्ययुक्तमित्यत आह—नहीति । नियामकाभावादिति भावः । मास्तु तत्रानुगतो धर्मः किं तत इत्यत आह—तस्मादिति । अनुगतधर्मसत्त्वे रूपहानिप्रसङ्गादित्यर्थः । आकृतेरपीति । अवयवसंस्थानविशेषस्येत्यर्थः । व्यक्त्याकृतिजातयः पदार्थ[3] इति गौतमसूत्रान्मण्याद्युक्तपदशक्ति[4]वादेस्य व्यक्तत्वाच्चेति भावः । पूर्वोक्तप्रतिवन्दीचतुष्टयं संग्रहेणानुवदन्नुपसंहरति—तस्मादिति ॥

स्वर्णघटत्वादिप्रतिवन्दी ॥ ३० ॥

---

[1] त्वन्यत्रा–नं. ग. रा. सु. [2] वज्जातिरप्यननुगतै–नं. ग. रा. सु.
[3] र्थौ–नं. प. [4] ग्रहस्यव्य–नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ अनुगतजातौ बाधकम् ॥ ३१ ॥

किं च स्थूलमुत्पन्नं, स्थूलं नष्टं, [1]नीलमुत्पन्नं नीलं नष्टमितिवद्घट उत्पन्नो [2]घटोनष्ट इत्यनुभवा-त्प्रत्यक्षा[3]देव जात्युत्पत्तिविनाशौ ॥

## अथ अनुगतजातौ बाधकम् ॥ ३१ ॥

नन्वस्त्वेवं स्वर्णघटाद्युक्तस्थलचतुष्टयेऽनुगतधर्माभावेनानन्यगत्याऽननुगतधर्मैरेव शक्त्यादिग्रहोऽन्यत्र गवादावनुगतगोत्वादिसंभवे तेनैव शक्त्यादिग्रहोऽस्तु। तत्रानन्यगतिकत्वाभावादित्यतस्तत्रापि त्वदभिमतनित्यैकानुगतधर्मो नास्त्येव। प्रमाणबाधात्, साधकमानाभावाच्चेति भावेन—

कुतो भस्मत्वमाप्तस्य नरत्वं पुनरिष्यते ।
एकत्वे नास्ति मानं च . . . ॥

इत्यादिवैशेषिकनयानुव्याख्याने सुधावाक्यानि हृदि कृत्वा जातिविशिष्टवस्तूत्पत्तिनाशगोचरप्रत्य[4]क्षेण समवाय्युत्पत्तिनाशादियुक्त्या जातेरुत्पत्तिनाशबोधकागमेन जातिमात्रोत्पत्त्यादिग्राहिप्रत्यक्षेण श्रुत्या च जातेर्नित्यत्वादिकमपाकुर्वन्नादौ तावद्विशिष्टप्रत्यक्षेण जातेरनित्यत्वमाह—किं चेत्यादिना। परिमाणस्य नीलरूपस्य चोत्पत्तिविनाशप्रत्ययाकाराभिनयोऽयं स्थूल[5]मित्यादि। इत्यनुभवादिति। अस्य च घटपटत्वादिजातिव्यक्त्युभयविषयकत्वात्प्रत्यक्षावेव जात्युत्पत्तिविनाशावित्युक्तम् ॥

[1] नीलमुत्पन्नमिति नास्ति—नं. ज. [2] पट उत्पन्नः घटो नष्टः पटो नष्टः—ग. [3] देव—नं. ज. रा. सु. [4] त्ययेन—नं. उ. [5] लमुत्पन्नमि—उ. प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च विशिष्टोत्पत्त्या[1]दिविषयेयं धीर्विशेष्यव्यक्तिमात्रोत्पत्त्यादिनाऽपि युक्तेति वाच्यम् । वैपरीत्यस्यापि सुवचत्वात् । स्थूलमुत्पन्नमित्यादिबुद्धेरपि तथात्वापाताच्च ॥

किं च यथा द्रव्ये सत्येव पाकेन नीलरक्तरूपयोर्नाशोत्पादौ तथा द्रव्ये सत्येवौषधादिना ताम्र-

---

ननु—जातिविशिष्टव्यक्तिविषयकोऽयमनुभवो न घटघटत्वोभयविषयकः । घटघटत्वे उत्पन्ने इत्युभयोत्पत्तिनाशाविषयीकरणात् । तथा चान[2]न्यथासिद्धोस्त्विति शङ्कते—न चेति । किमन्यतरमात्रविषयत्वेनोपपत्तौ उभयविषयकत्वे कल्पनागौरवादेवं कल्प्यते, अथ दण्डी नास्तीत्यादाविव विशेषणे बाधात् । आद्य आह—वैपरीत्यस्यापीति । जातिमात्रोत्पत्त्यादिनेत्यस्यापीत्यर्थः । लाघवस्यैवमपि संभवात् । प्रत्युत एतदेव युक्तम् । विशेष्यं नाभिगच्छेत् क्षीणशक्तिर्विशेषणे इति न्यायादिति भावेनोक्तम्—सुवचत्वादिति ॥

ननु प्राधान्याद्विशेष्यविषयत्वमेवोत्पत्त्यादिबुद्धेर्युक्तम् । न तु गुणभूतधर्मपरत्वमित्यत आह—स्थूलमिति । तथात्वेति । विशेष्योत्पत्तिपरत्वेत्यर्थः ॥

ननु सत्येव द्रव्ये नीलादिगुणस्य निवृत्तिदर्शनान्न तत्र तथात्वापातो युक्त इत्यत आह—किं चेति । पीलुपाकप्रक्रियाया अप्रमाणकत्वाद्वक्ष्यमाणप्रत्यभिज्ञाप्रमाणविरुद्धत्वात्, सुधायां जातिनिरासप्रस्ताव एव दूषितत्वाच्च, पिठरपाकप्रक्रियैवोपेयेति भावेनोक्तम्—द्रव्ये सत्येवेति । द्वितीयेपि किं व्यक्तिनाशस्थळीयजात्यनुभवो वा बाधक-

---

[1] आदिपदं न—नं. ज. [2] चान्यथा—उ. ए.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वरजतत्वयोरपि तौ दृश्येते। न च पुरुषे नष्टेऽपि दण्डवद्व्यक्तौ नष्टायामपि तत्रैव प्रदेशे जातिरनुभूयते। येनोत्पत्त्यादिधीर्विशेष्योत्पत्त्यादिमात्रविषया स्यात्। व्यक्त्यन्तरेऽनुभवस्तु परिमाणादावप्यस्ति। व्यञ्जकव्यक्तेरभावात्तत्र जातेरननुभवकल्पनं तु परिमाणादावपि समम्। न चाद्यापि जातेर्नित्यत्वं सिद्धम्। येन परिमाणादितो वैषम्यं स्यात्। तदेवेदं गोत्वमिति प्रत्यभिज्ञाया अभावात्। अयं गौरयमपि च गौरिति धीस्त्वयं स्थूलोऽयमपि च स्थूल इति धीवत्सादृश्यविषया॥

किं च तत्समवेतस्य तदुत्पत्तेः पूर्वं तन्नाशानन्तरं

---

उत व्यक्त्यन्तरे तदनुभवो वा। आद्यं निराह--न चेति। द्वितीयं निराह--व्यक्त्यन्तर इति॥

ननु--व्यक्तिनाशप्रदेशे जातेः सत्त्वेपि व्यञ्जकाभावादननुभवोस्त्वित्यत आह--व्यञ्जकेति॥

ननु--परिमाणादौ नित्यत्वासिद्ध्याऽनुपलम्भस्य व्यञ्जकाभावप्रयुक्तत्वकल्पनं निर्बीजम्। जातौ तु नैवमित्यत आह--न चाद्यापीति। ननु[1]--प्रत्यभिज्ञया अनुगतमत्या वा जातेर्नित्यत्वं सिद्धमित्यतः प्रत्यभिज्ञानस्य स्वरूपतः प्रमाणत्वेन च संदिग्धत्वादित्यादिसुधोक्तं व्यञ्जयन्नाह--तदेवेदमिव॥

नन्वनादिजातेः कथं न नित्यत्वम्। जातिर्नित्या अनादिभावत्वाद्गगनवदित्यनुमानविरोधादित्यत आह--किं चेति। यद्वा जाते-

---

[1] न च--नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चासत्त्वनियमात्कथं घटत्वा[1]देरनादित्वं नित्यत्वं च ॥

अपि च जातेर्द्वित्वादिवद्व्यासज्यवृत्तित्वे तद्वदेव यावत्स्वाश्रयप्रतीतिं विनाऽप्रतीतिः स्यात् । अग्निमात्रोद्देशेन द्रव्यत्यागेऽग्नीषोमीयशास्त्रार्थ इवैकगोव्यक्तिदाने गां दद्यादित्यादिशास्त्रार्थोऽननुष्ठि-

रनित्यत्वे प्रत्यक्षमुक्त्वा अधुना विमतं विनाशवत् विनाशवदाश्रयसमवेतत्वाद्रूपादिवदित्यादिसुधोक्तयुक्तीराह—-किंचेत्यादिना अस्मन्मतापत्तिरित्यन्तेन ग्रन्थेन । नियमादिति । अवयविगुणकर्मसु तथादर्शनादिति भावः ॥

नन्वनुगतत्वमेव जातेरनित्यत्वे बाधकमतो नष्टो घट इत्यादिबुद्धेर्व्यक्तिविषयत्वमेव युक्तमित्यतः "योऽनेकाश्रितो धर्मो नासावेकैकप्रतीतौ प्रतीयते यथा द्वित्वादिः । प्रतीयते च नरत्वादिकमेकैकप्रतीतावतो नानुगतामि"त्यादिसुधोक्तिं व्यञ्जयन्ननुगतत्वमपि निराह—अपि चेति। जातिः प्रतिव्यक्त्यपरिसमाप्य वर्तते अथ परिसमाप्य । आद्य आह—- जातेरित्यादि । अप्रतीतिः स्यादिति पदच्छेदः । प्रतीतिर्न स्यादित्यर्थः । अग्निमात्रेति । पौर्णमास्यां हि आग्नेयोपांशुयागाग्नीषोमीयाख्यकर्मत्रयमनुष्ठीयते । तत्र यदाग्नेयोऽष्टाकपालोऽमावास्यां[2] च पौर्णमास्यां चाच्युतो भवतीतिवाक्योक्तस्याष्टसु कपालेषु संस्कृतपुरोडाशरूपद्रव्यस्य हविष इति यावत् अग्नय इदं न ममेत्यग्निमात्रोद्देशेन त्यागरूपे आग्नेये यागे अनुष्ठितेऽपि "अग्निषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदि"ति

[1] दिजातेरन—ग. रा. सु. [2] स्यायां पौ—उ. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तश्च स्यात् । देवतात्ववद्गोत्वस्यापि व्यासज्यवृत्ति-
त्वात् । प्रत्येकं परिसमाप्तत्वे च प्रतिव्यक्तिवृत्ति-
तातिरेकेण प्रत्येकपरिसमाप्तेरभावादस्मन्मतापत्तिः॥

अपि च—महापातकादिना ब्राह्मणत्वादिजाति-

---

वाक्योक्ताग्निषोमीययागरूपः शास्त्रार्थो यथा नानुष्ठितः तथात्वे आग्नेयेन कृतार्थत्वादग्नीषोमीयानुष्ठानाभावप्रसङ्गादिति भावः ॥

ननु—समर्थः पदविधिरिति परिभाषया समर्थादेव पदात्तद्धितप्रत्ययानां विधानादग्नेरसहायस्य देवतात्व एवाग्नेर्ढगिति तद्धितविधानेन तत्राग्निमात्रोद्देशेन द्रव्यत्यागेऽनुष्ठितेऽप्यग्नीषोमीयो नानुष्ठित इत्युक्तम्। तत्राग्नेः सोमस्य च द्वयोरितरेतरयोगेनोभयनिष्ठैकदेवतात्वे विवक्षित एव "द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ" इति तद्धितप्रत्ययविधानेन देवतात्वस्य व्यासज्यवृत्तित्वात् । अन्यथा प्रत्येकं तद्धितोत्पत्तिप्रसङ्गादित्यत आह—देवतात्ववदिति । आद्यपक्षे सुधावाक्यं विवृत्य द्वितीयपक्षं स्वयं निराह—प्रत्येकेति । "तथा जातिविशेषयोः" इत्यादिवाक्यव्याख्यावसरे "ब्राह्मणत्वपिण्डयोर्भेदाभेदौ महापातकेन जातेरपायादि" ति तत्त्वविवेकटीकोक्तरीत्या, आगमेन च जातेर्नित्यत्वं निराह—अपि च महापातकादिनेति ॥

"मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयी" ।

इत्याद्यागमसिद्धा शूद्रत्वादिजात्युत्पत्तिः । विश्वामित्र[1]ब्राह्मणत्वजात्युत्पत्तिस्तु—

"गाधेरभून्महातेजाः समिद्ध इव पावकः ।
तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥

---

[1] त्रस्य ब्रा—उ. प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नाशेन शूद्रत्वादिजात्युत्पत्तिर्विश्वामित्रिशङ्क्वादीनां वरशापादिना क्षत्रियत्वादिजातिनाशेन ब्राह्मणत्वादिजात्युत्पत्तिश्चागमसिद्धा। स्पर्श[1]वेध्यादि संबन्धेनायसोप्ययस्त्वादिनाशेन काञ्चनत्वादिजात्युत्पत्तिश्च प्रत्यक्षसिद्धेति कथं जातेर्नित्यत्वनियमः।

किंच—

"भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपि

इत्यादिश्रुतिसिद्धः प्रतिव्यक्ति धर्मभेदः। न चा

---

इत्याद्यागमसिद्धा। त्रिशङ्कुनामक्षत्रियस्य चण्डालत्वजात्युत्पत्तिः—

तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः।

प्राप्तश्चण्डालतां शापाद्गुरोः . . . ॥

इत्यादिनवमस्कन्धसप्तमाध्यायस्थागमसिद्धा। कल्माषपादस्य ब्रह्मरक्षस्त्वजात्युत्पत्तिः—

"आहुर्मित्रसहं यं वै कल्मषाङ्घ्रिमतः क्वचित्।

वसिष्ठशापाद्रक्षोऽभूत् . . . ॥

इत्यागमसिद्धेत्यर्थः। स्पर्शवेधी नामौषधिविशेषः। वैशेषिकनयानुव्याख्यानोक्तश्रुतिमाह—भिन्नाश्चेति। न च भिन्नधर्मा इत्यस्य स्वस्माद्भिन्नधर्मवन्त इत्यर्थ इति शङ्क्यम्। "स्वैः स्वैर्धर्मैरभिन्नाश्च" इति श्रुतिविशेषविरोधादिति भावः॥

ननु मासेन शूद्र इत्यादिरागमः क्षीरविक्रय[2]निन्दापरो वर्णत्रयकर्महानिप्रतिपादनार्थो वाऽस्त्वित्यत आह—न चेति। उपलक्षणमेतत्।

---

[1] र्शादिसं–न. ज. [2] कर्म-त्यधिकम्–उ. प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सति बाधके आगमस्य गौणार्थत्वम् अयः पिण्डमेव स्वर्णं जातमिति प्रत्यभिज्ञाभ्रान्तित्वं च युक्तम् ॥

किं च धर्मधर्मिणोरभेदस्यान्यत्र समर्थितत्वात्कथं व्यक्त्यभिन्नाया जातेरनुगतिः ॥

---

कर्मनिन्दापरत्वे तस्मात् "ब्राह्मणं ना[1]वगुरेदित्यवगोरणादिनिषेध[2]शेषभूतानां "योवगुरेत्तं शतेन यातयादि'ति शतयातनादिवाक्यानामपि कर्मनिन्दापरत्वेन फलपरत्वाभावप्रसङ्गेन "शंयौ च सर्वपरिदानादि"ति तृतीयाध्यायचतुर्थपादीयावगोरणाधिकरणविरोधापत्तिः । वर्णत्रयकर्महानिप्रतिपादनार्थत्वे च वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादावपि ब्राह्मणशब्दस्य क्षत्रियवैश्यकर्मरहितपरत्वस्य वक्तुं शक्यत्वेन शूद्रस्याप्यग्निविद्यासंभवेन वैदिककर्माधिकारापत्त्या षष्ठाद्यपादस्थापशूद्राधिकरणविरोधापत्तिश्चेत्यपि ध्येयम् ॥

यदपि–गाधेरभूदित्याद्यागमोऽपि विश्वामित्रस्य ब्राह्मणकर्मयोग्यत्वपर एवेति । तदपि न । असति बाधके मुख्यार्थत्यागायोगात् । जातिनित्यत्वस्याद्याप्यसिद्धेश्चेति भावः ॥

ननु यदुक्तं स्पर्शवेधीत्यादि तन्न । तादृशप्रत्यक्षस्यैवासिद्धेः । सिद्धौ वा भ्रान्तित्वमस्त्वित्यत आह––अयः पिण्डमिति । न चासति बाधक इत्यनुषञ्जनीयम् । पीलुपाकप्रक्रिया त्वप्रामाणिकी प्रमाणबाधिता चेति भावः । एतेन द्रव्ये सत्येवेत्यादि प्रागुक्तं च समर्थितं ध्येयम् । अन्यत्रेति । वैशेषिकनयानुव्याख्यानादौ तत्त्वविवेकादिग्रन्थे चेति भावः॥

---

[1] सर्वत्र पकार–नं. उ. ए. [2] धदोषभू–नं उ. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ऐतेन लाघवाज्जातिरेकैवेति निरस्तम् । उक्तं चानुव्याख्याने—

"नरत्वादिकमप्येवं तत्तद्धर्मतयेयते"

इति । तस्माद्रूपादिवज्जातिर्नानैव सामान्यं तु समानानां भावः सामान्यमिति व्युत्पत्त्या सादृश्यमेव । तच्चोक्तरीत्याऽनुगतम् । तस्माज्जातिविशिष्टव्यक्तिनाशादेर्घटो नष्ट इत्यादिप्रत्यक्षेण जातिनाशादेस्समवायिनाशप्रत्येकपरिसमाप्त्यादियुक्त्या व्यक्तौ सत्यामेव ताम्रत्वायस्त्वादि[1]नाशादेः प्रत्यक्षेण ब्राह्मणत्वादिजातिनाशादेरागमेन प्रतिव्यक्तिधर्म-

एवं जातेर्नित्यत्वमनुगतत्वं च निरस्यैकत्वमपि निराह—एतेनेति । नित्यत्वानुगतत्वखण्डनेनेत्यर्थः । उक्तं चेति । जातेरननुगतत्वं वैशेषिकाधिकरणे उक्तमित्यर्थः । ईयते प्रतीयते इत्यर्थः ॥

नन्वेवं सामान्यविशेषादिव्यवहारस्य का गतिरित्यत आह—सामान्यं त्विति । समानानां सदृशानामित्यर्थः । उक्तरीत्येति । शक्तिव्याप्त्यादिग्रहसमर्थनवादोक्तरीत्येत्यर्थः । घटो नष्ट इत्यादिप्रत्यक्षेणेति । विशिष्टनाशविषयप्रत्यक्षेणेत्यर्थः । किं च यथा द्रव्ये सत्येवेत्यादिनोक्तस्य स्पर्शवेध्यादीत्यादिनोक्तस्य चैकार्थतया सकृदुभयसङ्ग्रहरूपत्वादागमसिद्धेत्यतः पश्चादुक्तस्यापि पूर्वसङ्ग्रहानुवादः । किं च यथा द्रव्ये सत्येवेत्यादिनोक्तस्यैवोदाहरणान्तरेण पुनर्व्यक्तीकरणमात्रं, तदपि प्रत्यभिज्ञारूपप्रत्यक्षप्रदर्शनेन तस्याभ्रान्तित्वोक्त्यर्थं पीलुपाकप्रक्रियानिराकरणार्थं चातो न पुनरुक्तिदोषः इत्याहुः ॥

[1] द्विजातिना—ग. रा. सु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भेदस्य चोक्तश्रुत्या सिद्धत्वान्न जातेरनुगमः। तदेवं जात्यभावेऽप्यन्विते शक्तिग्रहो युक्तः ॥

एवं लिङादिरप्यन्वितेष्टसाधनत्वरूपविधौ शक्त इतीष्टसाधनत्व[1]ज्ञानमेव प्रवर्तकम् ॥

अनुगतजातौ बाधकम् ॥ ३१ ॥

## अथ आप्ताभिप्रायस्य लिङाद्यर्थत्वे बाधकम् ॥ ३२ ॥

नन्विष्टसाधनत्वं न विधिः। तथात्वे करण-

---

ननु त्वन्मते सर्वगोव्यक्तिसङ्ग्राहकस्येत्यादिनोक्तवादत्रयार्थमुपसंहरति—तदेवमिति। उत्तरवादोपक्षेपा[2]र्थमाह—एवमिति। "ज्ञात्वैवं हीष्टसाधनतां प्रवर्तत" इत्याचार्योक्तिराह—इष्टसाधनत्वज्ञानमेव प्रवर्तकमिति ॥

ननु—विधिज्ञानं प्रवर्तकं विधिश्च लिङर्थः "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्, लोट्चे" त्यादिपाणिनिस्मरणात्। कथमेवमित्यत उक्तं—इष्टसाधनत्वरूपविधाविति। न्यायमतद्वैलक्षण्यज्ञापनायोक्तं—अन्वितेति। यागादियोग्येतरान्वितेत्यर्थः ॥

अनुगतजातौ बाधकम् ॥ ३१ ॥

## अथ आप्ताभिप्रायस्य लिङाद्यर्थत्वे बाधकम् ॥ ३२ ॥

प्रागुक्तमाक्षिपति—नन्विति। विधिनिमन्त्रणेत्यादिपाणिनिसूत्रे

---

[1] त्वमेव-नं. ज. [2] पायाह-नं. प.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वस्य विध्यर्थेन लिङाभिहितत्वेन 'उद्भिदा यजेते' त्यादावनभिहिताधिकारविहिततृतीयाऽनुपपत्तेरिति चेन्न। साधनत्वेऽभिहितेऽपि तद्विशेषस्य करणत्वस्यानभिधनात्। लिङाऽन्तरङ्गस्वप्रकृति-

लिङ्गाद्यर्थत्वेनोक्तो विधिरिष्टसाधनत्वं न भवतीत्यर्थः । येन तज्ज्ञानं प्रवर्तकमिति भावः। विध्यर्थेनेति बहुव्रीहिः। अभिहितत्वेन कथितत्वेनेत्यर्थः। अनभिहिताधिकारेति। द्वितीयस्य तृतीयपादे "नभिहित" इत्यधिकारसूत्रम्। तिङ्कृत्तद्धितसमासैरकाथित इत्यर्थका[1]नभिहिताधिकारेऽनभिहित इत्यनुवृत्तिप्रकरणे "कर्तृकरणयोस्तृतीयेति" सूत्रेण तिङाद्यनभिहितकर्तरि करणे च तृतीया भवतीति विहित तृतीया न स्यात्। उद्भिदा यजेत पशुकाम इति पशुरूपेष्टसाधनत्वस्य यागनिष्ठत्वेन तस्य यागान्वितस्य यजेतेति तिङाऽभिहितत्वात्। उद्भिदेत्युपपदस्य चाद्याध्यायचतुर्थपादीयोद्भिदधिकरणन्यायेन यागनामत्वेन यागनिष्ठकरणत्वस्यैवोद्भित्पदगततृतीयाऽर्थत्वादिति भावः। तद्विशेषस्येति। "साधकतमं करण" मिति पाणिनिस्मृत्याऽतिशयितसाधनत्वरूपसाधनत्वविशेषस्य करणत्वात्तस्यैव च तृतीयार्थत्वादस्माभिश्चेष्टसाधनत्वस्यैव विधित्वाङ्गीकारेणेष्टकरणत्वस्य विधित्वानङ्गीकारात्। तथा चोद्भिद्यागः इष्टसाधनं करणकारकं चेति [2]लिङ्तृतीयाविभक्तिभ्यामर्थो लभ्यत इति भावः॥

ननु—कारणत्वेनोद्भिदादियागस्य लिङाऽनभिधानेऽपि साधनत्वेनाप्यभिहितत्वात्कथं तृतीयेत्यतः साधनत्वेनाप्यभिधानमुद्भिदादेर्विशेषस्य नेत्याह—लिङेति। यद्वा लिङा करणत्वाभिधानेपि तृतीयालभ्यकरणत्वस्याभिधानं नास्त्येवेत्याह—लिङेति। उपपदा[3]न्वयात्पूर्वमेव लिङर्थान्वये

[1] र्थकम्। अन—उ. ए. [2] तिङ्तृतीया—ए. [3]दात्पू—नं. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यज्यर्थमात्रगतेष्टसाधनत्वेऽभिहितेऽपि यागविशेष-
रूपोद्भित्प्रातिपदिकार्थगतस्य तस्यानभिधानेनोद्भि-
त्प्रातिपदिकात्परस्याः तृतीयायाः संभवाच्च ॥

हेतुरन्तरङ्गेति । तत्र हेतुः [1]स्वप्रकृतीति । अन्विताभिधानवादेपि सामान्यत एवेतरान्वितस्वार्थबोधकत्वेन विशेष्येतरान्वितस्वार्थाभिधानस्य पदान्तरसमभिव्याहारकृतत्वादिति भावः ॥

एतेन लिङैव साधनबोधना[2] उद्भिदेति तृतीया व्यर्था शब्दसाधुत्वमात्रार्था वेति निरस्तम् । लिङनुक्तकरणत्वार्थकत्वेन वोद्भित्प्रातिपदिकार्थगतकरणत्वार्थकत्वेन वा तृतीयायाः सार्थक्यसंभवात् ॥

यत्तु साधनत्वसामान्यमुखेन यागसाधनत्वसामान्यमुखेन वोद्भिद्रूपयागविशेषस्य करणकारकस्याभिधानात् अनाभिहिताधिकारोक्ततृतीया न युक्तेति रुचिदत्ताद्युक्तं । तन्न । यथाकथंचिदभिहितत्वेन तृतीयाया अयोगे कटं कुर्यादित्यादाविष्टसाधनत्वस्य लिङर्थत्वे इष्टत्वेन क[3]टस्याप्यभिहितत्वेन द्वितीयाऽनुपपत्त्यापत्तेः । तेन रूपेणाभिहितत्वस्यैव द्वितीयादिभञ्जकत्वे प्रकृतेऽपि साम्यात् ॥

यत्तु—कर्तृकरणगतसंख्यायाः तिङादिनाऽनभिधाने तृतीया भवति । अभिधाने तु न भवतीति पाणिनीयसूत्रार्थः । इह च करणगतसंख्याया अभिधानाद्भवति तृतीयेति पक्षध[4]रादिमतम् । तन्न । कर्तृकर्मणोराख्यातार्थत्वसमर्थनवादे कर्त्रादिगतसंख्यामात्राभिधायित्वस्य निरसिष्यमाणत्वादिति ॥

[1] स्वपदं न–नं. उ. ए.   [2] नात् उ–ए.   [3] घट–नं. उ. ककारेण शोधितः–ए.   [4] राभिम–नं. उ. ए.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

केचित्तु—यागगतेष्टसाधनत्वमपि संसर्गमर्याद-यैव लभ्यते । न त्वभिधीयत इत्याहुः ॥

ननु तथाऽपि—

नेष्टसाधनत्वं विधिः । कुत इदं कर्तव्यमिति प्रश्ने इष्टसाधनत्वादितीष्टसाधनत्वस्य कर्तव्यत्वे हेतूकरणात् । "तरति[1] मृत्युं तरति ब्रह्महत्यां

यत्तु मणौ विधिवादान्त्यभागे नव्यास्त्वित्यतः पूर्वं वस्तुतस्त्वभि-हितान्वयलभ्यं यागेष्टसाधनत्वं इष्टसाधनत्वमात्रस्य लिङर्थत्वादिति समाधानमुक्तं तदाह—केचित्त्विति । इह च यागस्य धातुलभ्यत्वा-द्यागेष्टसाधनत्वयोराधाराधेयभावस्य च प्रकृतिप्रत्ययस्य समभिव्याहार-बलेन संसर्गमर्यादया भानोपपत्त्या तत्राभिधानवृत्तेर्गौरवेण केवलेष्ट साधनत्वस्यैव लिङाभिधानमिति भावः ॥

अत्रारुचिबीजं तु प्रागेवान्विताभिधानस्यान्वयशक्यत्वेऽशाब्द-त्वाद्यापत्तेरुपपादितत्वेन तत्राभिधावृत्तेरेव वाच्यत्वात्त्वन्मतेऽपि वाक्या-र्थरूपसंसर्गस्याशक्यत्वेऽपि तत्प्रतिपादनं लिङादेरस्त्येवेति ध्येयम् । वक्त्रभिप्राय एव लिङाद्यर्थ इत्युदयनमतमाचार्यास्त्वित्यादिना विधिवा-दान्ते मणिकृदनूदितमाशङ्कते—नन्विति । हेतुत्वादित्यादिवक्ष्यमाण-श्लोकस्थपञ्चहेतून् कुसुमाञ्जलिवर्धमानाभ्यामुक्तरीत्या निष्कृष्टार्थोक्त्या विवृणोति—कुत इदमित्यादिना । लिङ्लोट्तव्यादिनैवेष्टोपायत्वाव-गतौ हेतूक्तिर्व्यर्थेति । आप्ताभिप्रायस्य लिङाद्यर्थत्वेनेदं कर्तव्यमित्यस्य ममैतत्करणानुकूलेच्छा वक्तुरस्तीत्यर्थः स्यात् । तत्र च कुत इत्या-

[1] तिं तरति ब्रह्म—ग. ज. एकं तरतीत्येतद्रेखया दूषितम्—क.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

योऽश्वमेधेन यजेत" इत्यर्थवादेनेष्टसाधनत्वे बुद्धेऽपि विधिप्रत्ययानुमानाच्च। इष्टसाधनत्वबोधानन्तरं कर्मकाले प्रयुक्ताभ्यां कुर्याः कुर्यामिति मध्यमोत्तमपुरुषाभ्यां संबोध्यकर्तृक[1] स्वात्मकर्तृक क्रियाविषययोरभिप्राययोरेव प्रतीतेश्च। इ[2]च्छाविशेषरूपामन्त्रणाद्यर्थके लिङादाविच्छावाचित्वस्य क्लृप्त-

काङ्क्षायां म[3]दिष्टसाधनत्वादिति हेतुरर्थवानिति भावः। इष्टसाधनत्व इति। अश्वमेधयागस्य ब्रह्महत्यातरणे[4]ष्टसाधनत्वेऽवगतेप्यर्थवादाधिकरणे विध्यर्थवादयोरविनाभावस्य सिद्धतयाऽत्रार्थवादेन लिङादिविधिप्रत्ययानुमानादिति वा इष्टोपायत्वस्य विधिव्या[5]प्यत्वात्तेन तदनुमानादिति वाऽर्थः। लिङादिनेष्टसाधनत्वबोधने ब्रह्महत्यातरणकामोऽश्वमेधेन यजेतेति विध्यनुमानं व्यर्थं स्यात्। आप्ताभिपायत्वे त्वश्वमेधादेर्मदिष्टसाधनत्वान्मत्प्रवृत्त्यनुकूलेच्छाऽऽप्तस्यास्तीत्यनुमानभेदाददोष इति भावः॥

मध्यमेत्यादितृतीयहेतुं व्यनक्ति—इष्टेति। तवेदमिष्टसाधनमतः कुर्याः ममेदमिष्टसाधनमतः कुर्यामिति मध्य[6]मोत्तमपुरुषसंज्ञिकाभ्यां लिङादेशप्रत्ययाभ्यां कर्तृद्वयनिष्ठक्रियाविषययोः संकल्पापरपर्यायाभिप्राययोरवगमे तत्रेष्टसाधनत्वार्थकत्वविरहादन्यत्रापि लिङ्लोडादेराप्ताभिप्राय एवार्थो वाच्य इति भावः॥

अन्यत्र क्लृप्तसामर्थ्यादिति हेतुं व्यनक्ति—इच्छेति। "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्, लोट्च, आशिषि

[1] क क्रियावि–ज. ग. कर्तृकेत्यपि नास्ति नं. ध्यस्वात्मकर्तृक–क. ध्यस्वकर्तृकस्वकर्तृकक्रि–सु. ध्यस्वकर्तृकक्रि–रा. [2] च्छविशे–नं. ज. क. [3] मदिति नास्ति–प. [4] णरूपेष्ट–उ. प. [5] प्तत्वा–उ. प. [6] मपुरुषोत्तम–नं. प.



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वाच्च । इष्टसाधनत्वार्थकत्वे मानान्तरविरोधेन 'न कलञ्जं भक्षये' दित्यादौ तन्निषेधानुपपत्तेश्च ॥

तदुक्तं कुसुमाञ्जलौ—

हेतुत्वादनुमानाच्च मध्यमादौ [1]प्रयोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥

इति । तस्मादुक्तबाधकपञ्चकेनेष्टसाधनत्वार्थकत्वस्यायोगाद्वक्त्रभिप्रायरूपविध्यर्थक एव लिङादिरीति ॥

---

लिङ्लोटाविति" पाणिनिसूत्रोक्तदिशा इच्छाविशेषरूपो य आमन्त्रणाध्येषणादिस्तदर्थवाचित्वस्य क्लृप्तत्वात् । तदन्यत्रापि वक्त्रभिप्राय एव लिङ्यर्थो नेष्टसाधनत्वमिति भावः । अपौनरुक्त्यायेच्छाविशेषेत्युक्तम् । विध्यादेः सर्वत्रेच्छारूपत्वेऽप्यवान्तरभेदः कुसुमाञ्जलावेव व्यक्तः ॥

अन्तिमहेतुं व्यनक्ति — इष्टेति । लिङादेरिति योज्यम् । मानान्तरेति । कलञ्जनामकमूलविशेषभक्षणमिष्टसाधनं नेत्यर्थः । आप्ताभिप्रायार्थत्वे तु मम कलञ्जभक्षणकरणेच्छाप्तस्य नास्तीत्यर्थकत्वाददोषः । स चाप्तो वेदे भगवानीश्वर एवेति भावः । तदुक्तमिति । पञ्चमस्तवकान्त्यभागे हेतुत्वात् कर्तव्यत्वेऽनुमानाच्चेति । विधेरिति शेषः । मध्यमेति । मध्यमोत्तमपुरुषलिङः इष्टसाधनतावियोगादित्यर्थः । अन्यत्रेति । इच्छाविशेषरूपे आमन्त्रणाध्येषणादौ लिङः क्लृप्तशक्तित्वादित्यर्थः । "न कलञ्जं भक्षये"दित्यादौ निषेधानुपपत्तित इत्यर्थः ॥

---

[1] दां नि–ज. ग. क. दौ वि–नं. रा. सु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उच्यते—

अभिप्रायो हीच्छा । एवं च तस्या विधित्वे [1]सविषमन्नं कलञ्जं वा भक्षयत्वितीश्वरेच्छाया अभावे तद्भक्षणे प्रवृत्त्ययोगेन तस्यास्तत्रापि सत्त्वेन विषभक्षणादिकमपि विधेयं स्यात् ॥

किं च बालस्याद्यस्तन्यपानादिस्वप्रवृत्तौ हेतुत्वे-नेष्टसाधनत्वज्ञानमेव क्लृप्तम् । न हि बालस्याद्य-प्रवृत्तौ जातिबधिरप्रवृत्तौ वा वक्ताऽस्ति । येन तत्रापि वक्त्रभिप्रायज्ञानमेव हेतुः स्यात् । एवं च

---

परोक्तबाधकपञ्चकं पश्चादुद्धरिष्यन् आदौ तावदिष्टसाधनत्वस्य लिङर्थत्वे साधकत्रयमभिप्रायस्य लिङर्थत्वे बाधकरूपं क्रमेणाह— अभिप्रायो हीत्यादिना । वक्तुरेवेच्छा अभिधीयत इत्यादितदुक्त-प्रसिद्धिद्योतको हि शब्दः । इच्छाविषयसाधनत्वापेक्षया इच्छामात्रस्य लिङर्थत्वे लाघवयुक्तिसूचको वा । प्रवृत्त्ययोगेनेति । इश्वरेच्छायाः कार्यमात्रहेतुत्वादिति भावः । किं वक्त्रभिप्राये ज्ञानं प्रवर्तकमित्युपेत्य तस्य लिङाद्यर्थत्वमुच्यते, अथ तदभावेऽपि । आद्ये दोषमाह— किं चेति । यद्वा परपक्षे बाधकं सिद्धान्तसाधकान्तरमाह— किं चेति । आद्यस्तन्यपानेति । प्राथमिकस्तन्यपानेत्यर्थः । तत्रापि संदिहानं प्रत्याह— न हीति । हेतुरिति । प्रवृत्तावित्यनुषङ्गः ॥

नन्वस्तु बालबधिरयोः शब्दज्ञानशून्ययोरेवम् । तदन्यप्रवृत्तिरभि-प्रायज्ञानपूर्विकाऽस्तु । तत्राभिप्रायज्ञानसंभवादित्यत आह—एवं चेति । चैत्र जलमाहरस्वेत्युत्तमवृद्धवाक्याज्जायमाना प्रयोज्यभूतमध्यमवृद्धप्रवृत्तिर्या

---

[1] अयं सवि—क. रा. सु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मध्यमवृद्धप्रवृत्तिदर्शनेन बालेन कल्प्यमाना लिङादेः शक्तिः तत्प्रवृत्तौ क्लृप्तेष्टसाधनत्वविषयैव कल्प्या । [1] तस्या [2] क्लृप्तत्वात् ॥

किं च वक्त्रभिप्राये ज्ञातेऽपि चेतनस्येच्छां विना कथं प्रवृत्तिः । कथं चेष्टसाधनत्वज्ञानं विनेच्छा ॥

---

तद्दर्शनेनैतत्प्रवृत्तिः ज्ञानपूर्विका स्वतन्त्रप्रवृत्तित्वात् मदीयस्तन्यपानादिप्रवृत्तिवदिति ज्ञानपूर्वकत्वानुमानान्तरं मत्प्रवृत्तिहेतुज्ञानं यथेष्टोपायत्वविषयमेवमस्यापि प्रवृत्तिहेतुज्ञानं तद्विषयमेवेति निश्चित्य तज्ज्ञानं च लिङादियुक्तोत्तमवृद्धवाक्येनास्योत्पन्नं तदनुविधानादिति निर्णीयावापोद्वापाभ्यां लिङादेरिष्टसाधनत्वविषयामेव शक्तिं मन्यते बाल इत्येव युक्तमित्यर्थः । तस्या इति । इष्टसाधनत्वविषयायाः शक्तेः क्लृप्तत्वात् लिङाद्यर्थज्ञानस्य प्रवर्तकत्वात्तस्य चेष्टोपायविषयकत्वस्य स्वस्मिन्नवधृतत्वादिति भावः । तस्य अक्लृप्तत्वादिति पाठे तु वक्त्रभिप्रायज्ञानस्य प्रवर्तकत्वेन स्वस्मिन्ननिर्णीतत्वादित्यर्थः ॥

आप्ताभिप्रायज्ञानमपि वायुस्तृणमिव बलात्प्रवर्तयति उत पितापुत्रादिकमिवेच्छामुत्पाद्य । नाद्यः अनुभवविरोधात् । चेतनप्रवृत्तेरिच्छापूर्वकत्वानुभवात् । द्वितीये त्विष्टोपायत्वज्ञानमावश्यकमित्याह --- **किंचेति** **कथं प्रवृत्तिरिति** । वक्त्रभिप्रायं जानतोऽप्यनिच्छतः प्रवृत्त्यभावस्यैव लोके दर्शनादिति भावः । **कथं चेति** । प्रवृत्तिहेत्विच्छाजनकेष्टोपायत्वज्ञानार्थं लिङादेरिष्टोपायत्वार्थकत्वमेव वाच्यमिति भावः ॥

आप्ताभिप्रायस्योक्तविधया स्वयं साक्षादप्रवर्तकत्वेनेष्टोपायत्व-

---

1 "न त्वभिप्रायविषया" इत्यधिकम् -नं. 2 स्याः क्लृ--क. विसर्गो दूषितः--च.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न चेद[1]मिष्टसाधनं मत्कृतिसाध्यत्वेनाप्ताभिप्रेतत्वात् मद्भोजनवदित्याप्ताभिप्रायेणेष्टसाधनत्वानुमानात्प्रवृत्तिरिति वाच्यम्। तथात्वे लिङादिशक्तेरावश्यकेष्टसाधनत्वविषयत्वेनैव कल्प्यत्वात्। अर्थापत्तिर्हि साक्षादुपपादकविषया। न तूपपादकव्याप्यविषया। अनुमानं चायुक्तम्। उक्तरीत्या विषभक्ष-

ज्ञानस्यैवेच्छाद्वारा प्रवर्तकत्वेऽपि तज्ज्ञानार्थं न तस्य लिङाद्यर्थत्वं कल्प्यम्। इष्टोपायत्वज्ञानस्यान्यथाऽपि संभवादिति भावेनाचार्यास्त्वित्यादिग्रन्थे मण्युक्तानुमानानुवादपूर्वं प्रागुक्तद्वितीयपक्षमाशङ्क्य निराह—न चेदमिति। तृप्तिकामे[2]नान्येव क्रियमाणविषभक्षणादावव्यभिचाराय मत्कृतिसाध्यत्वेनेति हेतुविशेषणम्॥

इष्टसाधनत्वविषयकत्वेनैवाप्ताभिप्रायविषयत्वेनेत्यत्रावश्यकत्वहेतुरेक उक्तः। कल्पकाभावं चाह—अर्थापत्तिर्हीति। इच्छापूर्वकप्रवृत्तेरनुपपद्यमानार्थस्य दर्शनरूपार्थापत्तिः स्वोपपादकमिष्टोपायत्वज्ञानमेव स्वीकरोति। न तु इष्टोपायत्वव्याप्यं पुरुषाभिप्रायमपीत्यर्थः। अनुमानं चेति। इदं मदिष्टसाधन[3]मित्युक्तानुमानं चेत्यर्थः। उक्तेति। अयं सविषमन्नमित्यादिनोक्तरीत्येत्यर्थः॥

ननु[4] तत्रापि तात्कालिकेष्टसाधनत्वमस्त्येव तृप्तिजनकत्वादतो न व्यभिचार इति चेन्न। त्वन्मते बलवदनिष्टाननुबन्धीष्टोपायत्वज्ञानस्यैव तत्र साध्यार्थत्वादन्यथा निवृत्तिस्थळे कलञ्जभक्षणादावनिष्टसाधनताज्ञानं न स्यात्। न च तत्राव्यभिचाराय बलवदनिष्ट[5]जनकत्वे सतीति

[1] 'मत्' इत्यधिकम्—ग. रा. सु. [2] मक्रि–उ. ए. मेन क्रि—नं. [3] नमिष्टमनु—नं. ए. उ. [4] न च त—नं. उ. ए. [5] ष्टाज—नं. उ. ए.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

णादौ व्यभिचारात्। कळञ्जभक्षणं ममानिष्टं मत्कृतिसाध्यत्वेनाप्तेनानिष्यमाणत्वादित्यस्यासिद्धेश्च ॥

तस्मान्निषिद्धेऽपि सत्त्वाद्बालबधिरादिप्रवृत्ताव-सत्त्वात्पराभिप्राये ज्ञातेऽपि चेतनस्येष्टसाधनत्वाज्ञाने प्रवृत्त्ययोगाच्च ना[1]भिप्रायो विधिः। किंत्विष्टसाधनत्वमेव ॥

[2]आप्ताभिप्रायस्य लिङाद्यर्थत्वे बाधकम् ॥ ३२ ॥

---

हेतुर्विशेष्यत इति वाच्यम् । तस्याऽनुमानिकत्वोपगमेन विधिवाक्यादनुपस्थितेः । उपस्थितस्यैव विशेषणत्वात् । न च मानान्तरेणोपस्थितस्य लिङ्गविशेषणत्वमिति शङ्क्यम् । कृतिसाध्यत्वस्याप्येवं संभवेन तस्यापि लिङा[3]दिशक्यत्वापत्तेः । तथाऽपि जलताडनादौ व्यभिचारापरिहाराच्च । तत्राप्युक्तविशिष्टहेतोराकरोक्तादिशा सूपपादितत्वात् । अत एव विषभक्षणादावित्यादिपदोक्तिरिति भावः ॥

उदयनमतानुवादप्रस्तावे मण्युक्तं निवृत्तिस्थलीयमनिष्टोपायतानुमानमप्ययुक्तमित्याह—कळञ्जेति । अनिष्टं अनिष्टसाधनमित्यर्थः । यद्वा तत्रेष्टसाधनत्वे सत्यपि बलवदनिष्टाननुबन्धित्वं नेति भावेनानिष्टमित्येव साध्यनिर्देशः कृतः । विषसंपृक्तान्नभोजनवदिति दृष्टान्तो ध्येयः। असिद्धेश्चेति । उक्तरीत्येत्यनुषङ्गः । उक्तसाधकानि त्रीण्यप्यनुवदन्नुपसंहरति—तस्मादिति । सत्त्वादिति । आप्ताभिप्रायस्येति योज्यम् ॥

आप्ताभिप्रायस्य लिङाद्यर्थत्वे बाधकम् ॥ ३२ ॥

---

[1] प्ताभि—ज. क. रा. सु. [2] अत्र प्रकरणविभागो नास्ति—नं. ज. ग. क. रा. सु. हंसपादेन पूरितः—च. [3] दश—उ. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ उदयनोक्तवक्त्रभिप्रायविधित्वभङ्गः ॥ ३३ ॥

बाधकपञ्चकेऽप्याद्यं तावन्न युक्तम् । त्वन्मते इदं कर्तव्यमाप्ताभिप्रेतत्वादिति हेतूकरणवदुपपत्तेः ॥

नापि द्वितीयम् । अर्थवादादेवेष्टसाधनत्वे बुद्धे विधिप्रत्ययस्य वा तदर्थस्य वाऽनुमित्यनभ्युपगमात् । त्वत्पक्षेऽपि तत्र विधिप्रत्ययाद्यनुमानं व्यर्थमेव । तद्बोध्यस्य प्रवर्तकस्येष्टसाधनत्वस्यार्थवादादेव सिद्धेः । असिद्धौ च कल्पकाभावात् ।

---

### अथ उदयनोक्तवक्त्रभिप्रायविधित्वभङ्गः ॥ ३३ ॥

इष्टोपायस्य लिङाद्यर्थत्वे प्रागुक्तपञ्चबाधकानि क्रमेण निराह— बाधकेत्यादिना । इति हेतूकरणवदिति । इदं त्वया कर्तव्यमित्युक्तेन कुत इति प्रत्युक्तो ब्रूते आप्ताभिप्रेतत्वादिति । तत्र त्वन्मते इदं त्वया कर्तव्यमित्यस्य त्वत्कृतिविषयत्वेनाप्ताभिप्रेतमित्यर्थः । तत्र कुत इत्याकाङ्क्षायामाप्ताभिप्रेतत्वादिति हेतुरयुक्तः स्यात् । तत्र यदि कर्तव्यमित्यस्य कृतिविषय इत्येतावन्मात्रं विवक्षित्वा हेतोरुपपत्तिं मन्यसे तर्हि ममापि तथैवास्त्विति भावः । विध्यनुमानाच्चेति बाधकं निराह— नापि द्वितीयमिति । इष्टसाधनत्वे इति । तथा[1]चानुमानाच्चेति हेतोरसिद्धिरिति भावः । अस्तूदयनमतेऽयं दोष इत्यत आह—त्वत्पक्षेऽपीति । असिद्धौ चेति । इष्टसाधनत्वस्यार्थवादादसिद्धौ विध्यनुमाप-

[1] थाऽनु-नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यापकानुपलब्धिरूपबाधकनिरासेन सार्थक्यं तु मन्मतेऽपि समम् ॥

नापि तृतीयम् । उक्तरीत्येष्टसाधनत्ववाचिनो लिङ एकदेशभूतायामिच्छायां लक्षणासंभवात् । कुर्याः कुर्यामित्यत्रापि संबोध्यं स्वात्मानं च प्रतीष्टसाधनत्वस्यैव लिङर्थत्वे बाधकाभावाच्च ॥

नापि चतुर्थम् । त्वन्मते क्लृप्तेच्छांशात्यागे-

काभावादित्यर्थः । अश्वमेधादे[1]रिष्टसाधनत्वादितिहेतुना ह्यश्वमेधादिकं कृतिविषयतयाऽसाभिप्रेतमित्यर्थको "श्वमेधेन यजेत ब्रह्महत्यांतरणकाम" इति विधिरनुमातव्यः । इष्टसाधनत्वस्यैवाज्ञाने विध्यनुमितिरेव नोदीयादिति भावः ॥

नन्वर्थवादान्निश्चितमपीष्टसाधनत्वं कर्तव्यत्वरूपविधिव्याप्तत्वादिह च तस्यानुपलम्भेन कुण्ठितशक्तिकं न प्रवर्तयितुमीष्टे इति विधिकल्पनमित्यत आह—व्यापकेति । मध्यमपुरुषादिप्रयोगे इष्टसाधनतारूपार्थवियोगादिति बाधकं निराह—नापि तृतीयमिति । उक्तेति । अभिप्रायो हीच्छेत्यादिनोक्तरीत्येत्यर्थः । एकदेशेति । इष्टसाधनेत्यत्र साध्यविषयकत्वेनानुप्रविष्टेच्छाया एकदेशत्वात् । तद्वि[2]शिष्टार्थानुपपत्तावेकदेशस्य लक्षणया[3] ग्रहणसंभवादित्यर्थः । लक्षणैव दोष इत्यनुशयादाह—कुर्या इति । तवेष्टसाधनं ममेष्टसाधनमित्यर्थकत्वोपपत्तेरित्यर्थः । अन्यत्र क्लृप्तसामर्थ्यादित्युक्तबाधकं निराह—नापि चतुर्थमिति । क्लृप्तेति । [4]इच्छाविशेषरूपामन्त्रणादौ लिङ्[5]शक्तेः क्लृप्तत्वेनामन्त्रणा-

[1] रपीष्ट–ए. [2] तत्र वि–ए. [3] णाग्र–ए. [4] यथा इत्यधिकम्–ए.
[5] ङः श–नं. उ. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नाप्तत्वांश इव मन्मतेऽपि तदत्यागेन साधनत्वांशे शक्तिकल्पनात् । कथं च लिङन्तरेऽन्योर्थ इति विध्यर्थे लिङोपि स एवार्थः ॥

नापि पञ्चमम् । नञोऽसुरा इत्यादाविव त्वद्रीत्या लक्षणया मद्रीत्याऽभिधयेष्टसाधनत्वविरुद्धानिष्टसाधनत्वार्थकत्वात् । [1]दृष्टं च नञः क्रिया-

---

द्यर्थकलिङादौ क्लृप्तेच्छार्थकत्वांशात्यागेनाप्तत्वांशमधिकमपि निवेश्याप्तेष्टत्वं विधिलिङोर्थ इति कल्प्यते । तथा मन्मतेपि क्लृप्तेच्छार्थकत्वात्यागेनेच्छाविषयसाधनत्वांशेपि लिङादेः शक्तिः कल्प्यते । अतोऽधिकांशे शक्तिकल्पनस्य तुल्यत्वान्नेदं बाधकमिति भावः । आप्तत्वांश इत्युपलक्षणम् । कृतिसाध्यत्वांश इत्यपि ध्येयम् । मन्मते तु न तदंशेपि लिङादेः शक्तिरित्यग्रे व्यक्तम् ॥

नन्वामन्त्रणादावाप्तत्वांशेऽपि शक्तिः क्लृप्तेति वादिनं प्रत्याह—**कथं चेति** । नियामकाभावादिति भावः । एकत्र निर्णीतार्थोऽन्यत्रापीति न्यायस्त्वसति बाधके । प्रकृते चाप्तेच्छाया विध्यर्थत्वे बाधकत्रयस्य प्रागेवोक्तत्वादिति भावः । निषेधानुपपत्तित इति बाधकं निराह—**नापि पञ्चममिति** । त्वद्रीत्यामद्रीत्येत्येतन्नञर्थनिर्णयवादेऽग्रे व्यक्तम् । **अनिष्टसाधनत्वार्थकत्वादिति** । तथा च तत्र मानान्तरविरोधाभावान्निषेधानुपपत्तिर्नेष्टसाधनत्वस्य लिङाद्यर्थत्वे बाधकमिति भावः ॥

नन्वसुरादिपदे पर्युदासेऽपि क्रियायोगे नञः पर्युदासार्थत्वमदृष्टचरम् । तथा च न भक्षयेदिति प्रसज्यप्रतिषेध एवेत्यत आह—**दृष्टं चेति** ।

---

[1] इष्टं च—ज. ग. क.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नापि—चिकीर्षाधीनकृतित्वेन कृतिसाध्यत्वं कार्यत्वं, श्रमस्तु नैवं, द्वेषयोनियत्नादपि श्रमोत्पत्तेरिति वाच्यम्। द्वेषयोनियत्नो हि किं निवृत्तिलक्षणोभिमतः किं वा शत्रुवधादिगोचरः प्रवृत्तिलक्षणः। नाद्यः। तेन श्रमाननुभवात्। नान्त्यः। शत्रुवधस्येष्टसाधनत्वेन चिकीर्षाधीनकृतिसाध्यत्वात्। न हि शत्रुवधः शत्रुगोचरद्वेषजन्यकृतिसाध्यो भिन्नविषयत्वात्। द्वेषसिद्धिस्तु शत्रुं द्वेष्मीत्यनुभवात्॥

नापि—स्वविषयकचिकीर्षाधीनकृतिसाध्यत्वं कार्यत्वं, श्रमस्तु भोजनविषयकेच्छाधीनकृतिसाध्य इति वाच्यम्। कलञ्जभक्षणादावपि स्वविषयक-

---

पञ्चमं निराह—नापीति। चिकीर्षाधीना या कृतिः तत्त्वेन यत्र जनकत्वं तत्त्वं कार्यत्वमित्यर्थः। द्वेषयोनीति। द्वेषजन्येत्यर्थः। चिकीर्षाधीनकृतिसाध्यत्वादिति। [1]तादृशकृति[2]त्वेन कृतिसाध्यत्वादित्यर्थः। तत्र हेतुरिष्टसाधनत्वेनेति। तद्व्यनक्ति—न हीति॥

ननु शत्रुवधानुकूलप्रयत्नस्य द्वेषजन्यत्वे शत्रुगोचरद्वेषो न सिध्येत्। प्रयत्नरूपकार्यलिङ्गकत्वात्तत्सिद्धेरित्यत आह—द्वेषसिद्धिस्त्विति॥

षष्ठं निराह—नापीति। स्वेति। यस्य कार्यत्वमुच्यते तद्यागादिकं परामृश्यते। तत्तद्विषयिणी या चिकीर्षा तदधीना या कृतिस्तत्साध्यत्वं कार्यमित्यर्थः। भोजनविषयकेत्यादि। न तु श्रमविषय-

---

[1] 'यस्य कार्यत्वमुच्यते तद्यागादिकं परामृश्यते। कृतित्वेन' इत्याधिकम्—ए. "यस्य कार्यत्वमुच्यते कृतित्वेन" इति—नं. उ.　[2] ति सा—नं. उ. ए.

23*

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चिकीर्षाधीनकृतिसाध्यत्वस्य सत्त्वेन 'न कलञ्जं भक्षयेदि' ति निषेधायोगात् । बौद्धाद्यागमविहिते मण्डलीकरणादावपि तस्य सत्त्वेन तदागमस्यार्थाबाधलक्षणप्रामाण्यप्रसङ्गाच्च । विषभक्षणेऽपि तस्य सत्त्वेन सञ्जातबाधस्यापि तत्र प्रवृत्तिप्रसङ्गाच्च । अस्ति हि विषभक्षणेपि स्वविषयाचिकीर्षाधीनकृतिसाध्यत्वम् । श्रमाञ्जीवनयोनिकृतिसाध्याच्चान्यस्य सर्वस्य कृतिसाध्यस्य स्वाविषयकेच्छाधीनकृतिसाध्यत्वानियमात् ॥

नन्विदानीन्तनी या स्वविषयकेच्छा तदधीनकृतिसाध्यत्वं कार्यत्वम् । अन्यथा सामुद्रिकविदा-

---

चिकीर्षाधीनकृतिसाध्यः येनान्वयव्यभिचारः स्यादिति वाक्यशेषः । निषेधायोगादिति । तत्रापि त्वदुक्तकार्य[1]त्वस्य सत्त्वादिति भावः । तस्येति । स्वविषयकाचिकीर्षेत्याद्युक्तकार्यत्वस्य यागादाविव सत्त्वेनेत्यर्थः । प्रवर्तकत्वरूपं प्रामाण्यमस्त्येवेत्यत आह—अर्थाबाधेति । तस्य सत्त्वेनेत्युक्तं व्यनक्ति—अस्ति हीति । तदेव कथमित्यत आह—श्रमाञ्जीवनयोनिकृतिसाध्याच्चेति । प्राणपञ्चकसञ्चारादिति योज्यम् । एते चातिप्रसङ्गाः पूर्वोक्तपक्षेष्वपि ध्येयाः । कृतिसाध्यस्येति । कृतित्वेन कृतिसाध्यस्येत्यर्थः । तेन कृतिध्वंसकृतिसाक्षात्कारयोर्न व्यभिचार इति ध्येयम् ॥

सप्तममाशङ्कते—नन्विति । [2] इदानीन्तनेत्युक्तविशेषणमावश्यकमित्याह—अन्यथेति । सामुद्रिकं नाम शरीरावयवगतलक्षणाधि-

---

[1] र्यस्य—नं. उ. [2] 'स्वविषयकेति । कृतिविषयेत्यर्थः' । इत्यधिकम्—प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ख्याते भावियौवराज्येपि प्रवृत्तिः स्यात् ।
संजातबाधस्य तु नेदानीं विषभक्षणेच्छेति चेत् ।
इच्छा का विवक्षिता । या साधने नास्ति ।
किमुपायोस्त्वितीच्छामात्रं, उपायं कृत्वा साध-
यिष्यामीति चिकीर्षा वा । नाद्यः । अन्यत एवो-
पायोस्त्वितीच्छायां सत्यामप्यप्रवृत्तेः । नान्त्यः ।
त्वदभिमतकार्यत्वज्ञानेन प्रवृत्तौ जनयितव्यायां
द्वारीभूतायाः कार्यत्वज्ञानजन्यायाः [1]पाकादिसा-
धनविषयचिकीर्षायाः कार्यत्वज्ञानहेतुत्वेऽन्योन्या-

---

क्यम् । तत्परिज्ञात्रेत्यर्थः । इदानीन्तनेत्युक्तयैव प्रागुक्तदोषो नेत्याह—संजातेति । इदानीन्तनस्वविषयकेच्छाधीनत्वविशेषणमेव कृतावयुक्तम् । येन विषभक्षणादौ प्रवृत्त्यापत्तिदोषो न स्यादिति भावेन इच्छां विकल्प्य निराह—इच्छेति । साधन इति । तात्कालिकतृप्तिं प्रति वा कालान्तरभाव्यनर्थफलं प्रति वा साधनरूपे विषभक्षणादावित्यर्थः । नास्तीत्युपलक्षणम् । यागादिरूपे साधनेऽस्तीत्यपि ध्येयम् । इच्छामात्रमिति । न तु कृतिसाध्यत्वप्रकारकचिकीर्षारूपेत्यर्थः । एवंरूपेच्छाधीनकृतिसाध्यत्वज्ञानमन्वयव्यभिचारान्न प्रवृत्तिहेतुरित्याह—अन्यत एवेति । मत्कृतितोऽन्यस्मादेवेत्यर्थः । उपायो धनधान्यादेः । अप्रवृत्तेः धनादेरुपाय इत्यर्थः । त्वदभिमतेति । इदानीन्तनस्वविषयचिकीर्षाधीनकृतिसाध्यत्वरूपकार्यत्वज्ञानेनेत्यर्थः । अन्योन्येति । चिकीर्षा कार्यत्वज्ञानजन्या कार्यत्वज्ञानं च चिकीर्षाजन्यमित्यन्योन्याश्रयादि-

---

[1] यागादिसा—क. नं. रा. सु.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रय[1]त्वात् । किं च भाविराज्ये आपादिता [2]प्रवृत्तिस्तदुद्देश्यका चेदिष्टापत्तिः । तदुद्देशेन तत्साधने देवताराधनादौ प्रवृत्तेः । भाविराज्यविषयिका कृतिस्तु न संभवति । कृतेः सिद्धविषय[3]त्वे सत्यसिद्धफलकत्वनियमात् ॥

नापि—कृतिसाध्यतार्हत्वं कार्यत्वं, प्रवृत्त्यविषयाद्विषभक्षणादितः साक्षादिष्टात्सुखादितश्च व्यावृत्तस्य सुखाद्यर्थमिष्टेषु प्रवृत्तिविषयेषु लौकिकवैदिकभोजनयागादिष्वनुवृत्तस्य चेष्टसाधनत्वादन्यस्यार्हत्वस्याभावात् ॥

---

त्यर्थः । न च चिकीर्षा कार्यत्वज्ञानजन्येति युक्तम् । प्रवृत्त्युत्पादने तस्याः द्वारभूतत्वात् । न च कार्यत्वज्ञानं न चिकीर्षाजन्यमित्यपि युक्तम् । चिकीर्षाऽभावे तदधीनकृतिसाध्यत्वाभावेन तज्ज्ञानायोगादिति भावः । अन्यथेत्यादिनोक्तं निराह—किंचेति । किं तदुद्देशेन तत्साधने कृतिरूपप्रवृत्तिरापाद्यतेऽथ तद्विषयैव वा । आद्यमनूद्य निराह—तदुद्देश्यका चेदिति । इष्टापत्तिं व्यनक्ति—तदिति । अन्त्य आह—भावीति । सिद्धेति । यद्यपि देवताराधनादिकमपि न सिद्धम् । तथाऽपि कृतिः साधनविषयैव न तु फलविषयेत्यत्र तात्पर्यम् ॥

अष्टमं निराह—नापीति । इष्टसाधन[4]त्वादन्यस्यार्हत्वस्याभावादित्यत्र व्यावृत्तस्यानुवृत्तस्येति द्वयमपि हेतुगर्भं[5] विशेषणम् ।

---

[1] यात्–क. नं. रा. सु. [2] कृतिस्त–ग. ज. नं. [3] यकत्वे–ग. नं. रा सु. [4] नादन्यार्ह–नं. नादन्यस्या–उ. ए. [5] र्भवि–नं. उ. ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यद्यपीष्टसाधने साक्षात्पम्परासाधारणमिष्टत्व-सामान्यमस्ति । तथाऽपि फलार्थिनः साधने प्र-वृत्तिर्न फलसाधनत्वज्ञानं विना युक्ता ॥

ननु यदकरण इष्टानुत्पत्तिप्रसङ्गस्तत्त्वमर्हत्व-मिति चेन्न। एवंहीष्टानुत्पत्तिप्रसञ्जकीभूताभावस्य प्रतियोगिभूता या कृतिस्तद्विपयताप्रयोजकरूप-वत्त्वमर्हत्वमित्युक्तं भवति। तच्च रूपं नेष्टा[1]साधन-साधारणम् । इष्टासाधनाकरणे इष्टानुत्पत्तेरप्रस-ङ्गात् । इष्टा[2]साधनासाधारणमपि न भोजनत्व-यागत्वादिरूपम् । अननुगमात् । किं तु भोजना-

---

अनिष्टसाधनादिष्टाच्च व्यावृत्तस्येष्टसाधनमात्रेऽनुगतस्येष्टसाधनत्वरूपत्वा-दित्यर्थः ॥

ननु कृतिसाध्यतार्हत्वस्य फले सुखादावपि कथं चित्सत्त्वेन तत्साधारणमिष्टत्वमेव कृतिसाध्यतार्हत्वमस्तु । इष्टसाधनेषु सर्वत्रेष्टत्व-स्याप्यनुगतत्वात्किमिष्टसाधनत्वग्रहणेनेत्याशङ्कामनूद्य निराह—यद्य-पीति ॥

नवममाशङ्कते—नन्विति । शङ्काभिप्रायं विवृण्वन्ने[3]वनिराह—एवं हीति । नेष्टा[1]साधनसाधारणमिति । कळञ्जभक्षणादिरूपं यद-निष्टसाधनं यच्चेष्टानिष्टसाधनतोदासीनं तद्व्यावृत्तमित्यर्थः । तदेव व्यनक्ति—इष्टेति । इष्टसाधनत्वे प्रागुक्तप्रयोजकरूप[5]त्वं व्यनक्ति—

---

[1] ष्टसा–क. नं. [2] ष्टसा–ग. ज. नं. रा. सु. क. [3] न्नाह–उ. नं. [4] ष्टसा–उ. नं. [5] पवत्त्वं–नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्यनुगतमिष्टसाधनत्वमेवेष्टसाधनाकरणस्यैव कारणाभावत्वेनेष्टानुत्पत्तिप्रसञ्जकत्वात् । तथा च त्वदुक्तं कार्यत्वमिष्टसाधनत्वमेव ज्ञातमिति घट्टकुट्यां प्रभातम् ॥

एतेन—कृत्युद्देश्यत्वे सति कृति[1]साध्यत्वं कार्यत्वम् । एवं च विषभक्षणे सुखादौ च न प्रवृत्तिप्रसङ्ग इति नरस्तम् । प्रवृत्तिविषययागादिक्रियायामपीष्टसाधनत्वातिरिक्तस्योद्देश्यत्वस्याभावात् ॥

एतेनैव—

इष्टसाधनाकरणस्यैवेति । घट्टकुट्यां प्रभातमिति । यत्र पान्थैः शुल्कं दत्वा गन्तव्यं सा घट्टकुटी । घट्टस्थगृहविशेषः । घट्टकुट्यां स्थितपुरुषान् वञ्चयित्वा वहिर्गन्तुं रात्रावेवोत्थितस्य मार्गाज्ञानेनेतस्ततः संचरतो घट्टकुट्यामुदयो यथा तथा जातं त्वदीयकार्यत्वानिरूपणमित्यर्थः ॥

दशमं पक्षं निराह—एतेनेति । कार्यत्वेष्टसाधनत्वयोरेकत्वकथनेनेत्यर्थः । ननु—कथमेकत्वं कृतिसाध्यत्वस्याधिकस्य प्रवेशादित्यतः प्रागेव कृतिसाध्यत्वज्ञानस्य प्रवृत्तिहेतुतायाः खण्डनेन कृत्युद्देश्यत्वमात्रस्यैव त्वया कार्यत्वेन वक्तव्यत्वादिति भावेनैतेनेत्युक्तं व्यनक्ति—इष्टसाधनत्वेति । मुख्योद्देश्यत्वस्य सुखादौ सत्त्वेऽपि यागादिसाधननिष्ठोद्देश्यत्वस्यामुख्यस्यैव तेनापि वाच्यत्वात् । इष्टसाधनत्वातिरिक्तस्योद्देश्यत्वस्याभावादित्युक्तम् । अमुख्योद्देश्यत्वं त्विष्टसाधनत्वमेवेति सुधोक्तेरिति भावः ॥

एकादशं निराह—एतेनैवेति । तदेव व्यनक्ति—इष्टेति ॥

[1] कृतिपदं नं—ज. क.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयत ॥"

[1]इति निरस्तम् । इष्टसाधनत्वातिरिक्तस्य क्रियानिष्ठस्य प्राधान्यस्याभावात् ॥

ननु–चिकीर्षाधीनकृतिसाध्यत्वमेव कार्यत्वम्। न चैवं विषभक्षणेऽपि प्रवृत्तिप्रसङ्गः। इष्टसाधनत्वरूपालिङ्गजन्यस्यैव तज्ज्ञानस्य प्रवर्तकत्वात्। उक्तं हि—

'किं तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत्।
फलसाधनता तत्र कारणं तेन कार्यता' ॥

इति चेन्न[2]। तद्धेतोरेवेतिन्यायेनावश्यकादिष्ट-

---

सुधोक्तं विवृण्वन् द्वादशं पक्षमाशङ्कते—नन्विति। कार्यत्वस्यातिप्रसङ्गेऽपि प्रवर्तकत्वेनाभिमतं[3] तज्ज्ञानं नातिप्रसक्तमित्याह—इष्टसाधनत्वरूपेति।प्राभाकरसंमतिश्लोकं सुधोदाहृतमेवाह–उक्तं हीति॥

"फलसाधनता नाम या सा नैव हि कार्यता।
कार्यता कृतिसाध्यत्वं फलसाधनता पुनः॥
कारणत्वं फलोत्पादे ते भिद्येते परस्परम्"।

इति पूर्वत्र कार्यतेष्टसाधनत्वयोर्भेदे प्रतिपादिते तर्हि सर्वथेष्टसाधनताया अनुपयोगः किमिति भावेन[4] किंत्विति प्रश्ने यद्यागादिरूपं कर्म चिकीर्षाधीनकृतिसाध्यत्वरूपां कार्यतां व्रजेत् तत्कर्म स्वयं क्लेशरूपं कायक्लेशकरम् तत्र कर्मण उक्तरूपकार्यत्वे तेन फलसाधनत्वरूपकारणेनेत्यर्थः। तथाचेष्टसाधनताज्ञानात्कार्यत्वज्ञानमित्यर्थः। इति न्यायेनेति। तद्धेतोरेवास्तु हेतुत्वं किं तेनेति न्यायेनेत्यर्थः।

---

[1] इत्यपि परास्तम्–ज. क. नं. [2] चेन्मैवम्–नं. ज. क. ग. रा. सु.
[3] तज्ज्ञा–प. उ. नं. [4] किमिति प्र–नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

साधनत्वज्ञानादेव प्रवृत्त्युपपत्तेः। तथात्वेऽतीतेपीष्टसाधने प्र[1]वृत्त्यापत्तिरिति चेदतीते कृतिसाध्येऽपि प्रवर्तेत। न ह्यतीतं न कृतिसाध्यम्। तथात्वे कथं कृतितो जातम्। इदानीं न कृतिसाध्यमिति चेदिदानीमिष्टसाधनमपि नेति समम्। इष्टसाधनेपि कृत्यसाध्ये वर्तमाने चन्द्रमण्डलादौ भविष्यति वृष्ट्यादौ चाप्रवृत्तिस्त्वावशक्याः कृत्या फलं साधयिष्यामितीच्छाया अभावादित्युक्तम्। अत एवाराल्लब्धजलः कृतिसाध्येपि दूरस्थजलपाने न प्रवर्तते॥

किं च यादृशमतीतादिव्यावृत्तमिष्टसाधनत्वं तत्र कार्यत्वे लिङ्गं तज्ज्ञानस्यैव मन्मते प्रवर्तकत्वाक्त्वातिप्रसङ्गः॥

---

सुधोक्ते एवातिप्रसङ्गचोद्यतद्दूषणे आह—तथात्व इत्यादिना। सममित्यन्तेन। तत्त्वनिर्णयटीकाशङ्कितातिप्रसङ्गान्तरमपि पूर्वोक्तदिशा निराह—इष्टसाधनेपीत्यादिना। इत्युक्तमिति। कृतिसाध्यत्वविशेषणविशिष्टत्वभङ्गे उक्तमित्यर्थः। कृतिसाध्येष्टसाधनतायाः कार्यतापरपर्यायताङ्गीकारादिति टीकाकारीयसमाधानस्य तात्पर्यं पूर्वभङ्ग एवोक्तमिति भावः। अत एवेति। उक्तरूपेच्छाया अभावादेवेत्यर्थः॥

यादृशमिति। नन्विदानीन्तनकृतिसाध्यत्वविशिष्टेष्टसाधनत्वमतीतादिव्यावृत्तं लिङ्गं लैङ्गिकं तु चिकीर्षाधीनकृतिसाध्यत्वमित्यतो

---

[1] प्रवर्तेतेति चेत्—ग. रा. सु. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किं चैतल्लिङ्गजन्यज्ञानस्याप्रवर्तकात्कृतिसाध्यत्वज्ञानादधिको विषयो नास्ति[1] चेत्कथं प्रवर्तकता। अस्ति चेत्स एव वक्तव्यः। किमनेन॥

तस्मात्प्रवर्तकस्य कृतिसाध्यत्वज्ञानस्येष्टसाधनत्वज्ञानं सहकारीत्येव वक्तव्यमितीष्टसाधनत्वज्ञाने आवश्यके किंकृतिसाध्यत्वज्ञानेन॥

किं च प्रवर्तक[2]कार्यत्वज्ञानं लैङ्गिकं चेद्वेदस्य कार्यपरत्वमितिमतहानिः॥

किं च प्रथममिष्टसाधनताज्ञानं ततस्तत्रेच्छा ततः प्रयत्नः ततः परिस्पन्द इत्यात्मन्येवैकार्थविषयास्त्रयो धर्मा जायन्ते। न त्वर्थे कश्चिदति-

दोषान्तरमाह--किं चैतदिति। किमनेनेति। लैङ्गिकज्ञानकथनेनेत्यर्थः। तस्मादिति। कार्यत्वज्ञानस्य लैङ्गिकत्वोक्तेर्व्यर्थत्वादित्यर्थः। किं कृतिसाध्यत्वेति। कृत्यसाध्यादावतिप्रसङ्गस्तु परिहृत एवेति भावः॥

मतहानिरिति। ननु-लोके कार्यत्वज्ञानं प्रवर्तकं न[3] तु लैङ्गिकम्। वेदे तु कार्यापरपर्यायापूर्वज्ञानमेव। तच्च वेदजन्यमित्युपगमान्न दोष इति चेत्तर्ह्यनुगतैकप्रवर्तकाभावो दोषः। लोकेऽपि न किंचिदप्रत्यक्षं वस्तु प्रवृत्तिपूर्ववर्ति[4] वर्तते यल्लैङ्गिकं स्यादिति भावेन सुबोधत्वमेवाह---किं च प्रथममिति। तत्रेति। इष्टसाधने वस्तुनि।

[1] स्तीति चे -नं. ग. [2] कं का-ग. ज. क. रा. सु. [3] तनु-प.नं. उ. [4] र्थं वर्तते-नं.उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शयोऽनुभूयते। योभिमतसाधनतयाऽनुमी[1]यते ॥

किं चेष्टसाधनतालिङ्गककार्यताज्ञानस्य प्रवर्तकत्वे त्वन्मते नित्ये सन्ध्योपासनादौ प्रवृत्तिर्न स्यात्। तस्येष्टसाधनत्वात् ॥

ननु—शुचित्वे सति विहितकालजीवित्वरूपलिङ्गान्तरजन्यं कार्यताज्ञानं तत्र प्रवर्तकम्। [2]संभवति हि अहमिदानीं कृतिसाध्यसन्ध्यावन्दनः सन्ध्यासमये शौचादिमत्त्वात् सन्ध्यान्तरेऽहमिवेत्यनुमितिरिति चेन्न। काम्ये नित्ये चानुगतस्य विषभक्षणादिव्यावृत्तस्यैकस्य कार्यताज्ञानस्याभावात् ॥

---

अभिमतसाधनतयेति। इष्टसाधनतयेत्यर्थः। विधिवादपूर्वपक्ष मण्युक्तं च दोषं निराह—किं चेष्टेति। प्रवृत्तिर्न स्यादिति। तत्र कार्यताज्ञानोपायाभावादिति भावः। कुत इत्यत आह—तस्येति। नित्यकर्मणो निष्फलत्वस्य त्वयोपगमादिति भावः। त्रयोदशं पक्षं शङ्कते—नन्विति। तत्रेति। नित्यकर्मणीत्यर्थः। मण्युक्तमेव प्रयोगमाह—अहमिति। विषभक्षणादिव्यावृत्तस्येति। अहं कृतिसाध्यविषभक्षणः जीवित्वादिति लिङ्गजन्यस्य चिकीर्षाधीनकृतिसाध्यत्वरूपकार्यत्वज्ञानस्य संभवादिति भावः। एकस्येति। काम्ये काम्यसाधनताज्ञानजन्यं कार्यताज्ञानं नित्ये शुचित्वे सति विहितकालजीवित्वप्रतिसंधानजन्यं कार्यताज्ञानमिति कार्यताज्ञानस्य नानात्वादिति भावः ॥

---

[1] येत—ग. ज. क. रा. सु. [2] कं संभवति। तर्ह्यहमि—नं. क भवति हि—ज. क.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वं कार्यताज्ञानस्यानुगमकमिति वाच्यम्। सञ्जातबाधेऽतिप्रसङ्गतादवस्थ्यात्। संभवति हि तत्राप्यहं कृतिसाध्यविषभक्षणो जीवित्वादिति स्वविशेषणवत्ताप्रतिसन्धानजन्यं[1] कार्यताज्ञानम् ॥

न च विशेषणप[2]देनाधिकाररूपं विशेषणं विवक्षितमिति नातिप्रसङ्ग इति वाच्यम्। अस्य वैदिके काम्ये नित्ये च सत्त्वेपि पामरसाधारणे भोजनादावसञ्जातबाधदशायां विषभक्षणे चासत्त्वेन तत्राप्यप्रवृत्त्यापातात्। तस्याविहितत्वेनाधिकाररूपविशेषणाभावात् ॥

---

मण्युक्तदिशाऽनुगतिं कुर्वन् चतुर्दशकल्पमाशङ्कते—न च स्वविशेषणवत्तेति ।, स्वस्य प्रवर्तमानपुरुषस्य यद्विशेषणं क्वचित्कामना क्वचिच्छुचित्वे सति जीवित्वमित्यादि तद्वत्ता तद्वर्तमानता तत्प्रतिसंधानजन्यत्वमित्यर्थः । अतिप्रसङ्गतादवस्थ्यं व्यनक्ति— संभवति हीति । पक्षधराद्युक्तमाशङ्क्य निराह—न चेति । अधिकारः क्वचित्कामनावत्त्वम् । क्वचिच्छुचित्वादिकम् । न च विषभक्षणे तादृशाधिकारोस्ति । तस्य लौकिकत्वादिति भावः । तस्येति । भोजनादेः ॥

ननु—चिकीर्षाधीनकृतिसाध्यत्वरूपकार्यत्वज्ञानमेव प्रवृत्तिसामान्यसामग्री । पामरसाधारणभोजनादावसञ्जातबाधदशाऽऽपन्नविषभक्षणादौ च सास्त्येवेति न व्यतिरेकव्यभिचारः । न च सञ्जातबाधेऽपि

---

[1] न्यका–नं. ग. [2] शब्देन–नं. ज. ग. क. रा. सु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च संजातबाधे सामान्यसामग्र्याः सत्त्वेपि नित्यकाम्यस्थळीयविशेषसामग्रीद्वयविरहान्नातिप्रसङ्ग इति वाच्यम्। सामान्यसामग्र्याः सत्त्वे तस्याः तृतीयविशेषमादायापि विश्रान्तेः। अन्यथा कृति-

---

विषभक्षणे प्रवृत्त्यापत्तिः । नित्ये [1]शुचित्वादिविशेषण[2]त्वप्रतिसन्धानं काम्ये च काम्यसाधनत्वप्रतिसन्धानं च प्रवृत्तौ विशेषसामग्री । सा च भोजनादावसञ्जातबाधदशापन्नविषभक्षणादौ चास्ति सञ्जातबाधे च नास्ति। अतो न कोपि दोष इति चोद्यं निराह—न च सञ्जातेति। स्यादेवं यदीयं सामान्यसामग्रीति निर्णीता स्यात्। न चैवम्। तथात्वे। नित्यस्थले प्रवृत्त्यर्थं शुचित्वे सति जीवित्वादिस्वविशेषणप्रतिसाधनं विशेषसामग्रीति यथा कल्प्यते, यथा वा काम्यस्थळे च नित्यस्थळीयविशेषसामग्र्यभावेपि प्रवृत्यर्थं नित्येऽविद्यमानकामसाधनत्वप्रतिसन्धानरूपाऽन्यैव विशेषसामग्रीति कल्प्यते, तथा संजातबाधे विषभक्षणादावपि नित्यकाम्यस्थळीयविशेषसामग्र्योरभावेऽपि तत्र प्रवृत्त्यर्थं नित्यकाम्ययोरविद्यमाना काचिदन्याऽपि विशेषसामग्री कल्प्या स्यात्। अन्यथा सामान्यसामग्र्यास्तत्रापर्यवसानात्। अतस्तत्र सामान्यसामग्री सत्त्वे सा कां चिद्विशेषसामग्रीमादायैव पर्यवस्येदित्यर्थः। विशेषसामग्र्यभावेनानभिमतस्थळे प्रवृत्त्यभावोक्तौ दोषमाह—अन्यथेति। स्वकृतिसाध्यपरकृतिसाध्यजीवनयोनिप्रयत्नसाध्यप्राणपञ्चकसंचारादिसाधारणं कृतिसाध्यत्वमेव कार्यत्वं तज्ज्ञानमेव च प्रवर्तकं स्यादित्यर्थः॥

---

[1] त्वशु–ए. नं. [2] णप्र–नं. उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

साध्यत्वज्ञानमेव प्रवर्तकं स्यात्। अतिप्रसङ्गस्य विशेषसामग्र्यभावादेव वारणात्। न चोक्तविशेषसामग्रीद्वयान्यतरत्वमनुगमकम्। तस्याप्याद्यस्तन्यपानादिप्रवृत्तावभावात्। न हि तत्रेष्टसाधनत्वमपि त्वन्मते स्मर्यते॥

नापि [1]जीवनादिप्रतिसंधानं तत्र कारणम्। नित्यत्वाभावात्। ननु—

स्वविशेषणवत्ताप्रतिसंन्धानजन्यं कार्यताज्ञानमेव प्रवर्तकम्। स्वविशेषणं [2]च लौकिके वैदिके च काम्ये कामनैव। नित्ये जीवनादिकम्। बाल-

[3]नन्वेवं स्वकृत्यसाध्ये परकृतिसाध्यादावपि प्रवृत्तिः स्यादित्यत आह—अतिप्रसङ्गस्येति॥

ननु—संजातबाधस्थले सामान्यसामग्री कांचिद्विशेषसामग्रीमादाय विश्राम्यतीत्ययुक्तम्। शुचित्वे सति जीवित्वप्रतिसंधानकाम्यहेतुत्वप्रतिसंधानान्यतरव्यतिरेकेण विशेषसामग्र्यभावादितिभावेनाशङ्क्य निराह—न चोक्तेति। अतिव्याप्त्यभावेप्यव्याप्तिरस्तीत्याह—तस्यापीति। तदेव व्यनक्ति—न हीति। त्वन्मत इति। तत्रापि कार्यताज्ञानादेव बालस्य प्रवृत्तेरभ्युपगमादिति भावः। तत्कारणं स्तन्यपानकारणम्। तत्र हेतुर्नित्यत्वाभावादिति। स्तन्यपानादेरिति योज्यम्॥

प्रागुक्तसर्वदोषपरिहाराय पञ्चदशं कल्पमाशङ्कते—नन्विति। लौकिके वैदिके चेति। भोजनादौ यागादौ चेत्यर्थः। काम्य इत्युभयविशेषणम्। नित्य इति। सन्ध्यावन्दनादौ। जीवनादिकं

[1] शौचादिप्रति—रा. सु. [2] णवच्च—नं. [3] न चैवं—ए. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्याद्यप्रवृत्तौ कण्ठशोषादि । न चैवमननुगमः । यत्स्वात्मनि प्रतिसन्धीयमानं क्रियाया अकरणे इष्टानुत्पत्तिप्रसञ्जकं तत्तद्रूपविशेषणवत्त्वेनानुगमात् । इष्टं च काम्ये स्वर्गादि, नित्ये पण्डापूर्वम् । तस्य शब्देन कार्यतया बोधितत्वेन स्वतः पुरुषार्थत्वात् ॥

यद्वा नित्येऽकरणफलस्य नरकादेरभाव एवेष्टः । आद्यस्तन्यपाने तु दुःखनिवृत्तिरिति नाननुगमो नापि विषभक्षणेऽतिप्रसङ्गः ॥

शुचित्वमादिपदार्थः । कण्ठशोषादीत्यादिपदस्य दुःखानुसन्धानम् । अननुगम इति । कामना जीवनकण्ठशोषादेरनेकत्वादिति भावः । यदित्यस्य तत्त्वरूपेत्यन्वयः । लौकिके वैदिके च काम्ये कामनावत्त्वं नित्ये जीवनादिकं, स्तन्यपानादौ कण्ठशोषादिकं स्वस्मिन्ननुसंधीयमानं तस्य तस्य पुरुषस्य भोजनयागसन्ध्यावन्दनादिक्रियाया अननुष्ठाने तृप्तिस्वर्गादीष्टानुत्पत्तिप्रसञ्जकं भवतीति क्रियाननुष्ठानप्रयुक्तेष्टानुत्पत्तिप्रसञ्जकरूपत्वेन त्रयाणामनुगम इत्यर्थः । पण्डापूर्वमिति । स्वर्गादिफलाजनकमपूर्वं पण्डापूर्वमित्युच्यते । कथं तस्येष्टत्वमित्यत आह--तस्येति ॥

ननु सुखप्राप्तिदुखनिवृत्त्योरन्यतरत्वाभावात्कथमिष्टतेत्यरुचेराह--- यद्वेति । सञ्जातबाधेऽतिप्रसङ्गतादवस्थ्यादिति पूर्वोक्तदोषं च निराह-- नापीति । सञ्जातबाधे पुरुषे जीवित्वादिविशेषणमनुसन्धीयमानं विषभक्षणरूपक्रियाया अकरणे इष्टानुत्पत्तिप्रञ्जकं न भवति । कस्यचिदिष्टस्यापि तेनाजननात् । तात्कालिकतृप्तेरपि महानर्थहेतुत्वेनेष्टत्वाभा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च नित्येपि प्रत्यवायपरिहार एवेष्टोस्त्विति वाच्यम् ॥

अकुर्वन् विहितं कर्म पङ्के गौरिव सीदति।
इत्यादेः प्रत्यवायबोधकस्य विधिमुखनिरीक्षकतया विधिकाले प्रत्यवायानुपस्थित्या तदभावफलत्वेनोपासनाविधानायोगात् । अन्यथाऽन्योन्याश्रयः स्यादिति चेन्नैवम् ॥

क्रियाया इष्टसाधनत्वाज्ञाने तदकरणेनेष्टानुत्पादस्य प्रसञ्जयितुमशक्यतयाऽऽवश्यकेष्टसाधनत्वज्ञानस्य प्रवर्तकत्वसिद्ध्या घट्टकुटीप्रभातानिस्तारात् ॥

तदेतदभिप्रेत्योक्तम्—

"कार्यता च न का चित्स्यादिष्टसाधनतां विना" ॥

---

वादिति भावः । यत्तु नित्ये पण्डापूर्व[1]मिष्टामित्युक्तं तत्र कस्य चिन्मतमाशङ्क्य निराह—न चेति । विधिमुखेति । सन्ध्यामुपासीतेत्यादिविधीत्यर्थः । विहितं कर्माकुर्वन्निति श्रवणात् । स्वस्य प्रत्यवायबोधकत्वं कर्मणो विहितत्वम[2]पेक्ष्यैव । नान्यथेति भावः । अन्योन्याश्रय इति । अकुर्वन्निति वाक्यात्प्रत्यवायबोधे प्रत्यवायपरिहारफलकत्वेन सन्ध्योपासनादिविधिज्ञानं विहितत्वज्ञाने सत्यकुर्वन्नित्यस्मात्प्रत्यवायज्ञानमित्यन्योन्याश्रय इत्यर्थः । तदेतदिति । न तावत्कृतिसाध्यत्वमित्यादिनैतावत्पर्यन्तमुक्तं प्रमेयं जिज्ञासाधिकरणानुव्याख्याने उक्तमित्यर्थः ।

---

[1] इष्टपदं न—नं. ए.  [2] मुपे—ए. नं.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इति। अस्माभिराशङ्क्य परिहृतायां [1]पञ्चदशधा-भिन्नायां कार्यतायां आद्याः[2] सप्त। द्वादशी, त्रयोदशी, चतुर्दशी[3], च कार्यता यद्यपीष्टसाधनतां विना वर्तमाना तदगर्भिता। तथाऽपि न का चिदप्रयोजिका। प्रवृत्त्यहेतुत्वात्। अन्या[4]पञ्च-विधा कार्यता तु यद्यपि का चित्प्रवृत्तिहेतुः तथापीष्टसाधनतां विना न इष्टसाधनतैवेत्यर्थः॥

यत्तु कैश्चिदुक्तं यत इष्टसाधनमतः कार्यमिति

---

कथमित्यतो मूलारूढतामुक्तस्य व्यनक्ति—अस्माभिरिति। आद्याः सप्तेति। कृतिसाध्यत्वं [5]स्वनिष्ठकृतिसाध्यत्वं, इच्छाधीनस्वनिष्ठकृति-साध्यत्वं, चिकीर्षाधीनस्वनिष्ठकृतिसाध्यत्वं, चिकीर्षाधीनकृतित्वेन स्वनि-ष्ठकृतिसाध्यत्वं, स्वविषयचिकीर्षाधीनकृतिसाध्यत्वं, इदानीन्तनेच्छाधीन कृतिसाध्यत्वं, इत्युक्तसप्तपक्षा इत्यर्थः। द्वादशीत्यादि। इष्टसाधन-नत्वलिङ्गगम्यशुचिकालजीवित्वलिङ्गगम्यस्वविशेषणवत्त्वप्रतिसंधानगम्य — रूपपक्षत्रयमित्यर्थः। इति दशविधाकार्यतेति मूलपदस्यार्थानुवादः। चोप्यर्थ इत्युपेत्याह—यद्यपि तथापीति। इष्टसाधनतां विनेत्य-स्यात्यर्थः तदगर्भितेति। न काचिदित्यनुवादः। अप्रयोजिकेति व्याख्या। अन्यापञ्चेति। कृतिसाध्यतार्हत्वादिरूपेत्यर्थः। इष्टसाध-नतां विनानेत्यस्यार्थः इष्टसाधनतैवेति॥

एकदेशिमतमनूद्य निराह—यत्त्विति। अतः इष्टसाधनत्वा-दित्यर्थः। इति बुद्ध्यैव प्रवृत्तेजार्यमानत्वादित्यर्थः। अत इति।

---

[1] द्वादशधा–ज. क. [2] द्या पड्विधाकार्यता यद्यपी–ज. क. [3] 'शविधा-कार्य'–पूर्वत्रापि 'श' कार एवास्ति–नं. 'शी चेति दशविधा'–रा सु. [4] उत्तरा पड्विधातु–ज. क. [5] निष्ठेति नास्ति–नं. उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

बुद्ध्यैव प्रवृत्तेरन्तरङ्गकार्यताज्ञानमेव प्रवर्तकमिति कार्यतैव लिङ्वाच्येति। तन्न। तथात्वे हि यत इदं कृतिसाध्यत्वे सति कृत्युद्देश्यमतः कार्यमिति बुद्धैव प्रवृत्तेः त्वदभिमतं कृतिसाध्यत्वादिरूपकार्यताज्ञानमपि न प्रवर्तकम्। किं त्वन्तरङ्गतदतिरिक्तकार्यतान्तरज्ञानमेव प्रवर्तकं स्यात्। तत्रातः कार्यमिति साधनविषय[1]चिकीर्षैव प्रतीयते। सा च कृतिरूपप्रवृत्तौ जनयितव्यायां कार्यताज्ञानस्य स्वरूपसती द्वारभूता न तु लिङर्थ इति चेत्समं प्रकृतेपि॥

यद[2]त्रोक्तं नित्ये कर्मणि प्रत्यवायपरिहारस्य फलत्वेऽन्योन्याश्रय इति। तन्न। सन्ध्यावन्दनविध्यनुपजीविना—

"नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्वि[3]जकर्मणः"॥

कृतिसाध्यत्वे सति कृत्युद्देश्यत्वादित्यर्थः। परमुखेन समाधिं वाचयति—तत्रात इति। सैव लिङाद्यर्थो भविष्यतीत्यत आह—सा चेति। चिकीर्षेत्यर्थः। प्रकृतेऽपीति। यत इष्टसाधनगतः कार्यमित्यत्रापीत्यर्थः। अनुपजीविनेति। निन्दार्थवादेन प्रायश्चित्तोपदेशेन मन्त्रलिङ्गेनेत्यन्वयः। उपतिष्ठतीति परस्मैपदप्रयोगः छान्दसः। उपान्मन्त्रकरण इत्यात्मनेपदविधानात्। पूर्वां पश्चिमामिति। प्रातः

[1] या चि—नं. ज. क. रा. सु. [2] यच्चोक्तं—ग. रा. सु. तच्चोक्तं—क. ज. [3] द्रूह्मक—ग.



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यादिनिन्दार्थवादेनाकरणे प्रायश्चित्तोपदेशेन च प्रत्यवायपरिहारस्य "यद्वा दुश्चरितं मम" इत्यादिमन्त्रलिङ्गेनोपात्त[1]दुरितक्षयस्य च प्रतीत्याऽन्योन्याश्रयाभावात् । न ह्यर्थवादनिरपेक्षेण विध्युद्देशेनैवार्थनिर्णयः । अतिप्रसङ्गात् । अनेकफलकत्वं च जातेष्टिन्यायेनोपपन्नम् ॥

---

कालीनां सायन्तनीमित्यर्थः । अत्र विहितपदाश्रवणात्सन्ध्यावन्दनविध्यनुपजीविनेत्युक्तम् । प्रायश्चित्तेति ।

"सन्ध्यावन्दनलोपे तु दिनमेकमभोजनम् ।
दिनद्वये त्रिरात्रं स्यात्कृच्छ्रमूर्ध्वं तु दिनत्रये" ॥

इत्यादिप्रायश्चित्तोपदेशेनेत्यर्थः । यद्वेति । "यद्वा दुश्चरितं मम सर्वं पुनन्तु मामापोसतां च प्रतिग्रहं स्वाहा" इति मन्त्रेऽ[2]र्थे प्रतिपादनसामर्थ्यरूपलिङ्गेनोपात्तेत्यर्थः । तावता सन्ध्याविधेरेतत्फलकत्वं कुत इत्यत आह—न हीति । अतिप्रसङ्गादिति । "अक्ताः-शर्करा उप[3]दधाति" इत्यादौ "तेजो वै घृत' मित्यर्थवादेनाञ्जनसाधनं घृतं विध्युद्देशे विवक्षितमिति निर्णीयते । तदनपेक्षायां यत्किंचित्तैलाद्येवोपादीयेत । तथा च सान्दिग्धे तु वाक्यशेषादीत्यधिकरणविरोधः । तथा "अग्नीषोमीयं पशुमालभेते'ति विधौ श्रुत पशुः "छागसस्य वपाया मेदसोनुब्रूहीति" मन्त्रलिङ्गेन छागरूप इति निर्णीयते" छागो वा मन्त्रवर्णात् इत्यधिकरणे । एवं तत्रतत्रेति तत्सर्वभङ्गप्रसङ्गादित्यर्थः ॥

नन्वेकस्य सन्ध्याविधेः प्रत्यवायपरिहारदुरितक्षयासत्प्रतिग्रहाद्यनेकफलकत्वमयुक्तम् । फलभेदे कर्मभेदावश्यंभावादित्यत आह—अनेकेति ।

---

[1] दुश्चरित–ज. क. [2] न्नार्थ–प. नं. [3] पादधीत–प.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अत एव सन्ध्यो[1]पासनादौ न विश्वजिन्न्यायः। किं तु रात्रिसत्रन्याय एव । "अकुर्वन्विहितं कर्म" इत्यादिस्मृतिस्तु श्रुतिसिद्धानुवादः । सन्ध्योपासनस्य नित्यत्वं तु नियोगफलकत्व इव

"वैश्वानरं द्वादशकपालं निर्वपति पुत्रे जात" इति वाक्यविहितजातेष्टिनामककर्मणः "पूत एव तेजस्व्यन्नादः । इन्द्रियावी पशुमान् भवती"तिवाक्यशेषे श्रुतपूतत्वाद्यनेकफलकत्वं यथा तथेत्यर्थः। अत एवेति । आर्थवादिकफलवत्त्वादेवेत्यर्थः । विश्वजिन्न्यायः पूर्वं प्रपञ्चितोऽस्माभिः मण्युक्तविध्यर्थभङ्गान्ते । रात्रिसत्रेति । चतुर्थस्य तृतीये पादे 'क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिरि'त्यष्टमे अधिकरणे "प्रतितिष्ठन्ति ह वा एता रात्रीरुपयन्तीति" सत्रकाण्डे श्रुतवाक्ये प्रतीतरात्रिनामकसौत्यकर्मणां सत्रगतानामनुष्ठानं स्वर्गार्थमुत प्रतिष्ठार्थमिति सन्देहे प्रतितिष्ठन्तीत्यस्य वर्तमाननिर्देशतया फलसमर्पणाशक्ततयाऽर्थवादत्वेनानिर्दिष्टफलत्वाद्विश्वजिन्न्यायेन स्वर्गार्थमिति प्राप्ते श्रुतप्रतिष्ठाफलत्यागेनाश्रुतस्वर्गकल्पने गौरवात् "येप्रतितिष्ठासन्ति ते रात्रीरुपेयुः कुर्युरि" त्येवमर्थवादश्रुतफलोद्देशेन रात्रिनामककर्मानुष्ठानविधिरिति सिद्धान्तितम् । तन्न्याय एवेत्यर्थः । प्रागुक्तस्मृतेः का गतिरित्यत आह—अकुर्वन्निति । तर्हि सन्ध्योपासनं काम्यमेव स्यान्न नित्यमित्यत आह—सन्ध्येति। नियोगेति । नियुज्यतेऽनेन पुमानिति नियोगोऽपूर्वम् । तत्फलकत्वे यथा नित्यत्वं तथेत्यर्थः ॥

नन्वपूर्वस्य पण्डत्वान्न दोष इति प्रागुक्त[2]मित्यस्ततदेवा-

[1] सन्ध्यायां स्नानादौ–क.   [2] क्तं तदेवायु–नं उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रत्यवायपरिहारफलकत्वेऽप्युपपन्नम् । पण्डापूर्वस्य पुरुपार्थत्वं चायुक्तम् । तस्य सुखदुःखाभावान्यतरत्वे तथानुभवप्रसङ्गात् । तदन्यतरसाधनत्वस्य च त्वयाऽनङ्गीकृतत्वात् । चतुष्टयभिन्नस्य च पुरुषेणानर्थ्यमानत्वात् । अनर्थ्यमानस्यापि श्रुत्या पुरुषार्थत्वबोधने कर्मैव वाऽनुष्ठानश्रम एव वा श्रुतौ[1] पुरुपार्थत्वेन बोध्यत इति स्यात् । कथं च नियोगस्य प्राधान्यं स्वर्गादिसाधनत्वात् ।

युक्तमित्याह—[2]पण्डेति । तत्किं सुखादिवत्साक्षादिष्टादित्वेन वा इष्टादिसाधनत्वेन वा तदुभयान्यत्वेऽपि पुरुषैरर्थ्यमानत्वेन वोपासीतेत्यादिश्रुत्येव पुरुषार्थत्वबोधनाद्वा । आद्य आह—तस्येति । द्वितीय आह—तदन्यतरेति । तृतीय आह—चतुष्टयेति । सुखतत्साधनदुःखाभावतत्साधनरूपचतुष्टयभिन्नस्येत्यर्थः । चतुर्थं निराह—अनर्थ्यमानस्येति ॥

"कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते" ॥

इति यत्कार्यस्य प्राधान्यमुक्तं तन्निराह—(अ) कथं चेति । न कथमपीत्यर्थः । तत्र हेतुः स्वर्गादीति । न हि साधनस्य प्राधान्यं संभवतीति भावः ॥

ननु—लिङ्तद्विषयनियोज्ययोरपि कार्यताधीहेतुत्वात्स्वसिद्ध्यर्थं स्वस्य स्वर्गकामादिरूपनियोज्यान्वयलाभायैव पुरुषस्य समीहितफलहेतुतां लभते । यथा गर्भप्रभृति दासरूपनियोज्यलाभाय, दाससमीहितसाधनतां प्राप्नुवन्नपि स्वामी नाप्रधानः तथैव कार्यं प्रधानमस्ति ।

[1] त्या—नं. रा. सु. तावपुरुषार्थं एव पु—ज. क. [2] पण्डापूर्वेति । ए.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न च नियोगः चेतनो, येन गर्भदासन्यायः। अन्यथा यागादिकमेव प्रधानं स्यात् ॥

यच्चोक्तं चिकीर्षायाः कृतिसाध्यत्वप्रकारकज्ञानसाध्यत्वनियमात् कार्यताज्ञानं प्रवर्तकमिति। तन्न। सुखत्वमात्रप्रकारकज्ञानादपि सुखं मेऽस्त्विति स्ववृत्तित्वप्रकारकेच्छादर्शनात्। कृतिप्रकारकफलेच्छायां सत्यां तदिच्छाविषयसाधनत्वज्ञानेनैव क्रियायां चिकीर्षोपपत्तेश्च ॥

तस्मादिष्टसाधनताज्ञानमेव प्रवर्तकम्। न तु कार्यताज्ञानमितीष्टसाधनत्वमेव विध्यर्थः ॥

---

उक्तं च षष्ठाध्यनयान्ते नयविवेकवरदराजीये। नचैतावताऽपूर्वस्य फले गुणता वाच्या। यतः स्वसिद्ध्यनुगुणनियोज्यलाभाय तत्समीहितफलोपायत्वमवलम्बते गर्भदासस्येव स्वामीत्यादि। तथा च कथं नियोगस्य न प्राधान्यमित्यत आह—न चेति। गर्भदासो नाम क्रयलब्धायां दास्यां जातः[1]। तस्य स्वामी चेतन इति कृत्वा मत्सिध्यनुगुणनियोज्यभूतोयं दास इति तत्समीहितोपायतामश्नुत इति युज्यते। नियोगस्त्वचेतनः स कथं मत्सिद्ध्यनुगुणनियोज्योयं फलकामीति बुद्ध्या स्वस्य स्वर्गकामादिरूपनियोज्यलाभाय तत्समीहितफलसाधनतामश्नुवीतेत्यननुगुणो गर्भदासन्याय इत्यर्थः। यच्चोक्तमिति। एतद्भङ्गस्यादावित्यर्थः। अस्तु त्वदुक्तं तावता नास्माकं क्षतिरित्याह—कृतिसाध्यत्वेति।

---

[1] तो गर्भदासः। तस्य—नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतदप्युक्तम्। लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति।
न तु कार्यत्वमित्यर्थः ॥

कार्यताज्ञानस्य प्रवर्तकत्वभङ्गः ॥ ३६ ॥

## अथ स्वमते श्येनाग्नीषोमीयवैषम्यम् ॥ ३७ ॥

नन्विष्टसाधनत्वमात्रस्य विध्यर्थत्वे तस्य विष-
संपृक्तमधुभोजन इव निषेधवाक्यार्थेनानिष्टसाधन-
त्वेन सहाविरोधादग्नीषोमीयहिंसायामुभयसंभ-

---

एतदप्युक्तमिति । यत्तु कैश्चिदित्यादिनोक्तं प्रमेयमपि कर्मनिर्णये
भगवत्पादैरुक्तमित्यर्थः ॥

कार्यताज्ञानस्य प्रवर्तकत्वभङ्गः ॥ ३६ ॥

अथ स्वमते श्येनाग्नीषोमीयवैषम्यम् ॥ ३७ ॥

यदि मण्याद्युक्तरीत्या विशिष्टेष्टसाधनत्वं न लिङाद्यर्थः तदा
बाधकमाशङ्क्य निराह—नन्वित्यादिना । मात्रपदेन बलवदनिष्टा-
ननुबन्धित्वादिविशेषणव्यावृत्तिः । भोजन इवेति । तत्र तात्कालिक-
तृप्तिरूपेष्टसाधनत्वस्य सत्त्वात्तस्य चानिष्टसाधनत्वेन यथा न विरोध-
स्तद्वदविरोधादिति भावः । निषेधेति । "न हिंस्यादि' त्यत्र-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वान्मा[1] हिंस्यादिति निषेधः तदतिरिक्तविषयत्वेन न व्यवस्थाप्यः स्यादिति चेन्न। निन्दार्थवाद-प्रायश्चित्तोपदे[2]शाद्यशबलितविधेयत्वस्यानिष्टासाधनत्वेन व्याप्ततया पर्यवस्याद्विध्यर्थेन सह विरोधात्। श्येनेनाभिचरन्यजेतेति विधिस्तु—

"विष्ठा वार्धुषिकस्यान्नमभिचाररतस्य च"॥

नञ्युक्तलिङः पर्युदासेनानिष्टसाधनत्वमर्थ इति मण्याद्युक्तविध्यर्थभङ्गे कथितत्वेन निषेधवाक्यार्थो हिंसाया अनिष्टसाधनत्वम्। तच्चाग्नीषोमीयादिहिंसायां लिङादिबोधितेष्टसाधनत्वस्याविरोधीति तत्रोभयसंभवादित्यर्थः। साक्षाल्लिङाद्य[3]र्थेनाविरोधेऽपि न हिंस्यादित्यस्याविनाभावलब्धविधिवाक्यार्थेन विरोधोस्तीत्याह—निन्दार्थवादेति। पर्यवस्यन् यत्र निन्दाद्य[4]शबलितविधेयत्वं तत्रानिष्टा[5]साधनत्वमिति व्याप्तिबलेन लभ्यो योऽविध्यर्थः अनिष्टसाधनत्वासमानाधिकरणेष्टसाधनत्वरूपस्तेन सह विरोधात्तद्व्यतिरिक्तत्वेन व्यवस्थाप्यः। अग्निषोमीयादिविधिश्च निन्दाद्यशबलित इति वक्ष्यत भावः। कथं तर्हि "श्येनेनाभिचरन् यजेते" त्यत्र निषेधविषयत्वम्। तत्रापि "लक्षणहेत्वोः क्रियाया" इति हेतौ विहितशत्रन्ताभिचारपदेनाभिचारशब्दितशत्रुवधकाम इत्यर्थलाभेन शत्रुवधरूपेष्टसाधनत्वस्य श्येननामकयागे लिङा बोधितत्वेऽपि पर्यवसित[6]-विध्यर्थेन विरोधस्य वक्तुं शक्यत्वेन तदन्यविषयत्वेन व्यवस्थापयितुं शक्यत्वादित्यत आह—श्येनेनेति। वार्धुषिकस्य वृद्ध्युपजीविन इत्यर्थः। "वृद्धिजीवस्तु वार्धुषिः" इत्यमरोक्तेः॥

[1] न हिं—ग. क. रा. सु. [2] संव—नं. [3] आदिपदं नास्ति—नं. उ. [4] न्दाश—पं. नं. [5] ष्टसा—प. नं. [6] तसाध्येन विरो—नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इति निन्दार्थवादेन "त्रिभिः कृच्छ्रैर्व्यपोहती"ति प्रायश्चित्तोपदेशेन च शबलितो अग्नीषोमीयविधिस्तु तदशबलित इति वैषम्यम् ॥

एवं च मन्मते श्येने लिङ् मुख्य एव । स्ववाच्यस्येष्टसाधनत्वस्य सत्त्वात् । अनिष्टसाधनत्वस्यापि [1]सत्त्वान्निन्दादिकं चोदनासूत्रोक्तमनर्थत्वं च युक्तम् ॥

---

"सम[2]र्घं धनमा[3]हृत्य महार्घं[4] यः प्रयच्छति ।
स वै वार्धुषिको नाम सर्वकर्मबहिष्कृतः ॥

इति स्मृत्युक्तलक्षणस्य वेत्यर्थः । कृच्छ्रैरिति ।

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं पयश्च नाश्नीयाद्व्रतमेतत्प्रजापतेः ॥"

इत्युक्तलक्षणप्राजापत्यकृच्छ्र[5]नामकद्वादशदिवसानिवर्त्यव्रतविशेषैः ।त्रिभिर्व्यपोहाति । अभिचारदोषं परिहरतीत्यर्थः । शबलित इति । युक्त इत्यर्थः । तथाच पर्यवस्यद्विध्यर्थोपीष्टसाधनत्वमात्रमेव न त्वनिष्टा[6]साधनत्वसमानाधिकरणम् । येन विरोधेन तदन्याविषयताऽपि व्यवस्थाप्यत इति भावः । एवं कल्पनायां किं बीजमित्यतो युक्तिमाह—एवं चेति । इष्टसाधनत्वमात्रस्य लिङर्थत्वे निषेधस्य पर्यवसित विध्यर्थेन सह विरोधे च सतीत्यर्थः । निन्दादिकमिति । प्रागुक्तामित्यर्थः । चोदनासूत्रेति । पूर्वतन्त्रे "अथातो धर्मजिज्ञासे" त्यत्र किं लक्षण-

---

[1] नाध्ये इत्यधिकम्—जः क. [2] र्धं—नं. उ. [3] मादाय अनर्घं—ए. उद्धृत्य—नं उ. [4] र्धं-उ. न. [5] च्छ्रात्मक—ए. [6] ष्ट सा—ए. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतदप्युक्तं लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति न तु बलवदनिष्टाननुबन्धित्वविशिष्टमित्यर्थः ॥

स्वमते श्येनाग्नीषोमीयवैषम्यम् ॥ ३७ ॥

---

को धर्मः किं प्रमाणक इति जिज्ञासायां श्रुत्यर्थाभ्यां लक्षणप्रमाणे वक्तुं द्वितीयसूत्रं "चोदनोलक्षणोर्थोधर्म" इति । तत्र भट्टमते चोदनाशब्दो विध्यर्थवादमन्त्रनामधेयरूपच[1]तुरास्यात्मकवेदपरः । प्राभाकरमते च केवलविधिवाक्यपरः । लक्षणशब्दः प्रमाणवचनः । धर्मः इत्यनुवादेन चोदनाप्रमाणक इति प्रमाणे उक्ते सत्यर्थात् यश्चोदनाप्रमाणकः स धर्म" इति लभ्यत इति चोदनाप्रमाणकत्वं धर्मस्य लक्षणमर्थादुक्तं भवति । एवं तर्हि श्येनयागस्यापि चोदनाप्रमाणकत्वाद्धर्मत्वं स्यादित्यतस्तद्व्यावृत्त्यर्थं यश्चोदनाप्रमाणकोर्थरूपश्च स धर्म इत्यर्थग्रहणं कृतम् । श्येनयागस्त्वनर्थ इति । तथा च चोदनासूत्रोक्तमग्नीषोमीयादिधर्मविशेषणार्थत्वव्यावर्त्यतया श्येनयागस्योक्तमनिष्टसाधनत्वशब्दितमनर्थत्वं च युक्तमित्यर्थः । एतदपीति । इष्टसाधनत्वमात्रस्य लिङाद्यर्थत्वे श्येनाग्नीषोमीयादिवैषम्यायोगो न बाधक इत्येतदपि न केवलं प्रागुक्तमित्यपे[2]रर्थः ॥

स्वमते श्येनाग्नीषोमीयवैषम्यम् ॥ ३७ ॥

---

[1] तूराश्या–ए. नं.　　[2] अपिपदं न–उ. नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ नैयायिकोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥३८

नैयायिकैकदेशिनस्तु न मरणजनकव्यापार-
मात्रं हिंसा । कृष्या[1]दौ गवि नष्टे कृपि[2]कर्तुर्गो-
हन्तृत्वापत्तेः । किं तु साक्षान्मरणफलको व्या-
पारः । श्येनश्च न तथेति "[3]मा हिंस्यादिति

अथ नैयायिकोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ३८ ॥

यत्तु मणौ—लिङादेः पूर्वोक्तविशिष्टेष्टसाधनत्वार्थकत्वपक्षे श्येनादौ विधिप्रवृत्त्ययोगमाशङ्क्य श्येनयागस्य साक्षान्मृतिहेतुव्यापारत्वाभावेन वा मृतिरूपफलाव्यवहितव्यापारत्वाभावेन वाऽदृष्टाद्वारकमृतिहेतुव्या-पारत्वाभावेन वा त्रेधा हिंसात्त्वाभावमुपेत्य तथानभिसंहितनरान्तरव्या-पा[4]राद्वारकत्वेन वा मृत्युद्देश्यकमृतिफलकव्यापारत्वेन वा हिंसात्वमुपेत्य च हिंसात्वतदभावोपगमप्रकारपञ्चकेन श्येनयागे विधि[5]प्रवृत्त्युपपादनम् पञ्चधा कृतम् । तत्रानभिसंहितनरान्तरेऽतिपक्षो मणावेव दूषितः । अन्यत्तु त्रयमन्यतमत्वेनोक्तम् । पञ्चमं तु स्वमतत्वेनोक्तम् । तत्सर्वं स्पष्टं निराकुर्वन्नादौ तावद[6]न्यत्वव्यभिचारस्य वैरिवधफलत्वेन श्रुतत्वा दित्यादिनोक्त[7]माद्यमतमनूद्य निराह—नैयायिकेति । आहुरित्यन्वयः पुल्लिङ्गोप्यस्ति गोशब्द इति नष्ट इति साधु । श्येनश्च न तथेति ।

[1] कूपादौ—ज क. रा. सु. [2] प्यादि-नं. कूपादिक-ग. ज. क. रा. सु. [3] न हिं—रा. सु. ग. ज. क. [4] अद्वारेति नास्ति—नं. उ. [5] प्रत्ययो— उ. [6] न्येत्व-नं. [7] क्तं तदनू—नं. उ.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

निषेधास्पृष्ट एव । लिङर्थश्च न बलवदनिष्टानुबन्धित्वविशिष्टमिष्टसाधनत्वम् । किं तु बलवदनिष्टाजनकत्वविशिष्टम् । तच्च श्येनेस्तीति तत्र लिङ्मुख्य एव तस्य नरकजनकवैरिवधजनकत्वेनानिष्टानुबन्धित्वेपि नरकाजनकत्वात् । एवं च श्येनस्य नरकाजनकत्वाद्विधानम् । नरका[1]नुबन्धित्वादनर्थत्वमित्याहुः ॥

तन्न । गळलग्नान्नकवळेन मृतस्या[2]त्महन्तृत्वापत्तेः । अन्ने विषप्रयोक्तुः खड्गेन व्रणपरम्परया घातकस्य चाहन्तृत्वापत्तेश्च ॥

खड्गहननादेरेव तथात्वात् । श्येनस्य च शत्रुशरीरे स्फोटकज्वरादिद्वारैव मृतिहेतुत्वादिति भावः । तावता तस्य कथं विधेयता शत्रुवधस्येष्टतया श्येनस्येष्टसाधनत्वेऽपि बलवदनिष्टानुबन्धित्वाद्बलवदनिष्टाननुबन्धीष्टसाधनत्वस्यैव लिङर्थत्वादित्यत आह—लिङर्थश्चेति । अजनकत्वविशिष्टमिति । इष्टसाधनत्वमित्यनुषङ्गः । अनिष्टाजनकत्वं च साक्षादनिष्टजनकत्वाभावः । तच्चेति । साक्षादनिष्टजनकत्वाभावविशिष्टमिष्टसाधनत्वमित्यर्थः । तद्व्यनक्ति—तस्येति । अनर्थत्वमिति । चोदनासूत्रेऽर्थपदव्यावर्त्यतयोक्तमनर्थत्वमित्यर्थः । साक्षान्मरणफलकव्यापारत्वरूपाहिंसात्वलक्षणस्यातिव्याप्त्यव्याप्ती आह—गळलग्नस्येति । [3]दोषा-

[1] कजनकजनकत्वाच्चानर्थ—ग. ज. रा सु. [2] 'स्याहं कर्तृत्वा' अग्रेप्येवमस्ति—ज. [3] मणावेव व्यक्तदोषानुक्त्वा इत्यधिकम्—ए. 'स्वयं' इत्यपि—नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किं च खड्गकर्तुस्तु खड्गप्रक्षेपादिर्निरन्तरव्यापारो नाभिसंहितः। किं तु धनमेवेति नायं घातकः। [1] यज्ज्ञातं सत्प्रवर्तकं स एव लिङर्थः। न च त्वदुक्तं तथा। साक्षादनिष्टाजनकत्वज्ञाने-सत्यप्यनिष्टजनकजनकत्वज्ञाने सत्यप्रवृत्तेः॥

एतदप्युक्तं लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति। न तु बलवदनिष्टाजनकत्वविशिष्टमित्यर्थः॥

न च फलाव्यवहितव्यापार एव धातुवाच्यः, अन्यथा तण्डुलक्रयादावपि पचतीति स्यात्, तथा च हन्तेरपि मरणाव्यवहितव्यापार एवार्थः श्येनश्च न तथेति न हिंसेति वाच्यम्। फलजनकव्यापारमात्रस्यैव धातुवाच्यत्वात्। अन्यथा विक्लित्त्यव्यवहितक्षण एव पचतीति स्यात्। तण्डुल-

न्तरं चाह---किं चेति। एतदपीति। एकदेशिमतनिराकरणमपीत्यर्थः। द्वितीयमतमाशङ्क्य निराह---न चेति। वाच्यमित्यन्वयः। फलेति। तण्डुलविक्लित्तिरूपौदनाख्यफलाव्यवहितव्यापारः पचिधातुवाच्यः। मरणरूपफलाव्यवहितव्यापारश्च हनहिंसागत्योः हिसि हिंसायामित्यादि धातुवाच्य इत्यर्थः। अन्यथेति। फलव्यवहितव्यापारस्यापि धातुवाच्यत्व इत्यर्थः। हन्तेरित्युपलक्षणम्। हिनस्तेरपीत्यपि ध्येयम्। हिंसेत्यस्य हिनस्तिधातुजन्यत्वात्। श्येनश्च न तथेति। खड्गहननादिरेव तथेति भावः। अव्यवहितक्षण एवेति। अव्यवहितपूर्वक्षण एवेत्यर्थः। क्षण इति सप्तमी॥

[1] खड्गकर्तुस्तु इत्यादि नास्ति-ग ज. क. रा सु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्रयस्तु [1]नौदनहेतुः । क्रयं विनाप्राप्ततण्डुलैरपि तत्सिद्धेः ॥

एतेनानभिसंहितनरान्तरव्यापारमद्वारीकृत्य मरणसाधनं हिंसा । एवं च खड्गेन [2]व्रणपरम्परायाः सत्त्वेपि नरान्तरव्यापाररूपविशेष्याभावात्खड्गेन प्रहर्ता घातकः । अन्ने विषप्रयोक्ता विषभोजनरूपं नरान्तरव्यापार[3]मभिसंधत्त इति अनभिसंहितत्वरूपविशेषणाभावात्सोपि घातक एव । खड्गादिकर्तुश्च खड्गप्रक्षेपादिनरान्तरव्यापारो नाभिसंहितः । किं तु धनमेवेति नायं घातकः । विषप्रयोक्ता तु भोजनरूपनरान्तरव्यापारमभिसंधत्त इति सोपि घातुक एव । श्येनेपि नरान्तरव्यापारोऽभिसंहित इति श्येनोपि हिंसैव । ततश्च श्येने इष्टसाधनत्वरूपविशेष्यस्य

---

तृतीयमपि मतं मणावपर[4] इत्यादिनोक्तम् । तदप्यनूद्य निराह— एतेनेति । निरस्तमित्यन्वयः । अनभिसंहितोनुद्दिष्टो यो नरान्तरव्यापारस्तमद्वारीकृत्येत्यर्थः । विशेष्यविशेषणाभ्यां[5] क्रमादव्याप्तिं निराह— एवं चेति । एवं हिंसालक्षणत्वे सतीत्यर्थः । अतिव्याप्तिमद्वारीकृत्येति विशेषणेन निराह— खड्गेति । श्येनेपि नरान्तरव्यापार

---

[1] नोद-ग. ज. क. रा. सु. [2] प्रहरणे इत्यधिकम्—रा. सु. ग. [3] व्यापारपदं न—ग. ज. [4] रेत्वि—प. उ. नं. [5] विशेषणविशेष्याभ्यां—नं. उ.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सत्त्वाद्विधिः । अनिष्टाननुबन्धित्वरूपविशेषणस्या-
सत्त्वादनर्थत्वं चेति केषां चिन्मतं निरस्तम् ॥

गळलग्नान्नकवळान्मरणे परिवेषयितुः घातकत्वा-
पातात् । अनेनेदं भोक्तव्यमिति परिवेषणात् ।
भोक्तुरात्महन्तृत्वापत्तेश्च । अनभिसंहितनरान्तर-
व्यापारमद्वारीकृत्य मरणानुकूलान्नभक्षणानुष्ठानात्।
विशिष्टे शक्तस्य विधिप्रत्यस्य विशेष्यमात्रपरत्वे
लक्षणाप्रसङ्गाच्च ॥

अपरे तु अदृष्टाद्वारको मरणोद्देश्यको मरण-
फलको व्यापारो हिंसा । अन्योद्देशेन क्षिप्तनारा-
चेन ब्राह्मणे हते क्षेप्तुर्न हन्तृता । अत एव तत्र
प्रायश्चित्ता[1]र्धोपदेशः । श्येनश्चादृष्टद्वारैव मरण-

---

इति । स्फोटज्वरादिशत्रुगतव्यापार इत्यर्थः । केषां चिदिति । नैया-
यिकैकदेशिनामित्यर्थः । एतेनेत्युक्तं व्यनक्ति -- गळलग्नेति । मण्युक्त-
दोषानुक्त्वा स्वयं दोषान्तर[2]माह —विशिष्टशक्तस्येति । बलवदनिष्टा-
ननुबन्धित्वादिविशिष्टेष्टसाधनत्वे शक्तिमतो लिङ्प्रत्ययस्य "श्येनेना-
भिचरन्यजेते' त्यत्रेष्टसाधनत्वमात्रपरत्वे लिङो लाक्षणिकत्वमेव स्यान्न
तु मन्मत इव पूर्वमत इव च मुख्यत्वमित्यर्थः ॥

चतुर्थमपि मतं मणौ वस्तुतस्तु मरणोद्देशेन कृतोऽदृष्टाद्वारक-
स्तदनुकूलो व्यापारो हिंसेत्यादिनोक्तं तदप्यनूद्य प्रत्याह—अपरेत्वि-
त्यादिना । मरणोद्देश्यके इत्यस्य कृत्यमाह -- अन्योद्देशेनेति ।
नाराचः शरविशेषः । प्रायश्चित्तार्धेति । पूर्वं ब्रह्मघ्नः किंचिद्व्रतमुक्त्वा

---

[1] त्तार्धो—ग. [2] रं चाह–प. उ. नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

साधनमिति न हिंसेति निषेधास्पृष्ट एव। यदि चादृष्टद्वाराऽपि मरणसाधनं हिंसा तर्हि सप्तमीतैलाभ्यङ्गस्यादृष्टद्वारा [1]भार्याविनाशकत्वात्तत्कर्तुर्हिंसकत्वं स्यादित्याहुः। तन्न। सप्तमीतैलाभ्यङ्गस्य मरणोद्देश्यकपदेनैव निवारणेनादृष्टाद्वारकपदस्य विप्रतिपन्नश्येनमात्रव्यावर्तकतया वैयर्थ्यात् ॥

नव्यास्तु मरणोद्देश्यको मरणफलको व्यापारो हिंसा। एवं च श्येनो हिंसैव। विधिप्रत्ययस्तु

---

"द्वादशाब्दव्रतं कुर्यादेवं व्रतपरायणः"।

इति अज्ञानकृतब्रह्महत्यायाः द्वादशाब्दव्रतोक्तेः ज्ञानिनस्तु—

"यो विप्रो ब्राह्मणं हत्वा ज्ञात्वा भृत्यादिभिर्यदा।
चतुर्विंशतिवर्षाणि व्रतकृच्छुद्धिमाप्नुयात्" ॥

इति तद्द्विगुणप्रायश्चित्तोक्तेरिति भावः। वैयर्थ्यादिति। हिंसात्वाभावे निर्णीते ह्यलक्ष्यव्यावृत्त्यर्थं विशेषणमर्थवद्भवति। हिंसात्वविवादे तु तद्व्यर्थमेवेति भावः ॥

पञ्चममपि मतं मणौ 'श्येनेनाभिचरन्यजेते'त्यत्र कथं विधिप्रवृत्तिरित्याक्षिप्योक्तम्। तदनूद्य प्रत्याह—नव्यास्त्वति। नूतननैयायिका इत्यर्थः। आहुरित्यन्वयः। श्येनस्य हिंसात्वमुपेत्य विधेयत्वं प्रायश्चित्तविषयत्वं चाधिकारिभेदेन व्यवस्थापयतां मतं च नव्यमुखे-

---

[1] राष्टमभा—नं. रेष्टभा—ग. ज. क. रा. सु.



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इष्टसाधनत्वरूपविशेष्यमात्रपरः । यत्तु म्लेच्छ-जनपदाभिचारमुद्दिश्य वेदे श्येनविधिः धनलोभादिना ब्राह्मणाभिचारमुद्दिश्यानुष्ठिते श्येने प्रायश्चित्तविधिरित्युक्तम् । तन्न । अन्योद्देशेन विहितेऽन्योद्देशेनानुष्ठानस्याप्रसक्त्या प्रायश्चित्तोपदेशायोगादित्याहुः । तत्र त्वदुक्तं हिंसालक्षणं श्येने हिंसात्वं च ममापि संमतमेव । किंतु मद्रीत्या श्येने विधिप्रत्ययस्य मुख्यत्वसंभवेऽतिजघन्या विधौ लक्षणा न युक्ता ॥

एतदप्युक्तं लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति ॥

नैयायिकोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ३८ ॥

---

नैवानूद्य निराह —यत्त्विति । तन्नेत्यन्वयः । अतिजघन्येति । लक्षणैव जघन्या । विधौ लक्षणाऽतिजघन्या । 'न विधौ परः शब्दार्थ' इति शावरभाष्योक्तेः । विशिष्टवाचिनो लिङ्प्रत्ययस्येष्टसाधनत्वरूपविशेष्यमात्रार्थत्वोपगमादिति भावः ॥

यत्तु कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वेष्टसाधनत्वेषु विधिप्रत्ययस्य शक्तित्रयाङ्गीकारान्न लक्षणेति । तन्न । प्रागुक्तरीत्येष्टसाधनत्वमात्रैकशक्तिकत्वोपपत्तौ नानाशक्तिकल्पनस्याप्रामाणिकत्वात् । गौरवपराहतत्वेनासंभवाच्चेति भावः । एतदपीति । श्येनादावपि लिङो मुख्यत्वमित्येतदपीत्यर्थः ॥

नैयायिकोक्तश्येनाग्नीषोमीयादि[1]वैषम्यभङ्गः ॥ ३८ ॥

---

[1] आदिपदं न-नं.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ साङ्ख्याद्युक्तश्येनाग्नीषोमीयवैषम्यभङ्गः॥ ३९॥

साङ्ख्यास्तु—अग्नीषोमीयहिंसायां असङ्कुचित[1] वृत्तिना न हिंस्यादित्यनेन निषिद्धतया पापहेतुत्वेऽपि महाफलसाधनवेदविहितक्रतूपकारकत्वात्पापमल्पं सुपरिहरं च। पुण्यं तु महादित्याहुः। तन्न। सामान्यनिषेधस्य न्याये सर्वसंमते च विहितेतर परत्वे संभवति विहितपरत्वं स्वीकृत्य वेदविहितहिंसायाः पापहेतुत्वोक्त्ययोगात्॥

अन्ये त्वग्नीषोमीयालम्भनं यद्यपि पशुप्राणवियोजकं, तथाऽपि तस्य "न वा उ एतान्म्रियसे

---

## अथ साङ्ख्याद्युक्तश्येनाग्नीषोमीयवैषम्यभङ्गः॥ ३९॥

"अशुद्धमिति चेन्न शब्दा"दिति वैराग्यपादीयसूत्रभाष्याद्युक्तवैधीहिंसाया अपापहेतुत्वादिकं साधयितुकाम आह—साङ्ख्यास्त्विति। आहुरित्यन्वयः। महाफलेति। स्वर्गादिरूपमहाफलसाधनम्। [2] वेदविहितो यः क्रतुस्तदुपकारत्वादित्यर्थः। योगमतमाह—अन्येत्विति। तस्येत्यस्य दिव्यदेहसंपादकत्वावगमादित्यनेनान्वयः। न वा इति विशस्यमानपशुं प्रत्युच्यते। म्रियसे प्राणैर्वियुक्तो नासि। न रिष्यसि-हिंसितो नासि। रिष हिंसायामिति धातोः। देवान्[3] इत्, देवानेव

---

[1] चद्वृ–ज. क. ग. [2] नवे–ए. नं. [3] उत्–ड. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न रिष्यपि देवां इदेषि पथिभिः सुगेभि"रित्यादि-मन्त्रैः पापफलपशुशरीरप्रहाप[1]णेनोत्कृष्टभोगसाधन दिव्यदेहसंपादकत्वावगमान्न हिंसा। न हि व्रणादिशान्त्यै दाहच्छेदादिकं[2] कुर्वाणा व्रणचिकित्सका हिंसकाः। किं तु रक्षकाः। इत्याहुः। तदपि न। चिकित्सककृतस्य व्रणशामकस्य व्यापारस्य-दाहादित्वेऽप्यपापत्ववद्देवब्राह्मणकण्टकराक्षसव्याघ्रादिमारणस्येव चाग्नीषोमीयालम्भनस्य हिंसात्वेपि न हिंस्यादिति निषेधस्य विहितेतर[3]विषयत्वसंभवेन निषेधास्पृष्टविधेयत्वेन धर्मत्वसंभवेऽहिंसात्वोपपादनायासानर्थक्यात् ॥

एतदेवाभिप्रेत्य गीतातात्पर्ये "साङ्ख्यैर्योगैश्च विहितहिंसाया अनर्थहेतुत्वाङ्गीकारादिति" साङ्ख्याद्युक्तं वैषम्यद्वयं दूषयितुं विहितपदं हिंसापदं च प्रयुक्तम्[4] ॥

सुगेभिः सुष्ठु गम्यैः। पथिभिः मार्गैः। एषि प्राप्नोषीत्यर्थः। पापफलेति। पापस्य फलरूपं यत्पशुशरीरम्। तत्प्रहा[5]पणेनेति। तिर्यग्जन्मनोपि नरकविशेषत्वादिति भावः। अपापत्ववदित्यस्य धर्मत्वसंभव इत्यन्वयः। मारणस्येव चेति। तस्य हिंसात्वेपि यथा धर्मत्वं तथा संभव इत्यर्थः। दृष्टान्ते दार्ष्टान्तिके चोभयत्र हेतुर्न हिंस्यादिति। एतदेवेति। मतद्वये कथितं दूषणमेवेत्यर्थः। गीतेति।

[1] हाणेर्न–रा. सु. ज. क. [2] दिकारिणश्चिकि–ज्ञ. ग. क. नं.
[3] परत्वसं–नं. रा. सु. [4] एतदेवाभिप्रेत्येत्यादि नास्ति–ग. ज. क. [5] हाणे–उ. नं.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इतरे तु—श्येने हिंसा न विहिता। किं तु रागप्राप्ता। यदि हिंस्यात्तर्हि श्येनेन हिंस्यादिति तत्र विधिक्रमः। न तु हिंस्यादेवेत्याहुः। तदपि न। स्वर्ग इव वधरूपे फले रागतः प्राप्तेऽपि ज्योतिष्टोमस्येव श्येनस्यापि विधिवाक्येनैव फल-साध[1]कत्वरोधनात् ॥

साङ्ख्याद्युक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ३९ ॥

---

## अथ प्राभाकरभाट्टोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥

---

प्राभाकरास्तु—श्येनः करणम्। अग्निषोमीय हिंसा त्वङ्गम्। करणे च रागतः प्रवृत्तिः। अङ्गे[2]

---

द्वितीयेऽध्याये। हिंसा न विहितेति। अग्नीषोमीयादिपशुहिंसा-वच्छत्रुवधरूपहिंसा न विधिप्राप्तेत्यर्थः। हिंस्यादेवेतीति। शत्रुमिति शेषः। शत्रुवधे न विधिव्यापार इति भावः॥

साङ्ख्याद्युक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ३९ ॥

---

अथ प्राभाकरभट्टोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ४० ॥

---

करणमिति। अभिचाररूपफलं प्रतीति योज्यम्। श्येनेनेति तृतीयाश्रवणादिति भावः। अङ्गमिति। ज्योतिष्टोमाङ्गत्वेनाग्नीषोमीयं पशु-

---

[1] घनत्व—ज क. नं. रा. सु. ग. [2] ङ्गेषु तु—नं रा. सु.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तु वैधीति वैषम्यमित्याहुः। तदपि न। सेति-कर्तव्यताकस्यैव करणत्वेनेतिकर्तव्यतांशेऽपि फल-रागादेव प्रवृत्तेः। यदि हीतिकर्तव्यतां विनाऽपि फलं सिध्येत्तर्हि तदनुष्ठानं व्यर्थमेव। यदि तु फलं न सिद्ध्येत्तर्हि फलरागादेवाङ्गेऽपि प्रवृत्तिः॥

[1]भाट्टास्तु—श्येनस्य वधः फलम्। तच्च न हिंस्यादिति निषिद्धम्। अग्निषोमीयस्य तु क्रतूप-कारः फलम्। तच्च[2] निषिद्धमिति वैषम्यमित्याहुः। तन्न। फलनिषेधस्य साधनपर्यन्तत्वे साधनविधे-रपि फलपर्यन्तत्वापत्तेः। यदि च फलनिषेधो-

---

मालभेतेति विधानादिति भावः। फलरागादेव प्रवृत्तेरित्येतद्व्यनक्ति—यदि हीति। वध इति। शत्रुवधः। इति वैषम्यमिति। निषिद्धफल-कत्वानिषिद्धफलकत्वाभ्यां वैषम्यमाहुरित्यर्थः। न हिंस्यादित्यस्य हिंसासा-धनं न कार्यमित्येतत्पर्यन्तत्वमस्त्युत हिंसा न कार्येत्येतत्पर्यन्तत्वमेव वा। आद्य आह—फलनिषेधस्येति। साधनेति। ज्योतिष्टोमादिसाध-नविधेरपीत्यर्थः। तथा च—

'फलांशे भावनायास्तु प्रत्ययो न विधायकः'।

इति त्वद्वचनविरोध इति भावः। यद्वा श्येनेन यजेतेति साधनविधेरपि वधरूपफलपर्यन्ततापत्त्या फलस्याप्यग्नीषोमीयादिहिंसावद्विधिसंस्पृष्टतया 'न हिंस्यादि' त्यस्य तद्व्यतिरिक्तपरत्वावश्यम्भावेन तस्यानर्थत्वं न स्यादिति भावः। अन्त्य आह—यदि चेति॥

---

[1] भ–ग. रा. सु. [2] च्चननि–ज. क. नं. रा. सु.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न साधनपर्यन्तस्तर्हि साधनान्निवृत्तिर्न स्यादिति दिक् ॥

एतदप्युक्तम् । लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति । तस्मादिष्टसाधनत्वस्य लिङर्थत्वे बाधकाभावाल्लिङ्गम्येष्टसाधनत्वनिर्वाहायापूर्वं कल्प्यम् ।

प्राभाकरभाट्टोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ४० ॥

ननु — निषिद्धसाधनत्वादेव श्येनान्निवृत्तिः । न तु न हिंस्यादिति निषेधस्पृष्टत्वादिति चेत्तर्हि ज्योतिष्टोमादावपि अनिषिद्धकाम्यहेतुत्वादेव प्रवृत्तिः । न तु विहितत्वादित्यस्तु । तथा च विधिनिषेधयोरेव प्रवर्तनानिवर्तनाबोधद्वारा प्रवृत्तिनिवृत्तिहेतुत्वमिति भज्येत । सन्ध्यामुपासीतेत्यादौ नित्ये फलहेतुत्वाभावेनाप्रवृत्तिप्रसङ्गाच्च । निषिद्धफलकत्वेन श्येनादावप्रवृत्तौ विधिसंस्पृष्टत्वेन प्रवृत्त्यापाताच्चेत्याद्यभिप्रेत्याह — दिगिति । एतदपीति । अग्निषोमीयादिपश्वालम्भनस्यापि कारणकोटिप्रविष्टत्वं श्येनस्यापि विधिनेष्टसाधनत्वेन विधिबोधितत्वमित्येतदपीत्यर्थः ॥

नन्विष्टसाधनत्वमित्यादिभङ्गाष्टकेनोपपादितं विधिवादप्रमेयं उत्तरभङ्गोपक्षेपं कुर्वन्नेवोपसंहरति — तस्मादिति । निर्वाहायेति । कालान्तरभाविफलं प्रत्याशुतरविनाशिक्रियायाः साधनत्वस्यापूर्वं विनाऽनुपपत्तेः । तदन्यथानुपपत्त्याऽपूर्वनामकं किंचिद्वस्तु परिकल्प्यम् । न तु लिङ्वाच्यमित्यर्थः ॥

प्राभाकरभट्टोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ४० ॥

विधिवादः संपूर्णः.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## मुळवागलु श्री श्री श्रीपादराजमठीयपरिशुद्धव्याख्यापुस्तकसमुपलब्धेः पूर्वं मुद्रापितभागे तदनुसारी पाठक्रमः.



| पृष्ठं. | पङ्क्तिः | 'मु' पुस्तकानुगुणः पाठः |
|---|---|---|
| 1 | .... | टि[1] I |
| 2 | .... | टि[2] I पूर्वमिति नास्ति |
| 2 | .... | टि 2 |
| 3 | 2 | व्य[3]र्थमित्यत आह— |
| 3 | .... | टि 4 त्युक्तिः स्पष्टार्था। |
| 4 | 5 | निरासाय वा प— |
| 4 | .... | टि 3, 4 |
| 4 | 10 | काङ्क्षोक्ता सेयं— |
| 5 | 4 | नद्याः कच्छसंस— |
| 7 | .. | टि 2 |
| 10 | .... | टि 2, 3, 4, 5. |
| 11 | 4 | शाब्दानुभवान्तरेति। |
| 12 | 8 | ह्यवाक्यस्थावान्त— |
| 13 | .... | टि 2, 3, 6. |
| 13 | 13 | न्तरे अन्वयानुभा— |
| 14 | 5 | वाक्ये पदग्रह— |

[1] 'टि' इत्यनन्तरं एकद्वित्र्यादि संख्याङ्कमात्रदर्शने "तस्मिन्पृष्ठे तत्तदङ्काङ्कितः पाठ एवाभिमत" इत्याकूतम्. [2] एतादृशस्थळे "तत्तदङ्काङ्कितस्थाने अयं पाठः" इत्यूहनीयम्. [3] असन्देहाय किंचित् पूर्वोत्तरभागावुभयतः कृत्वा पाठः प्रदृश्यते।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

| पृ. | पं. | 'मु' पुस्तकाभिमतः पाठः |
|---|---|---|
| 14 | 7 | द्वितीयादिग्रहः। |
| 17 | 8 | शङ्कापिना— |
| 19 | 3 | तद्भावे अस्त्यन्वय— |
| 20 | 4 | जलपदस्याश्रव— |
| ,, | 9 | भावाभावावुप— |
| 22 | 5 | संकेतस्मृति— |
| ,, | 13 | 'इयं चेति' इति नास्ति |
| 24 | .... | टि 3 |
| 25 | .... | टि 1 तास्वरूपोक्तिः। |
| ,, | .... | टि. 2. |
| ,, | 2 | मूहो वाक्यमित्येव पद्धतिनिर्देशात्तदनुरोधेन पूर्वं निर्देशोपि तथैवास्तीति यथा— |
| ,, | 9 | पक्षधराद्यभिहितदोषमप्याह— |
| ,, | 13 | पदार्थस्मृतेरव्य— |
| 26 | .... | टि 3. |
| ,, | 2 | अन्वयधीहेतोर्ज्ञातासत्तेरेव लिलक्षयिषितत्वेन तत्र ज्ञातहेतुपदार्थस्मृतित्वस्याभावात्। <u>न चेयमिति</u> |
| ,, | .... | टि 5. न तु ज्ञाता मानाभावात्। |
| ,, | .... | ,, 6, 7. |
| ,, | 10 | दण्डिप— |
| ,, | 11 | तावत्पदगो— |
| 27 | .... | टि. 1. |
| ,, | 3 | विशेष्येणानासन्नं— |
| ,, | .... | टि 2, 3, 4. |
| ,, | 13 | अव्यवहिता पदानां— |
| 28 | 4 | दृष्टार्थस्यैवानुमा— |
| ,, | ,, | 'तथाच' इत्यतः प्राक् "उच्चारणनिबन्धत्वात्पदत्वस्येति भावः" इत्यधिकम्. |

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

| पृ. | पं. | 'मु' पुस्तकाभिमतः पाठः |
|---|---|---|
| 28 | .... | टि. 4, 5. |
| 29 | 1 | वानन्वितवाचकपदादिप्र— |
| ,, | 10 | चरितत्वमिति— |
| ,, | .... | टि. 4 |
| 30 | 2 | लिपिर्लेखनम् । विशिष्ट— |
| ,, | .... | टि. 7 |
| 31 | 2 | षयोरभावात्— |
| ,, | 6 | वाध्ययन— |
| ,, | ,, | न्यथानर्थ— |
| 32 | 2 | हारश्च तन्त्रमित्ये— |
| ,, | .... | टि 4. |
| ,, | 10 | अस्मदिति नास्ति— |
| 34 | 9 | भावः । अनाप्तेति । पयसा सिञ्चतीत्यनाप्तवाक्य इत्यर्थः । एके— |
| 35 | 4 | शब्दवदाकाशमित्यत्राकाशस्य श— |
| 35 | .... | टि. 2, 4-[1] पं. न संभव— |
| 36 | 2 | तादृशधर्मो हि अग्नि— |
| 36 | .... | टि. 5. |
| 37 | .... | टि. 4. |
| ,, | .... | टि. 6, 5-णासत्त्वं संयोगस्याप्यव्याप्यवृत्तित्वनिमित्तमिति संयो— |
| 38 | 11 | व्याप्तिरिति तत्त्वग्रे नन्वि |
| ,, | .... | टि. 2, 3. |
| 39 | .... | ,,-5, 6, 7, 9. |
| ,, | 2 | अत्र 'गर्भ' पदं न. |
| 41 | 5 | योग्यताज्ञानसत्त्वेत्य— |

[1] योक्कः सन्निकृष्टः तस्यैव स पाठः संबद्धः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

| पृ. | पं. | 'मु' पुस्तकाभिमतः पाठः |
|---|---|---|
| 41 | .... | टि. 7 |
| 42 | .... | ,,–4, 9. |
| ,, | 2 | द्वितीय इत्यादिनो— |
| ,, | 10 | तथाच निश्चितायोग्यवाक्या— |
| 43 | 4 | ताज्ञानस्य हेतु— |
| ,, | .... | टि. 6–शाब्दासाधारण्यापत्तिः |
| 44 | 4 | अग्निमान्नित्यादिवाक्यादप्यर्थधीः स्यात् । ततश्च प्रवर्तेतापि पुरुषः । इत्यतो— "निराकाङ्क्षपदान्येव वाक्यमित्युच्यते बुधैः" । इति भक्तिपादान्तिमानुव्याख्यानसुधायामग्निनासिश्चेदित्यादौ योग्यताभावेप्यन्वयप्रतीतेरित्युक्तं हृदि कृत्वाह—अग्निनेति । |
| ,, | .... | टि. 4 |
| ,, | 8 | प्रामाण्यकमिति वान्वयः । अत |
| ,, | 11 | ण्डनावसाने उक्त— |
| 45 | 1 | ज्ञाने व्याति |
| ,, | 5 | शाब्दज्ञानतत्प्रमयोः हेतुत्वं स्यादित्य |
| ,, | 7 | स्वनुगतगुणभङ्ग इ— |
| 46 | .... | टि–3 |
| ,, | 11 | षवाक्यत्वरू— |
| 47 | .... | टि. 2, 5. |
| 48 | .... | ,, 1, 3, 4. |
| 49 | .... | ,, 4–के प्रतिबन्धकनाश्ये अ— |
| ,, | .... | ,, 7 |
| 50 | .... | ,, 2 |
| ,, | 2 | स्यादिति शेषः । कुतो— |
| ,, | 9 | नतन्नाशक इति— |
| 51 | 10 | रभावपदस्यैव प्र— |

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

| पृ. | पं. | 'मु' पुस्तकाभिप्रेतः पाठः |
|---|---|---|
| 52 | .... | टि. 5. |
| ,, | 8 | प्रतिवन्धकं प्रति वन्धकम् । |
| ,, | .... | टि. 7, 8, 9. |
| 54 | .... | ,, 1, 2. |
| 55 | .... | ,, 5, 4 त्यत्ताधि— |
| 56 | .... | ,, 5, 6, 7. |
| 57 | .... | ,, 5, 6, 7. |
| ,, | 3 | इति इति नास्ति. |
| ,, | 4 | " अन्योन्यानन्तरेति " इदं प्रतीकवन्न. |
| 58 | 3 | त्वरूपौय— |
| ,, | .... | टि. 5. |
| ,, | 10 | नुमेयत्वान्यथानुपपत्तेरन्यथोपपात्तिरूपं त्रे |
| 59 | .... | टि. 4 |
| 61 | .... | ,, 9 |
| 62 | .... | ,, 6 |
| 63 | .... | ,, 4 |
| ,, | 8 | संज्ञादीत्याह— |
| 64 | .... | टि. 2, 3, 5, 6, 7—त्वेन कारणत्वज्ञाने। सति मण्या-दीनां कारणीभू |
| 65 | .... | टि. 6, 7, 8 |
| ,, | 4 | विशिष्टविरोधित्वादि— |
| 66 | .... | टि. 3, 4 |
| 68 | 4 | स्योत्तरं व्यक्तिशब्देनत्यादि । |
| 69 | 4 | कर्तर्थाकप्र— |
| 70 | .... | टि. 3, 4. |
| 71 | 5 | तस्य प्रतिवन्धकस्याभावो— |
| ,, | .... | टि. 3. |
| ,, | 6 | स्वयं सिद्धान्तितं तत्स— |



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

